BIBLIOTHECA INDICA :
A
Collection of Oriental Works
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1184.

# ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRAHMAṆA
## OF THE WHITE YAJURVEDA,
WITH THE
## COMMENTARY OF SĀYAṆĀCĀRYA.




EDITED BY
ĀCĀRYA SATYAVRATA SĀMAŚRAMI.
*Lecturer of Sanskrit in the University of Calcutta,*

VOL. VI, FASCICULUS I.

CALCUTTA :
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1908.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

No, 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, London, W.*

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | Rs. | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S.V. Sāmasrami ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇdilya, (English) Fasc. 1 ... ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Acvavaidyaka. Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| *Ātharvana Upanishad, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga. Fasc. 1-3 @ 1/- each ... | 3 | |
| Bālam Bhaṭṭi, Vol I Fasc 1-2 , Vol II Fasc I @ /10/ ... ... | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 , Vol II Fasc I @ /10/ each ... | 2 | 8 |
| *Bhāmatī, Fasc 4-8 @ /10/- ... ... ... ... | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... ... ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/ ... ... ... ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... ... ... | 3 | 2 |
| Çatadusani, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7. II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmani, (Text) Vols. II, 1-25 ; III. Part I, Fasc. 1-18, Part II Fasc. 1-10 @ /10/ each ; Vol. IV, Fasc. 1-6 ... ... | 36 | 14 |
| Çlokavartika, (English) Fasc. 1-6 @ 1/4/ ... ... ... | 7 | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... ... | 5 | 10 |
| Ditto Ācvalāyan, Fasc 4-11 @ /10/ each ... ... | 5 | 0 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4 ; Vol. III, Fasc. 1-4. Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-3 ... ... | 1 | 14 |
| Gobhiliya Grihya Sutrum, Fasc. 4-12 @ /10/ ... ... ... | 5 | 10 |
| Kāla Viveka. Fasc. 1-7 ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... | 3 | 2 |
| Lalita Vistāra, (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpodyota, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... ... ... | 16 | 14 |
| Manutīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇdeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| * Ditto (Text) Fasc 5-7 @ /10/ ... ... ... | 1 | 14 |
| *Mimāmsā Darcaṇa, (Text) Fasc. 6-19 @ /10/ each ... ... | 8 | 12 |

# ॥ शतपथब्राह्मणम् ॥



॥ अथ ॥

## ॥ षष्ठकाण्डम् ॥

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथमं ब्राह्मणम् ॥

॥ अपिवा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥



॥ हरिः ॐ ॥

असद्वा ऽइद मग्र ऽआसीत्। तदाहुः किं तदसदासीदित्यृषयो वाव ते ऽग्रेऽसदासीत्तदाहुः के त ऽऋषय इति प्राणा वा ऽऋषयस्ते यत् पुरास्मात् सर्व्वस्मादिद मिच्छन्तः श्रमेण तपसारिषंस्तस्मादृषयः ॥ १ ॥

स योऽयं मध्ये प्राणः। एष एवेन्द्र*स्तानेष

* 'एवेन्द्र'—इति क।

प्राणान्मध्यत इन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्ध इन्धो ह वै त मिन्द्र इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्त ऽइद्धाः सप्त नाना पुरुषानसृजन्त * ॥ २ ॥

ते ऽब्रुवन् । न वा ऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितु मिमान्त्सप्त पुरुषानेकं पुरुषं करवामेति त ऽएतान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन् यदूर्ध्वं नाभेस्तौ द्वौ समौब्जन्यदवाङ् नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैक आसीत् ॥ ३ ॥

अथ यैतेषाꣳ सप्तानां पुरुषाणां श्रीः † । यो रस आसीत्त मूर्द्धꣳ समुदौहंस्तदस्य शिरो ऽभवद् यच्छ्रियꣳ समुदौहंस्तस्माच्छिरस्तस्मिन्नेतस्मिन् प्राणा अश्रयन्त तस्माद्वेवैतच्छिरोऽथ यत् प्राणा अश्रयन्त तस्मादु प्राणाः श्रियोऽथ यत् सर्व्वस्मिन्नश्रयन्त तस्मादु शरीरम् ॥ ४ ॥

स एव पुरुषः प्रजापतिरभवत् । स यः स

---

* '०सृजन्त'—इति ग, '०सृजन्त'—इति घ।

† 'श्रीः'—इति ग।

पुरुषः प्रजापतिरभवदय मेव स यो ऽय मग्नि-श्चीयते ॥ ५ ॥

स वै सप्तपुरुषो भवति । सप्त पुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छान्यथ यदेकेन पुरुषेणात्मानं व्वर्द्धयति तेन व्वीर्य्येणाय मात्मा पक्ष-पुच्छान्युद्यच्छति * ॥ ६ ॥

अथ यश्चिते ऽग्निर्निधीयते † । यैवैतेषाᳲ सप्तानां पुरुषाणाᳲ श्रीर्य्यो रसस्त मेतदूर्द्ध्वᳲ समुदू-हन्ति तदस्यैतच्छिरस्तस्मिन्नेतस्मिन्त्सर्व्वे देवाः श्रिता अत्र हि सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मा-द्वेवैतच्छिरः ‡ ॥ ७ ॥

सो ऽयं पुरुषः प्रजापतिरकामयत । भूया-न्त्स्यां प्रजायेयेति सो ऽश्राम्यत् स तपो ऽतप्यत स श्रान्तस्तेपानो ब्रह्मैव प्रथम मसृजत त्रयी मेव व्विद्याᳲ सैवास्मै प्रतिष्ठाभवत् तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति

* '०न्युद्यच्छति'—इति क ।

† '०ते'—इति ग । ‡ "०च्छिरः"—इति ग ।

प्रतिष्ठा ह्येषा यद् ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितो ऽतप्यत * ॥ ८ ॥

सो ऽपो ऽसृजत । व्वाच एव लोकाद्वागेवास्य सासृज्यत सेदꣳ सर्व्वमाप्नोद्यदिदं किञ्च यदाप्नोत् तस्मादापो यदवृणोत्तस्माद्वाः † ॥ ९ ॥

सो ऽकामयत ‡ । आभ्यो ऽद्भ्यो ऽधि प्रजायेयेति सो ऽनया त्रय्या व्विद्यया सहापः प्राविशत् तत आण्डꣳ समवर्त्तत तदभ्यमृशदस्त्वित्यस्तु भूयो ऽस्त्वित्येव तदब्रवीत् ततो ब्रह्मैव प्रथम मसृज्यत त्रय्येव व्विद्या तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रथमज मित्यपि हि तस्मात् पुरुषात् ब्रह्मैव पूर्व्व मसृज्यत तदस्य तन्मुख मेवासृज्यत तस्मादनूचान माहुरग्निकल्प इति मुखꣳ ह्येतदग्नेर्यद् ब्रह्म § ॥ १० ॥

अथ यो गर्भो ऽन्तरासीत् ‖ । सो ऽग्निरसृज्यत ¶

---

* 'ऽतप्यत'—इति ग ।

† 'तस्माद्वाः'—इति ग ।

‡ 'ऽकामयत'—इति क, ख ।

§ "ब्रह्म'—इति क, ख । 'ब्रह्म'—इति ग । 'ब्रह्म'—इति घ, ङ ।

‖ '०रासीत्'—इति ग । '०रासीत्'—इति घ ।

¶ 'सोऽग्निरसृज्यत'—इति ङ-पुस्तकमात्रे ; दृष्टं च डा०-वेबरमहोदयेनापि ।

स यदस्य सर्व्वस्याग्र मसृज्यत तस्मादग्रिरग्रिर्ह * वै त मग्निरित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यदश्रु संक्षरित मासीत् सोऽश्माभवद-श्रुह वै त मश्म इत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यद्रसदिव स रासभोऽभवदथ यः कपाले रसो लिप्त आसीत् सोऽजोऽभवदथ यत् कपाल मासीत्सा पृथिव्यभवत् † ॥ ११ ॥

सोऽकामयत ‡ । आभ्योऽद्भ्योऽधीमां प्रज-नयेय मिति ताꣳ सङ्क्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ् रसोऽत्यक्षरत्स कूर्मोऽभवदथ यदूर्ध्व मुदौ-क्ष्यतेदं तद्यदिद मूर्ध्वं मद्भ्योऽधि जायते सेयꣳ सर्व्वाप एवानुव्यैत्तदिद मेक मेव रूपꣳ समदृश्यताप एव § ॥ १२ ॥

सोऽकामयत । भूय एव स्यात् प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत स श्रान्तस्तेपानः फेन

* 'तस्मादग्निरग्निर्ह' इति ङ ।

† 'भवत्'—इति ग ।

‡ 'ऽकामयत'—इति ग, घ ।

§ 'एव'—इति ग ।

मसृजत सोऽवेदन्यद्वा ऽएतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदꣳ शुष्कापमूष-सिकतꣳ शर्करा मश्मान मयो हिरण्य मोषधिवन-स्पत्यसृजत तेनेमां पृथिवीं प्राच्छादयत् ॥ १३ ॥

ता वा ऽएता नव सृष्टयः । इय मसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयꣳ ह्यग्निरस्यै हि सर्व्वो ऽग्निश्चीयते * ॥ १४ ॥

अभूद्वा ऽइयं प्रतिष्ठेति । तद् भूमिरभवत्ता मप्रथयत् सा पृथिव्यभवत् सेयꣳ सर्व्वा कृत्स्ना मन्यमानागायद् यदगायत् तस्मादियं गायत्र्यथो आहुरग्निरेवास्यै पृष्ठे सर्व्वः कृत्स्नो मन्य-मानो ऽगायद्यदगायत्तस्मादग्निर्गायत्र इति तस्मादु हैतद्यः सर्व्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते † ॥ १५ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

---

* '०श्चीयते'—इति क, ख । '०श्चीयते'—इति ग, ङ ।

† 'रमते'—इति क, ङ; 'रमते'—इति ग ।

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

हिरण्यगर्भकर्त्तृकैव सृष्टिराम्नाता—"असद्वा इद मग्र आसीदिति *। 'अग्रे' प्रपञ्चसृष्टेः पुरा 'इदं' जगत् 'असद्' अव्यक्तनामरूपम् 'आसीत्'। श्रुतिः स्वय मेव ब्रह्मवादिविचारमुखेन असदर्थं निरूपयति— "तदाहुः किं तदासीदिति। 'तत्' तदानीं 'किम् असद् आसीत् इति' इदानीन्तनानां ब्रह्मवादिनां विचारः। 'अग्रे' सृष्टेः पुरा 'असत्' 'ते' प्रसिद्धाः 'ऋषयो वाव' ऋषय एव 'आसीत्'।

---

* इहैवोपरिष्टात् (१०. ६. ५ = ह० उप० २ ब्रा०) पुनरिद माम्नायते—"नैवेह किञ्चनाग्र आसीत्, मृत्युनैवेद मावृत मासीद्"—इत्यादि।

छान्दोग्यब्राह्मणे त्वेवं श्रुतम्—"सदेव सोम्येद मग्र आसीत्, एक मेवाद्वितीयम्। तद्धैक आहुः। असदेवेद मग्र आसीदेक मेवाद्वितीयम्। तस्मादसतः सज्जायेत। १। कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथ मसतः सज्जायेतेति। सत्त्वेव सोम्येद मग्र आसीदेक मेवाद्वितीयम्। २। तदैक्षत बहु स्याम् प्रजायेयेति, तत् तेजोऽसृजत"—इत्यादि ८ प्र० २ ख० १—४।

एव मार्षाभ्याम्नाये चैवमाद्यर्थः पर्यालोच्याः—
"नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमा परो यत्।
कि मावरीवः कुह कस्य शर्म्मन्नम्भः कि मासीद् गहनं गभीरम्॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥
—इत्यादयः ऋ० सं० १०, १२९, १—७।

ऋषिशब्दार्थं प्रश्नोत्तराभ्या माह— "तदाहुः के त ऋषय इतीति। 'ऋषयः प्राणा वै' अतः सृष्टेरग्रे एव 'असत्' केवल-लिङ्गशरीर मेवासीदित्यर्थः। प्राणाना मृषिशब्दवाच्यत्वे प्रवृत्ति-निमित्त' दर्शयति— "ते यत्पुरेति। 'यत्' यस्मात् कारणात् 'अस्मात्' जगतः 'पुरा' 'इदं' सर्वेव्यं जगत् 'इच्छन्तः' 'श्रमेण', 'तपसा' तपोरूपेण क्लेशेन पर्यालोचनेन 'आरिषन्' आर्षन्। "ऋषी गतौ" *, सर्वे गत्यर्था: ज्ञानार्थाः; ज्ञानवन्तः। 'तस्मात्' 'ऋषयः' इत्युच्यन्ते। "ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौप-मन्यवः"-इति हि यास्कः † ॥ १ ॥

मध्यमप्राणस्य सर्वेन्द्रियपोषणद्वारा इन्द्रशब्दवाच्यत्व माह— "स योऽय मिति। एतेषां प्राणानां 'मध्ये' 'यः' प्राणः, 'एष एव इन्द्रः' इत्युच्यते। तत्र प्रवृत्तिनिमित्तप्रदर्शनम्— "तानेष प्राणान्मध्यत इति। मध्यप्रदेशे स्थितः प्राणः 'इन्द्रियेण' इन्द्र-शब्दवाच्येन स्वबलेन 'ऐन्ध'। "ञि इन्धी दीप्तौ" ‡ लटि रूपम्। स्वबलप्रकाशेन स्वस्वव्यापारसमर्थानकरोदित्यर्थः। 'तस्मात्' इन्धनसम्बन्धात् 'इन्द्र इति' उच्यते; देवानां परोक्षनामप्रिय-त्वात्। प्राणस्य हि वागादीन्द्रियेषु स्वांशसद्भावः। एतस्यैव पोष-कत्वस्वाम्यत्राम्नातम्—

"या ते तनूर्वाचि प्रतिष्ठिता, या श्रोत्रे, या च चक्षुषि।
या च मनसि सन्तता, शिवां तां कुरु मोत्क्रमीः"-इति §।

'त इद्धाः प्राणाः सप्त', 'नाना' नानाविधान् 'पुरुषान्' शरीराणि स्वाश्रयत्वेन 'असृजन्त' ॥ २ ॥

---

* तु० प० ६ धा०। † निरु० २. ३. २।
‡ रु० आ० १० धा०। § अथ० प्र० उप० २. १२।

"तेऽब्रुवन्निति। 'ते' ऋषयः एकैकस्वस्वाश्रयप्रधानानि सप्त शरीराणि सृष्ट्वा परस्परम् 'अब्रुवन्'। 'इत्थम्' एकैकप्रधानशरीराः 'सन्तः' अचाक्षुष भिन्नं स्थूलं जगदुत्पादयितुं 'न शक्ष्यामः' न समर्था भवामः; अचक्षुषो वचनव्यापाराभावात्, अवचनस्य च दर्शनाभावात्। एव मिन्द्रियाणां प्रतिनियतव्यापारत्वाद् भिन्नशरीरत्वे कर्मकर्तृत्वं नोपपद्यत इति। अतः 'एकं पुरुषं' सर्वेन्द्रियाश्रयं 'करवामेति' समालोच्य, 'एतान् सप्त पुरुषान्' 'एकम्' एव 'पुरुषम्' 'अकुर्वन्' अकार्षुः।

एकस्मिन् पुरुषे सप्तपुरुषसन्निवेशं दर्शयति— "यदूर्ध्व मिति। 'नाभेरूर्ध्वम्' 'यत्' अस्ति, तत्र 'द्वौ' पुरुषौ 'समौजन्'। "उज आर्जवे", "अर्जने"–इति केचित् *। अर्जितवन्तः, स्थापितवन्तः। 'नाभेः' 'अवाङ्' अधस्तनम्, तत्र 'द्वौ' पुरुषौ समौजन् इति मध्ये देहे चत्वारः पुरुषाः सम्पन्नाः। द्वौ पुरुषौ दक्षिणोत्तरपक्षौ सम्पन्नौ। 'एकः पुरुषः' 'प्रतिष्ठा' पुच्छ मासीत्। एवं सप्तभिः पुरुषैः शिरोवर्जितस्य एकपुरुषस्य निष्पादनम् ॥ ३ ॥

शिरसो जननं दर्शयति— "अथ यैतेषा मिति। 'एतेषां' पुरुषाणां 'श्रीः' श्रीभूतः 'यः' 'रसः' सारः 'आसीत्', 'तम्' 'ऊर्ध्वम्' उपरिभागे 'समुदौहन्' समुदित मकार्षुः, स एकीभूतः सारः 'अस्य' पुरुषस्य 'शिरः अभवत्'; 'तस्मात्' श्रीसमुद्वहनात् 'शिरः'–इति शब्द-निष्पत्तिः। प्रकारान्तरेण शिरःशब्दनिर्वचन माह— "तस्मिन्निति। 'तस्मिन्' श्रीसमुद्वहनेन निष्पादिते शिरसि 'प्राणाः' चक्षुरादीन्द्रियाणि 'अश्रयन्त' श्रितानि,

* तु० प० २२धा०।

'तस्मात्' प्राणसंश्रयणात् 'शिरः' इत्युच्यते ; यस्माच्छिरसि 'प्राणा अश्रयन्त', 'तस्मात्' प्राणाना मपि श्रीत्वम्। "श्रिञ् सेवा-याम्"–इत्यस्मात् * व्युत्पत्तेः। 'यत्' यस्माच्च 'एतस्मिन्' सर्वस्मिन् देहे ते सर्वेऽपि 'अश्रयन्त', 'तस्मात्' देहोऽपि 'शरीरम्' उच्यते। अत्र पूर्वोक्ताद्धेतोः शरीरशब्दव्युत्पत्तिः कार्या ॥ ४ ॥

"स एव पुरुष इति। 'सः' एषः 'पुरुषः' सप्तभिर्निष्पन्न एकः पुरुषः 'प्रजापतिः' विराट् अभूत्। एवं लिङ्गशरीराभि-मानिहिरण्यगर्भकर्तृका विराडुत्पत्तिरुक्ता। तस्य विराजोऽग्नि-रूपता माह— "स यः पुरुष इति। 'स प्रजापतिः' एव 'अयं' चीयमानः 'अग्निः' इत्यर्थः ॥ ५ ॥

तदेव साम्य माविःकरोति— "स वै सप्तेति। 'सः' चीय-मानः अग्निः सप्तपुरुषसम्मितो भवति, 'हि' यस्मात् 'अयं पुरुषः' प्रजापतिः सप्तपुरुषात्मकः। तस्य सप्तपुरुषात्मकत्व मिदानी मुक्तम्, तच्चीयमानाग्नावपि स्फोरयति †— "यश्चत्वार इत्यादिना। हिरण्मयः शकुनिः ब्रह्मनामेति पक्षित्वेन निरू-पणात् पुच्छशब्दव्यवहारः। चित्याग्नेः सप्तपुरुषीयपुच्छत्वं दशमे वक्ष्यते ‡। आपस्तम्बेनाप्युक्तम्— "तदु ह वै सप्तविध मेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निः"–इति §।

"अथ यदेकेनेत्यादेरय मर्थः— 'यद्' यस्मात् 'आत्मानं' मध्य-देशं पक्षपुच्छेभ्यः पुरुषत्रयसम्मितेभ्योऽपि 'एकेन पुरुषेण वर्द्ध-

---

* भ्वा० उ० ६७ धा०।

† 'स्फुर स्फुरणे' तु० प० १०६ धातोर्णिचि रूपम्।

‡ १० का० २ अ० २ ब्रा० ४ क० द्रष्टव्यम्।

§ आप० श्रौ० सू० १६. १७. १६।

यति', तस्मात् 'अय मात्मा' चतुःपुरुषसम्मितत्वात् स्वेन 'वीर्येण' 'पञ्चपुच्छात्' प्रयच्छति खलु ॥ ६ ॥

एवं विराडात्मकस्य सप्तपुरुषसम्मितस्य चित्याग्नेः शिरो दर्शयितु माह— "अथ यश्चितेऽग्निर्निधीयत इत्यादि। 'चिते' इष्टके, चितेऽग्नौ। 'अग्निः' आहवनीयोऽभिधीयते। 'या वा एतेषां सप्तानां पुरुषाणां श्रीः', 'यः' च 'रसः', स एवाय मग्नि-रित्यध्याहारः। 'एतद्' अस्मिंश्चित्याग्नौ 'तम्' आहवनीयम् 'ऊर्द्ध्वं समुदूहन्ति' चित्याग्नेरण्डात्मकत्वात् तत्र निधीयमान-स्याग्नेर्हिरण्यगर्भात्मत्व मित्यर्थः। एतच्चैतरेयिणः समामनन्ति— "एवं ह्येव बहृचा महदुक्थे मीमांसन्ते, एत मग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः"-इति।

आहवनीयस्य शिरोरूपत्व मिदानी माह— "तदस्यैतच्छिर इति। 'अस्य' चित्याग्नेः एषः आहवनीयः 'शिरः' इत्यर्थः। अत्र शिरःशब्दस्य प्रवृत्ति माह— "तस्मिन्नेतस्मिन् सर्वे देवाः श्रिता इति। 'तस्मिन्' शिरोरूपे आहवनीये सर्वे देवाः श्रिताः। अत्र कथं देवानां श्रयणम्? तदाह— "अत्र हीति। 'अत्र' अग्नौ 'सर्वेभ्यो देवेभ्यः' 'जुहृति', 'तस्मात्' अग्निः श्रपणा-श्रयत्वात् अस्य 'शिरः' इत्यर्थः ॥ ७ ॥

एवं विराडुत्पत्तिः, तस्यैव चित्याग्निरूपत्वं चोक्त्वा, तत्क-र्तृकां चयनोपयुक्तां सृष्टि माह— "सोऽय मिति। 'सः पुरुषः प्रजापतिः' एक एव सन् एवम् 'अकामयत' 'भूयान्' 'स्याम्' भवेय मिति। भवनम् उत्पत्तिः, अग्निना न घटत इति तदाह— 'प्रजायेय' स्वय मेवोत्पद्यमानो भवेयम् 'इति' काम-

'तस्मात्' प्राणसंश्रयणात् 'शिरः' इत्युच्यते ; यस्माच्छिरसि 'प्राणा अश्रयन्त', 'तस्मात्' प्राणाना मपि श्रीत्वम्। "श्रिञ् सेवा-याम्"-इत्यस्मात् * व्युत्पत्तेः। 'यत्' यस्माच्च 'एतस्मिन्' सर्वस्मिन् देहे ते सर्वेऽपि 'अश्रयन्त', 'तस्मात्' देहोऽपि 'शरीरम्' उच्यते। अत्र पूर्वोक्ताद्धेतोः शरीरशब्दव्युत्पत्तिः कार्या ॥ ४ ॥

"स एव पुरुष इति। 'सः' एषः 'पुरुषः' सप्तभिर्निष्पन्न एकः पुरुषः 'प्रजापतिः' विराट् अभूत्। एवं लिङ्गशरीराभि-मानिहिरण्यगर्भकर्तृका विराडुत्पत्तिरुक्ता। तस्य विराजोऽग्नि-रूपता माह— "स यः पुरुष इति। 'स प्रजापतिः' एव 'अयं' चीयमानः 'अग्निः' इत्यर्थः ॥ ५ ॥

तदेव साम्य माविःकरोति— "स वै सप्तेति। 'सः' चीय-मानः अग्निः सप्तपुरुषसम्मितो भवति, 'हि' यस्मात् 'अयं पुरुषः' प्रजापतिः सप्तपुरुषात्मकः। तस्य सप्तपुरुषात्मकत्व मिदानी मुक्तम्, तच्चीयमानाग्नावपि स्फोरयति †— "यश्चत्वार इत्यादिना। हिरण्मयः शकुनिः ब्रह्मनामेति पक्षित्वेन निरू-पणात् पुच्छशब्दव्यवहारः। चित्याग्नेः सप्तपुरुषीयपुच्छत्वं दशमे वक्ष्यते ‡। आपस्तम्बेनाप्युक्तम्— "तदुह वै सप्तविध मेव चिन्वीत सप्तविधो वाव प्राकृतोऽग्निः"-इति §।

"अथ यदेकेनेत्यादेरय मर्थः— 'यद्' यस्मात् 'आत्मानं' मध्य-दिशं पक्षपुच्छेभ्यः पुरुषत्रयसम्मितेभ्योऽपि 'एकेन पुरुषेण वर्ह-

---

* भ्वा० उ० ८६७ धा०।

† 'स्फुर स्फुरणे' तु० प० १०६ धातोर्णिचि रूपम्।

‡ १० का० २ अ० २ ब्रा० ४ क० द्रष्टव्यम्।

§ आप० श्रौ० सू० १६. १७. १६।

यति', तस्मात् 'अय मात्मा' चतुःपुरुषसम्मितत्वात् स्वेन 'वीर्येण' 'पक्षपुच्छान्' प्रयच्छति खलु ॥ ६ ॥

एवं विराडात्मकस्य सप्तपुरुषसम्मितस्य चित्याग्नेः शिरो दर्शयितु माह— "अथ यश्चितेऽग्निर्निधीयत इत्यादि। 'चिते' इष्टके, चितेऽग्नौ। 'अग्निः' आहवनीयोऽभिधीयते। 'या वा एतेषां सप्तानां पुरुषाणां श्रीः', 'यः' च 'रसः', स एवाय मग्नि-रित्यध्याहारः। 'एतद्' अस्मिंश्चित्याग्नौ 'तम्' आहवनीयम् 'ऊर्द्ध्वं समुदूहन्ति' चित्याग्नेरण्डात्मकत्वात् तत्र निधीयमान-स्याग्नेर्हिरण्यगर्भात्मत्व मित्यर्थः। एतच्चैतरेयिणः समामनन्ति— "एवं ह्येव बह्वृचा महदुक्थे मीमांसन्ते, एत मग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः"–इति।

आहवनीयस्य शिरोरूपत्व मिदानी माह— "तदस्यैतच्छिर इति। 'अस्य' चित्याग्नेः एषः आहवनीयः 'शिरः' इत्यर्थः। अत्र शिरःशब्दस्य प्रवृत्ति माह— "तस्मिन्नेतस्मिन् सर्वे देवाः श्रिता इति। 'तस्मिन्' शिरोरूपे आहवनीये सर्वे देवाः श्रिताः। अत्र कथं देवानां श्रयणम्? तदाह— "अत्र हीति। 'अत्र' अग्नौ 'सर्वेभ्यो देवेभ्यः' 'जुह्वति', 'तस्मात्' अग्निः श्रपणा-श्रयत्वात् अस्य 'शिरः' इत्यर्थः ॥ ७ ॥

एवं विराडुत्पत्तिः, तस्यैव चित्याग्निरूपत्वं चोक्त्वा, तत्क-र्तृकां चयनोपयुक्तां सृष्टि माह— "सोऽय मिति। 'सः पुरुषः प्रजापतिः' एक एव सन् एवम् 'अकामयत' 'भूयान्' 'स्याम्' भवेय मिति। भवनम् उत्पत्तिः, चाग्निना न घटत इति तदाह— 'प्रजायेय' स्वय मेवोत्पद्यमानो भवेयम् 'इति' काम-

स्यात्' बहुधोत्पद्येतेति विचार्य ताभ्योऽङ्ग 'फेनं' सृष्टवान्। पुनरपि विदित्वा शुष्कार्द्रभावेन द्विविधां मृत्तिकां, 'सिकतं' वालुकाः, 'शर्कराः' अल्पपाषाणान्, 'अश्मानं' स्थूलपाषाणम्, 'अयः', 'हिरण्य'' सुवर्णम्, ओषधयश्च वनस्पतयश्च एकवद्भावात् नपुंसकम्— 'ओषधिवनस्पतीति। एतैः शुष्कार्द्रमृदादिभिर्नवभिः 'इमां' भूमि माच्छादितवान्॥ १३॥

"ता वा एता इति। 'एता एव' मृदादिभिर्नव सृष्टय एव 'इयम्' भूमिः। तस्मात् एतां 'त्रिवृदग्निः'-'इति' 'आहुः'। स्तोमिया-त्मकस्य स्तोत्रस्य त्रिवृदिति सञ्ज्ञा *, अत्र तु सङ्ख्यामात्रवाचि। अस्यां भूमौ अग्नेर्वासात् आधाराधेययोरभेदोपचारेण 'अस्यै' अस्याः 'अग्निः' 'इयं' नवसङ्ख्यात्मिका प्रतिष्ठा भूमिरिति॥ १४॥

उच्यते— "अभूद्वा इति। भवतेर्भूमिशब्दनिष्पत्तिः। तस्याः प्रथनात् बहुधा विस्तरणात् पृथिवीत्वम् †। प्रथेः षिवनि ‡ सम्प्रसारणेन पृथिवी शब्दनिष्पत्तिः। 'सेयम्' भूमिः 'कृत्स्ना' स्वयं सम्पूर्णाजनिष मिति 'मन्यमाना' 'गायत्' गान मकरोत्, अतो गानादेव भूमेर्गायत्रीत्वम्। तत्र भूमौ अग्निरपि स्वयं सम्पूर्णः स्थित इति मन्यमानोऽगायत्, अतस्तस्याप्यग्नेः गायत्र इति नाम सम्पन्नम्। "कै गै रै शब्दे" § अस्माद् गायत्रशब्दनिष्पत्तिः। अतः 'एतद्' इदानीं लोके 'यः' कश्चन पुरुषो धनपश्वादिभिः 'कृत्स्नः' अह मिति 'मन्यते', सः परकृते 'गीते' 'रमते वा' 'गायति

---

* ता० ब्रा० २ प्र० १ ख० त्रिवृत्स्तोमस्वरूपं द्रष्टव्यम्।

† अतएवाह यास्कः—"प्रथनात् पृथिवीत्याहुः—इत्यादि निरु० १. ४. २।

‡ "प्रथेः षिवन् सम्प्रसारणञ्च"—इति उ० १ पा० १४८ सू०।

§ भ्वा० प० ९१७ धा०।

वा' स्वयं गायति चेत्यर्थः। तस्मात् सम्पूर्णचेतनाभिमन्यमानाया भूमेरग्नेश्च गायत्रत्वं सम्पन्न मिति तात्पर्यम् ॥ १५ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥

———

( अथ द्वितीयं ब्राह्मणम् . )

सो ऽकामयत प्रजापतिः। भूय एव स्यात् प्रजायेतेति सो ऽग्निना पृथिवीं मिथुनꣳ समभवत्तत आण्डꣳ समवर्त्तत तदभ्यमृशत् पुष्यत्विति पुष्यतु भूयो ऽस्त्वित्येव तदब्रवीत् ॥ १ ॥

स यो गर्भो ऽन्तरासीत्। स वायुरसृज्यताथ यदश्रु सङ्क्षरित मासीत्तानि वयाꣳस्यभवन्नथ यः कपाले रसो लिप्त आसीत्ता मरीचयो ऽभवन्नथ यत् कपाल मासीत्तदन्तरिक्ष मभवत्* ॥२॥

सो ऽकामयत। भूय एव स्यात् प्रजायेतेति स वायुनान्तरिक्षं मिथुनꣳ समभवत्तत

* 'मभवत्'—इति ग ।

आण्डꣳ समवर्त्तत तदभ्यमृशद्यशो बिभृहीति ततो ऽसावादित्यो ऽसृज्यतैष वै यशो ऽथ यदश्रु सङ्क्षरित मासीत्सो ऽश्मा पृश्निरभवदश्रुर्ह वै त मश्मेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा अथ यः कपाले रसो लिप्त आसीत्ते रश्मयो ऽभवन्नथ यत् कपाल मासीत्सा द्यौरभवत् * ॥ ३ ॥

सो ऽकामयत। भूय एव स्यात् प्रजायेयेति स आदित्येन दिवं मिथुनꣳ समभवत् तत आण्डꣳ समवर्त्तत तदभ्यमृशद् रेतो बिभृहीति ततश्चन्द्रमा असृज्यतैष वै रेतो ऽथ यदश्रु सङ्क्षरित मासीत् तानि नक्षत्राण्यभवन्नथ यः कपाले रसो लिप्त आसीत् ता अवान्तरदिशो ऽभवन्नथ यत् † कपाल मासीत् ता दिशो ऽभवन् ॥ ४ ॥

स इमांल्लोकान्सृष्ट्वाकामयत। ताः प्रजाः सृजेय या म ऽएषु लोकेषु स्युरिति ॥ ५ ॥

स मनसा वाचं मिथुनꣳ समभवत् ‡। सो

---

* 'द्यौरभवत्'—इति ग। 'द्यौरभवत्'—इति घ।

† 'यः'—इति क, ख।

‡ 'समभवत्'—इति ग। 'समभवत्'—इति घ।

ऽष्टौ द्रप्सान् गर्भ्यभवत् तेऽष्टौ व्वसवो ऽसृज्यन्त तानस्या मुपादधात् ॥ ६ ॥

स मनसैव *। व्वाचं मिथुनꣳ समभवत् स एकादश द्रप्सान् गर्भ्यभवत् त ऽएकादश रुद्रा ऽसृज्यन्त तानन्तरिक्ष ऽउपादधात् ॥ ७ ॥

स मनसैव †। व्वाचं मिथुनꣳ समभवत् स द्वादश द्रप्सान् गर्भ्यभवत् ते द्वादशादित्या ऽसृज्यन्त तान्दिव्युपादधात् ॥ ८ ॥

स मनसैव ‡। व्वाचं मिथुनꣳ समभवत् स गर्भ्यभवत् स व्विश्वान्देवानसृजत तान्दिक्षूपादधात् ॥ ९ ॥

अथो ऽप्याहुः। अग्नि मेव सृष्ट्वं व्वसवो ऽन्वसृज्यन्त तानस्या मुपादधाद्वायुꣳ रुद्रास्तानन्तरिक्ष ऽआदित्य मादित्यास्तान्दिवि व्विश्वे देवाश्चन्द्रमसं तान्दिक्षूपादधादिति §॥ १० ॥

अथो ऽप्याहुः। प्रजापतिरेवेमाꣳल्लोकान्त्सृष्ट्वा

---

*, †, ‡ 'मनसेव'—इति ग।

§ '०दिति'—इति क। '०दिति'—इति ग।

पृथिव्यां प्रत्यतिष्ठत् तस्मा ऽइमा ओषधयो ऽन्न
मपच्यन्त तदाश्नात् स गर्भ्यभवत् स ऊर्ध्वेभ्य एव
प्राणेभ्यो देवानसृजत ये ऽवाञ्चः प्राणास्तेभ्यो
मर्त्याः प्रजा इत्यतो यत मथासृजत तथासृ-
जत प्रजापतिस्त्वेवेदꣳ सर्व्वं मसृजत यदिदं
किञ्च ॥ ११ ॥

स प्रजाः सृष्ट्वा *। सर्व्व माजि मित्वा
व्यस्रꣳसत तस्मादु हैतद्यः सर्व्व माजिमेति व्येव
स्रꣳसते तस्माद्विस्रस्तात् प्राणो मध्यत उदक्रामत्
तस्मिन्नेन मुत्क्रान्ते देवा अजहुः † ॥ १२ ॥

सोऽग्नि मब्रवीत्। त्वं मा सन्धेहीति किं
मे ततो भविष्यतीति त्वया माचक्षान्तै यो वै
पुत्राणाꣳ राध्यते तेन पितरं पितामहं पुत्रं पौत्र
माचक्षते त्वया माचक्षान्ता ऽअथ मा सन्धेहीति
तथेति त मग्निः समदधात् तस्मादेतं प्रजापतिꣳ
सन्त मग्निरित्याचक्षत ऽआ ह वा ऽएनेन पितरं

---

* 'सृष्ट्वा'—इति ग, 'सृष्ट्वा'—इति घ।

† 'अजहुः'—इति ग, 'अजहुः'—इति घ।

पितामहं पुत्रं पौत्रं पश्यति य एवं वेद ॥ १३ ॥

त मब्रवीत्। कस्मिंस्त्वोपधास्यामीति हित ऽएवेत्यब्रवीत् प्राणो वै हितं प्राणो हि सर्व्वेभ्यो भूतेभ्यो हितस्तद्यदेनᳪ हित ऽउपादधात् तस्माद्धोपधाय्याम्युपदधाम्युपाधा मिति ॥ १४ ॥

तदाहुः। किᳪ हितं कि मुपहित मिति प्राण एव हितं वागुपहितं प्राणे ह्ययं वागुपेव हिता प्राणस्त्वेव हित मङ्गान्युपहितं प्राणे ह्येमान्यङ्गान्युपेव हितानि * ॥ १५ ॥

सो ऽस्यैष चित्य ऽआसीत्। चेतव्यो ह्यस्या-सीत् तस्माच्चित्यश्चित्य उ एवायं यजमानस्य भवति चेतव्यो ह्यस्य भवति तस्मादेव चित्यः ॥ १६ ॥

तदेता वा ऽअस्य ताः †। पञ्च तन्वो व्यस्रᳪ-सन्त लोम त्वङ्माᳪ समस्थि मज्जा ता एवैताः पञ्च चितयस्तद्यत् पञ्च चितीश्चिनोत्येताभिरेवैनं तत् तनूभिश्चिनोति यच्चिनोति तस्माच्चितयः ॥ १७ ॥

---

* 'हितानि'—इति ग, 'हितानि'—इति घ।

† 'ताः'—इति ग, 'ताः'—इति घ।

स यः स प्रजापतिर्व्यस्रꣳसत । संव्वत्सरः सो ऽथ या अस्यैताः पञ्च तन्वो व्यस्रꣳसन्त ऽर्त्तवस्ते पञ्च वा ऽऋतवः पञ्चैताश्चितयस्त-द्यत् पञ्च चितीश्चिनोत्यृतुभिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः ॥ १८ ॥

स यः स संव्वत्सरः प्रजापतिर्व्यस्रꣳसत । अय मेव स व्वायुर्यो ऽयं पवते ऽथ या अस्य ता ऋतवः पञ्च तन्वो व्यस्रꣳसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्यत् पञ्च चिती-श्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्मा-च्चितयः * ॥ १९ ॥

अथ यच्चिते ऽग्निर्निधीयते । असौ स आदित्यः स एष एवैषो ऽग्निश्चित एतावन्नु तद्यदेन मग्निः समदधात् ॥ २० ॥

अथो आहुः । प्रजापतिरेव व्विस्रस्तो देवा नब्रवीत् सं मा धत्तेति ते देवा अग्नि मब्रुवंस्त्वयीमं पितरं प्रजापतिं भिषज्यामेति स वा ऽअह मेत-

* '०चितयः'—इति क, ख ।

ऽभिगत्य सर्व्वमिममेव विशानीति तथेति तस्मादेतं प्रजापतिꣳ सन्त मग्निरित्याचक्षते ॥ २१ ॥

तं देवा अग्नावाहुतिभिरभिषज्यन्। ते यां-यामाहुति मजुहवुः सा-सैनं पक्वेष्टका भूत्वाप्यपद्यत तद्यदिष्टात् समभवंस्तस्मादिष्टकास्तस्मादग्निरिष्टकाः पचन्त्याहुतीरेवैनास्तत् कुर्व्वन्ति* ॥२२॥

सो ऽब्रवीत्। यावद्यावद्वै जुहुथ तावत् तावन्मे कं भवतीति तद्यदस्मा ऽइष्टे कमभवत् तस्मादिष्टकाः ॥ २३ ॥

तद्ध स्माहाकाय्यः। य एव यजुष्मतीर्भूयसीरिष्टका विद्यात् सो ऽग्निञ्चिनुयाद्भूय एव तत् पितरं प्रजापतिं भिषज्यतीति † ॥ २४ ॥

अथ ह स्माह ताण्ड्यः। क्षत्रं वै यजुष्मत्य इष्टका विशो लोकम्पृणा अत्ता वै क्षत्रियो ऽन्नं विडन्नवा ऽअत्तुरन्नं भूयो भवति

---

* 'कुर्व्वन्ति'—इति ग।

† 'भिषज्यतीति'—इति क। 'भिषण्यतीति'—इति ग। 'भिषण्यतीति'—इति घ।

तद्राष्ट्रꣳ समृद्धं भवति यद्देधते तस्माल्लोकम्पृणा एव भूयसीरुपदध्यादित्येतद्ध तयोर्व्वचो ऽन्यास्त्वेवात स्थितिः ॥ २५ ॥

स एष पिता पुत्रः * । यदेषो ऽग्निमसृजत तेनैषो ऽग्नेः पिता यदेत मग्निः समदधात्तेनैतस्याग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतं देवाः समदधुस्तेनैतस्य देवाः पितरः ॥ २६ ॥

उभयꣳ हैतद्भवति । पिता च पुत्रश्च प्रजापतिश्चाग्निश्चाग्निश्च प्रजापतिश्च प्रजापतिश्च देवाश्च प्रजापतिश्च य एवं व्वेद ॥ २७ ॥

स उपदधाति । तया देवतयेति व्वाग्वै सा देवताङ्गिरस्वदिति प्राणो वा ऽङ्गिरा ध्रुवा सीदेति स्थिरा सीदेत्येतदथो प्रतिष्ठिता सीदेति व्वाचा चैवैन मेतत् प्राणेन च चिनोति व्वाग्वा ऽग्निः प्राण इन्द्र ऐन्द्राग्नो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतच्चिनोतीन्द्राग्नी वै

* 'पुत्रः'—इति ग ।

सर्व्वे देवाः सर्व्वदेवत्यो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतच्चिनोति *॥ २८ ॥

तदाहुः । कस्मादस्या ऽअग्निश्चीयत ऽइति यत्र वै सा देवता व्यस्रᳫंसत तदिमा मेव रसेनानु व्यक्षरत्तं यत्र देवाः समस्कुर्व्वंस्तदेन-मस्या ऽएवाधि समभरन्त्सैषैकैवेष्टकेय मेवेयᳫं ह्यग्निरस्यै हि सर्व्वो ऽग्निश्चीयते सेयं चतुःस्रक्ति-र्हिंशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तय इष्टका भवन्ती माᳫं ह्यनु सर्व्वा इष्टकाः ॥ २९ ॥

तदाहुः । यदेव मेकेष्टको ऽथ कथं पञ्चेष्टक इतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत् किञ्चात्र मृन्मय मुपदधात्येकैव सेष्टकाथ यत् पशुशीर्षा-ण्युपदधाति सा पशविष्टकाथ यद्रुक्मपुरुषा ऽउप-दधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्ट-काथ यत् स्रुचा ऽउपदधाति यदुलूखलमुसले याः समिध आदधाति सा व्वानस्पत्येष्टकाथ यत् पुष्करपर्ण मुपदधाति यत् कूर्म्मं यद्दधि मधु

* '०चिनोति'—इति क ।

ह्रतं यत् त्रिस्नामात्र मुपदधाति मैत्राम्नं पञ्चमी-
ष्टकैवमु पञ्चेष्टकः ॥ ३० ॥

तदाहुः। कतरत इष्टकायाः शिर इति
यत उपस्पृश्य यजुर्व्वदतीत्यु हैक ऽआहुः स स्वय
मातृण्णाया एवार्द्धादुपस्पृश्य यजुर्व्वदेत्तथो हास्यैताः
सर्व्वाः स्वयमातृण्णा अभ्यावृत्ता भवन्तीति न
तथा कुर्यादङ्गानि वा ऽअस्यैतानि परूंषि यदि-
ष्टका यथा वा ऽअङ्गेऽङ्गे पर्व्वन पर्वञ्छिरः कुर्यात्
तादृक्तद्यो व्वाव चिते ऽग्निर्निधीयते तदेवैता-
सां सर्व्वासां शिरः ॥ ३१ ॥

तदाहुः। कति पशवो ऽग्ना ऽउपधीयन्त
ऽइति पञ्चेति न्वेव ब्रूयात् पञ्च ह्येतान् पशू-
नुपदधाति * ॥ ३२ ॥

अथो ऽएक इति ब्रूयात्। अविरितीयं वा
ऽअविरियं हीमाः सर्व्वाः प्रजा अवतीयमु वा
ऽअग्निरस्यै हि सर्व्वो ऽग्निश्चीयते तस्मादेक इति
ब्रूयात् ॥ ३३ ॥

---

* '०दधाति' —इति क।

अथो द्वाविति ब्रूयात्। असौ ऽद्भुतीयं चासौ चेमे द्वीमाः सर्व्वाः प्रजा अवतो यन्मृदियं तद्य- दापो ऽसौ तन्मृच्चापश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् ॥ ३४ ॥

अथो गौरिति ब्रूयात्। इमे वै लोका गौर्यद्धि किं च गच्छतीमांस्तल्लोकान् गच्छतीम ऽउ लोका एषो ऽग्निश्चितस्तस्माद् गौरिति ब्रूयात् ॥ ३५ ॥

तदाहुः। कस्मै कामायाग्निश्चीयत ऽइति सुपर्णो मा भूत्वा दिवं व्वहादित्यु हैक ऽआ- हुर्न तथा व्विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजा- पतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्देवानसृजतेतद्रूपं कृत्वा देवा अमृता अभवंस्तद्यदेवैतेन प्राणा अभ- वन्यत् प्रजापतिर्यद्देवास्तदेवैतेन भवति ॥ ३६ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

द्वितीयब्राह्मणे वाय्वन्तरिक्षादिसृष्टिः प्रजापतेश्चित्याग्निरूपता चोच्यते— "सोऽकामयतेति। भूमिसृष्टेरनन्तरं प्रजापतिरिदं जगदधिकं भवेदिति कामयित्वा 'अग्निना पृथिवीं' मिथुनत्वेन

समयोजयत्। तयोः संयोगेन 'अण्डं' जातम्। 'तद् अभ्यमृशत्' नानात्वेन पुष्टमवत्विति त्रिवार मण्ड मभिलक्ष्य प्रजापतिः 'अब्रवीत्' ॥ १ ॥

तत्राहुः— "स यो गर्भोऽन्तरासीदिति। यो गर्भोन्तर-जातः, स वायुत्वेन सृष्टः। अथ गर्भोदक-कपालत्सिरस-त-त्कपालानि त्रीणि च पश्चिमरीच्यन्तरिक्षलोकात्मकानि अभू-वन् ॥ २ ॥

"सोऽकामयतेत्यादेरय मर्थः--वाय्वन्तरिक्षयोर्मिथुनत्वेन सङ्गात् एकम् 'अण्डम्' उत्पन्नम्। तस्मात् आदित्य उत्पन्नः; स 'एषः' आदित्यो 'यशः', "यशो बिभृहि"–'इति' यशोरूपत्वेन धारणार्थं प्रजापतिना अण्डस्यावसृष्टत्वात् तत उत्पन्न आदित्यो यश इत्युच्यते। पूर्ववद् गर्भोदकादीनि त्रीणि मेघरश्मिद्यु-लोकात्मकानि जातानि। तदा 'पृश्निः' नानावर्णः, 'अश्मा' आकाशाच्छादको मेघः। अश्नोतेरश्म इति नैरुक्ताः * ॥ ३ ॥

अथ तृतीयपर्याये आदित्यद्युलोकयोर्मिथुनत्वेन गर्भः सम-जनि। तं प्रजापतिः 'रेतो बिभृहि'–'इति' रेतोरूपत्वेन धार-येति गर्भ मवसृष्टवान्। ततोऽण्डात् यत् इमाः सृष्टाः, अत एव तस्य रेतस्त्वम्। सुधास्रवणात् अत्रापि पूर्ववद् गर्भो-दककपालत्सिरसतत्कपालानि नक्षत्रावान्तरदिङ्महादिगात्म-कानि सम्पन्नानि ॥ ४ ॥

"स इमांल्लोकान्सृष्ट्वेत्यादि। पुनश्च प्रजापतिः एषु लोकेषु प्रजाः सृजेय मिति विचार्य स्वकीयवाङ्मनसोर्मिथुनीभवनेन स्वय मष्टद्रप्सरूपगर्भवानभवत्, ततोऽष्टभ्यो द्रप्सेभ्यः अष्टौ वसवः

* निघ० ३. १०. ५, ८ द्रष्टव्यम्।

समभवन्; ताः। 'तान्' वसून् 'अस्यां' भूमौ 'उपादधात्' निहित-वान्। पुनश्च वाङ्मनसोः युग्मेन एकादश रुद्रान् सृष्ट्वा, तान् अन्तरिक्षे स्थापितवान्। द्वादशादित्यांश्च सृष्ट्वा तान् द्युलोके उपदधाति। विश्वान् देवान् दिक्षु निहितवान् ॥ ५—९ ॥

अत्र केचिद् वसुरुद्रादित्यविश्वेदेवाना मुत्पत्ति मग्निपूर्वां दर्शयति— "अथो आहुरग्नि मेव सृष्टं वसवोऽन्वसृज्यन्तेति। 'इति'-शब्द एकीयपक्षसमाप्त्यर्थः ॥ १० ॥

"अथो आहुः प्रजापतिरेवेत्यादेरय मर्थः— 'अथो' अपरे ब्रह्म-वादिनः एवम् 'आहुः'। 'प्रजापतिरेव' लोकत्रयं 'सृष्ट्वा', 'पृथिव्यां' प्रतिष्ठितः सन् पक्वाः अन्नरूपा ओषधीः प्राश्य 'गर्भी' भूत्वा 'सः' ऊर्द्ध्वेभ्यः 'प्राणेभ्यः' 'देवान्' सृष्टवान्, अवाचीनेभ्यः प्राणेभ्यः 'मर्त्याः प्रजा इति'। सृष्टौ यद्यपि प्रकारविशेषोऽस्ति, तथापि स्थावरजङ्गमात्मकस्य जगतः प्रजापतिसृष्टत्वं निश्चित मिति श्रुतिः स्वमतं निरूपयति— "अतो यतमथेति। येन प्रकारेण सृष्टवान्, तेनैव प्रकारेण सृष्टिरस्तु, सर्वात्मना प्रजापतिरेवेदं सर्वं मसृजदिति सत्य मित्यर्थः ॥ ११ ॥

अथैवं सर्वोत्पादकस्य प्रजापतेश्चित्याग्निरूपताम् * आख्या-यिकामुखेन दर्शयति— "स प्रजाः सृष्ट्वा सर्व माजि मित्वेति। 'सः प्रजाः सृष्ट्वा', 'सर्वम्' 'आजिम्' लक्ष्यम् प्रति एत्य, 'व्यस्रं-सत' विस्रस्तः। सृष्टिकरण मेवात्र लक्ष्यो ऽवधिः, तत्र च विस्रस्त इत्यर्थः। तस्मात् लोकेऽपि आजिधावनेन श्राम्यति जनः। तस्मात् श्रान्तात् पुरुषात् मध्यप्रदेशात् प्राणा उत्क्रान्ताः,

* सप्तमाष्टमकाण्डयोः प्रोक्त मग्निचयनप्रकरण मिह पर्यालोच्यम्।

'तस्मिन्' अपगते 'देवाः' इन्द्रियाणि 'अजहुः' त्यक्तवन्तः। "ओ हाक् त्यागे *॥ १२ ॥

"सोऽग्नि मब्रवीदिति। 'सः' प्रजापतिः 'अग्निम्' अवोचत्। हे अग्ने! 'त्वं' 'मां' मा 'सन्धेहि' उत्क्रान्तेन प्राणेन पुनः संहितं कुरु 'इति'। एवं प्रजापतिना उक्ते सति, अग्निः अब्रवीत्,— 'ततः' तत्प्राणसन्धानाद्धेतोः 'मे' मम 'किं भविष्यति?' 'इति'। हे अग्ने! 'त्वया' 'मा' माम् 'आचक्षते' आचक्षीरन्। चष्टेः पञ्चमलकारे रूपम्। यथा लोके 'पुत्राणां' मध्ये 'यो' 'राध्यते' विद्यया बलेन वा प्रसिद्धो भवति, 'तेन' एव पुत्रेण पितृपितामहा व्यवहरन्ति, तस्यायं पिता पितामह इति, तस्यायं पुत्रः पौत्र इति। तस्मात् पुत्रस्य तव नाम्ना ममापि व्यपदेशो भवतु। अतः सन्धेहीत्युक्तम्। 'अग्निः' 'तथा इति' अङ्गीकृत्य तं 'समदधात्'। अतोऽग्निना संहितत्वात् 'एतं' सर्वोत्पादकं 'प्रजापतिम्' एव सन्तिम् 'अग्निरित्याचक्षते' वेदवादिनः। वेदितुः फल माह— "आह वा एतेनेति। 'आङ्'-इत्युपसर्गः 'चष्टे'-इत्यनेन सम्बध्यते। 'ह वा'-इति निपातद्वय मेकार्थवाची॥ १३ ॥

सन्धानप्रकारं प्रश्नोत्तरेणाह— "स मब्रवीत् कस्मिंस्त्वोपधास्यामीतीति। हे प्रजापते! 'कस्मिन्' स्थाने 'त्वा' त्वाम् 'उपधास्यामि' 'इति' अग्नेः प्रश्नः। 'हित एव' मा सन्धेहि 'इति' उत्तरम्। हितशब्दार्थं माह "प्राणो वै हित मिति। प्राणस्य सर्वेभ्य इन्द्रियेभ्योऽतिशयितत्वात् हितत्वम्। तस्मिन् हितरूपे प्राणे 'अग्निः' प्रजापतिः समाहितवान्। पूर्वं मध्यतः

* धा० प० १० आ०।

प्राण उच्चक्राम, त मेव सन्धेहीति प्रजापतिनैवोक्तत्वात्। 'तस्मात्' इदानीन्तना अनुष्ठातारोऽपि चित्युपधानसमये उपदधातेः भूत-भविष्यद्वर्त्तमानप्रयोगं कुर्वन्ति। 'उपधास्यामि'—इति भविष्यतः प्रयोगः, 'उपदधामि'—इति वर्त्तमानस्य, 'उपाधाम्' इति भूतस्य ॥ १४ ॥

उपहितशब्दार्थं वक्तुं हितोपहितयोः स्वरूपं पृच्छति— "तदाहुः किं हित मिति। उपदधादिति उपधानस्याश मुपधेयं चोक्तम्, तत्र प्राणस्य हितत्वं दर्शितम्, 'उपहित मिति' वाच उच्यते, प्राणे वाच मुपहितवानित्यर्थः। उप-हितपदार्थस्यार्थान्तर माह— "अङ्गानीति। प्राणवति पुरुषे 'अङ्गानि' 'उपहितानि' सन्निहितानि भवन्ति। एवं प्रजा-पतेरग्निनामव्यपदेश्यत्व मुक्तम् ॥ १५ ॥

चित्यत्व मपि दर्शयति— "सोऽस्यैष इति। 'सः' प्रजा-पतिः 'अस्य' अग्नेः 'चित्यः' 'चेतव्यः' सन्धेयः, 'तस्मात्' स 'चित्यः' इति। इष्टकाचितिसम्बन्धादपि प्रजापतेश्चित्यत्व माह— "चित्य उ एवाय मिति। 'यजमानस्य' अपि 'अयम्' एव 'चेतव्यः' इष्टकाभिरुपधेयः। 'अस्य' यजमानस्य। कृत्यानां कर्त्तरि वा"—इति * षष्ठी ॥ १६ ॥

प्रजापतिर्व्यस्रंसतेति यदुक्तम्, तदिदानीं चितिसङ्ख्याप्रदर्श-नेन विशदयति— "तदेता वा अस्येति। विस्रंसनसमये 'अस्य' तस्य लोमत्वङ्मांसास्थिमज्जाख्याः 'पञ्च' चितयः, उत्तरोत्तरक्रमेण पञ्चकाख्यात्मना चेतव्याः। यस्मादग्नौ पञ्च चितीः 'चिनोति',

---

* पा० सू० २. ३. ७१।

'तस्मात्' पञ्चभिर्लोमादिभिरेव प्रजापतिं संहितवान् भवति। "चिञ् चयने"–इत्यस्मात् * चितिशब्दनिष्पत्तिः ॥ १७ ॥

"स यः प्रजापतिरित्यादेरय मर्थः— प्रजापतेः संवत्सरात्मनो विस्रंसनसमये पञ्चर्त्तव एव विस्रस्ताः। "हेमन्तशिशिरयोः समासेन"–इति † पञ्चसङ्ख्या। तथा सति पञ्चचितिचयनेन एवं संवत्सररूपं प्रजापतिं पञ्चभिर्ऋतुभिः संयोजितवान् भवति ॥ १८ ॥

प्रकारान्तरेण प्रशंसति— "स यः संवत्सरः प्रजापतिरिति। 'यः' संवत्सररूपः 'प्रजापतिः' विस्रस्तः, 'सः' 'अय मेव' पवमानो 'वायुः', तस्य 'दिशः' एव 'पञ्च' तन्वः। ऊर्ध्वदिक्सहिताः पञ्च महादिशः। ता एव विस्रस्ताः पञ्चचितिचयनेन 'एनं' वायुं प्रजापतिः पञ्चभिर्दिग्भिरेव चितवान् ॥ १९ ॥

एवं प्रजापतेश्चित्याग्निरूपता मभिधाय तस्योपरि निधीयमानस्याहवनीयस्याग्नेरादित्यरूपता माह— "अथ यश्चित इति। 'चिते' अग्नौ 'यः अग्निः' आहवनीयः 'निधीयते', 'सः' 'असौ आदित्यः'। "स एष एवेति, पुनःप्रदर्शनवचनम्। अत्र 'चित इति' सप्तम्यन्तं पदम्। प्रजापतेरग्निना सन्धानप्रकारं निगमयति— "एतावन्नु तदिति। 'अग्निः' 'एनं' प्रजापतिं 'समदधात्' इति × × × ॥ २० ॥

प्रजापतेर्देवैः समाधानप्रकार माह-- "अथो आहुः प्रजापरिरेवेति। पूर्वं प्रजायमानः प्रजाः सृष्ट्वा सर्वाजिधावनेन 'विस्रस्तः' सन् 'देवान् अब्रवीत्'। हे देवाः! 'मा सन्धत्त'

---

* स्वा० उ० ५ धा०

† ऐ० ब्रा० १. १. १।

'इति', 'ते' एव 'देवाः' 'अग्निम् अब्रुवन्'। हे अग्ने! 'त्वयि' सर्वेषां 'पितरं प्रजापतिं' 'भिषज्याम' सन्धानं करवाम 'इति'। अथ 'सः' अग्निरपि देवान् अब्रवीत्। हे देवाः! 'सः' 'अहम्' 'एतस्मिन् सर्वस्मिन्' जाते 'एव' अन्तर्-'विशानि' सर्वस्यान्तः-प्रविष्टो भवामीत्युक्तम्। 'तथा इति' देवा अङ्गीचक्रुः। यतो देवा अग्नौ प्रजापतिः भिषज्यितः, 'तस्मात्' एतस्य प्रजापते-रग्निनाम्ना व्यपदेशः ॥ २१ ॥

भैषज्यकरणप्रकारं दर्शयति— "तं देवा अग्नावाहुतिभि-रिति। 'तं' प्रजापतिम् आहुतिकरणेन समाहितवन्तः। अत्र या आहुतय इष्टाः, तास्ताश्चित्याग्निरूपप्रजापतिरिष्टका भूत्वा प्रतिपद्य प्रीयमाणाः स्युरित्यर्थः। इष्टकाशब्दस्य निर्वचनं दर्श-यति— "तद्यदिष्टादिति। इष्टात् होमात् जाता इतीष्टकाः, 'तस्मात्' इदानीन्तना अपि अनुष्ठातारः 'अग्निना इष्टकाः पचन्ति', तथा सति 'एनाः' इष्टकाः 'आहुतीरेव' कृतवन्तो भवन्तीत्यर्थः ॥ २२ ॥

इष्टकापदे 'इष्ट'-इति 'क'-इति च शब्दद्वयस्वरूपं दृश्यते, तत्र इष्ट-शब्दस्वरूपस्य निर्वाहं प्रदर्श्य 'क'-शब्दस्वरूपस्य प्रवृत्तिनिमित्तं दर्शयति— "सोऽब्रवीदिति। 'सः' प्रजापतिः देवान् 'अब्रवीत्' हे देवाः! युष्माभिरग्नौ 'यावद्यावद्' हुतम्, 'तावत्तावत्' 'मे' मम 'कं' सुखं 'भवति' 'इति'। तस्मात् 'इष्टे' होमे 'कं' सुखम् अभूत् अतः इति इष्टकानामनिरुक्तिः * ॥ २३ ॥

अथेष्टकाचयनयज्ञमन्त्रैरुपधेया इष्टका यजुष्मत्यः, ताश्चेतव्याः;

---

* "इष्टकास्तु तिस्रो विश्वज्योतिषः पृथगलक्षणास्ताभिर्लिखिताः (१६. ४. ४.)"—इत्यादिकात्यायनीयग्रन्थोऽत्र पर्यालोच्यः।

अवशिष्टेऽवकाशे लोकम्पृणेष्टकाः । "लोकम्पृण छिद्रं पृण"-इत्यादिना * मन्त्रेण उपधेया इष्टकाः लोकम्पृणाः । तत्र यजुष्मतीनां भूयस्त्वम्, लोकम्पृणाना मल्पत्वम्, 'शाण्डिल्य:' आचार्यो मन्यते, लोकम्पृणानां भूयस्त्वम् 'ताण्ड्यः' मन्यते ।

तत्र चोभयत्र द्वावप्युपपत्ती वर्णयित्वा तयोर्व्यपदेशेन तन्मतं प्रदर्शयन्ती श्रुतिः पश्चान्तरं दर्शयति— "तद्ध स्माह शाण्डिल्य इति । 'यः' पुरुषो 'यजुष्मतीः इष्टकाः भूयसीः' जानीयात्, 'सः' एव 'अग्निं चिनुयात्'; 'तत्' तथा सति 'पितरं प्रजापतिं' 'भूयः' अधिकं संहितवान् भवति, इत्यशाण्डिल्यमतम् ॥

"अथ हेति । "क्षत्रं वै यजुष्मत्य इत्यादि । यजुष्मतीनां क्षत्रत्वम्, क्षत्रियस्य यजुर्वेदोत्पन्नत्वात्; लोकम्पृणानां तु विट्त्वम् कामपूरकत्वात् । यथा लोके 'क्षत्तुः' क्षत्रियस्य अन्नरूपविशो बाहुल्ये राष्ट्रसमृद्धिर्भवति, तथा लोकम्पृणानां बाहुल्ये यजमानस्यानुष्ठान मेव समृद्धं भवतीति ताण्ड्यमतम् ॥

तदेतद् दूषयति— "एतदहेति । 'एतत्' उक्तं 'वचः' वचनमात्रम्, 'अन्या त्वेव अतः स्थितिः' इति श्रुतेः स्वमतप्रदर्शनम् । अनुष्ठानप्रकारार्थोऽत्र 'तु'-शब्दः, 'एव' वैलक्षण्यार्थः । अनुष्ठानप्रकारस्तु उत्तरत्र वक्ष्यते । प्रजापतेरग्निना देवैश्च सन्धाने कृते इत्यर्थः सम्पद्यते ॥ २४, २५ ॥

तं दर्शयति— "स एष पितेति । अग्नेः पितृत्वं पुत्रत्वं च भवति, देवाना मपि । तथैवोभयम् । प्रजापतिकृतत्वात् अग्नेर्देवानाञ्च पुत्रत्वम्; तैर्भिषज्यकरणात् तेषां प्रजापतिपितृत्वम् ॥ २६ ॥

---

* वा० सं० १५. ५६. १ ।

वेदितुः फल माह— "उभयं हैतद् भवतीति। 'यः' 'एवम्' अर्थं 'वेद', सः एतत् 'उभयं भवति, पितापुत्रात्मको भवतीत्यर्थः। पितृत्वं पुत्रत्वं च उभयत्र अग्निदेवपक्षे समानम्। तत्राग्निपक्षेऽयं विशेषः,— पिता प्रजापतिर्भवति, पुत्रोऽग्निर्भवति; अग्निः पिता भवति, सन्धायकत्वात्; प्रजापतिः पुत्रो भवति संहितत्वात्। देवपक्षेऽप्येवं विशेषं दर्शयितुं "प्रजापतिश्च देवाश्चेत्युपन्यासः। "य एवं वेदेति। पितृरूपप्रजापतित्वम् पुत्ररूपाग्नित्वम्; पुत्रभूतप्रजापतित्वम् पितृभूताग्नित्वञ्चेत्यादिक्रमेण सम्पद्यत इत्यर्थः॥ २७॥

पूर्वं प्रजापतेरग्निना सन्धानसमये वाचं प्राणे निहितवानित्युक्तम् "प्राण एव हितं वागुपहितम्"-इत्यादिना *, त मिष्टकोपधानमन्त्रेऽपि दर्शयति— "स उपदधाति तया देवतयेति। "तया देवतया अङ्गिरस्वद् ध्रुवा सीद"-इत्ययं मन्त्र इष्टकोपधाने समाम्नायते †। तत्र तच्छब्देन सर्वत्र प्रसिद्धा ऋगादिभिरुच्यमाना वाक् उच्यते, अङ्गिरःपदेन प्राणः ‡। हे इष्टके! 'तया' वाचा 'देवतया'। 'अङ्गिरस्वत्'-इति क्रियाविशेषणम्। प्राणयुक्तं यथा भवति तथा। "तसौ मत्वर्थे"-इति § त-सञ्ज्ञायां पदसञ्ज्ञानिबन्धनत्वाभावः। "ध्रुवा

---

* इहैव पुरस्तात् ( पृ० १६ पं० ७) द्रष्टव्यम्।

† "वायुष्टेऽधिपतिस्तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद"—इति वा० सं० १४. १४. ५।

‡ "सोऽयास्य अङ्गिरसोऽङ्गानां रसः, प्राणो वा अङ्गानां रसः" —इति शत० ब्रा० १४ का. ३ प्र. १ ब्रा. २१, २२, २३।

§ पा० सू० १. ४. १९।

सीदेति। "ध्रुवा" 'स्थिरा' सती 'सीद'। अतो यदनेनोपद-
ध्यात् तद् यजमानं वाक्प्राणाभ्यां चितवान् भवतीत्यर्थः *।

प्रकारान्तरेण वाक्प्राणौ प्रशंसति— "वाग्वा अय मग्नि-
रिति। "अग्नि र्वाग् भूत्वा मुखं प्राविशदितिश्रुतेः †। अत्र
वाचोऽग्नित्वम् प्राणस्येन्द्रत्वं प्रागुक्तम्। इन्द्राग्निदेवत्योऽग्नि-
श्चित्यनामक इत्यर्थः।

'यावान्' यत्परिमाणः 'अग्निः', 'यावती' यत्परिमाणा
'अस्य' अग्नेः 'मात्रा' शरीरम्, 'तावता' शरीरेण 'एनं'
चित्याग्निं 'चिनोति' चितवान् भवति। "तया देवतया"-
इतिमन्त्रेणोपधानेन वाक्प्राणाभ्याम् अग्नीन्द्ररूपाभ्याम् इन्द्राग्नि-
देवत्य मग्निं चितवानित्यर्थः। कथं नानादेवत्याग्नेरैन्द्राग्नत्व
मित्याशङ्क्य इन्द्राग्नी सर्वदेवतात्मना प्रशंसति— "इन्द्राग्नी वै
सर्वे देवा इति। "अग्निर्वै देवाना मवमो इन्द्रः परमस्तावन्त-
रेण अन्या देवताः, ता इन्द्राग्निभ्यां गृह्यन्ते"-इति तयोः

---

* "अन्तरिक्षस्य पृष्ठे अयं ज्योतिष्मान् वायुः"—इति अत्रैव प्रकरणे आम्नास्यते इत्येवोपरिष्टात् ८. ३. २. ३।

† "अग्निर्वाग् भूत्वा मुखं प्राविशद्,
वायुः प्राणो भूत्वा नासिके प्राविशत्,
आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्,
दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्,
ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्,
चन्द्रमा मनो भूत्वा हृदयं प्राविशन्,
मृत्युरपानो भूत्वा नाभिं प्राविशद्,
आपो रेतो भूत्वा शिश्नं प्राविशन्"
—इति ऐ० आ० २. ४. २. ४।

सर्वात्मकत्वात् तद्देवत्योऽग्निरित्यग्नमापि सर्वदेवत्यः। अतः 'अग्निः' 'यावान्' 'अस्य' अग्नेः 'यावती मात्रा', तस्य तावन्तं सर्वदेवत्य मग्निं "तया देवतया"-इति मन्त्रेण उपधानेन कृतवान् भवतीति ॥ २८ ॥

अथ भूमावेवेष्टकाचयनं कर्त्तव्य मित्यत्र कश्चित् प्रश्न मुपपादयति— "तदाहुः कस्मादिति। 'कस्मात्' हेतोः 'अस्यै' अस्याः भूमेरुपरि 'अग्निः चीयते' 'इति' प्रश्नः।

उत्तरम् ;— 'यत्र' यदा 'सा देवता' प्रजापतिः विस्रं 'व्यस्रंसत' विस्रस्तवान्, 'तत्' तत्र 'इमाम्' भूमिम् 'एव' 'रसेन' 'अनुव्यचरत्' सिक्तवान्। 'तम्' प्रजापतिविस्रस्तं 'यत्र' देवताः 'समस्कुर्वन्', 'तत्' तत्र अस्या मेव 'एनम्' अग्निं सम्भृतवन्तः। तस्माद् भूमावेव चयनं कर्त्तव्य मित्यर्थः ॥

तस्या इष्टकाया गुणं दर्शयति— "सैषैकैवेष्टकेति। भूमिर्दिगूपचतुस्रक्तियुक्तत्वात् इदानीन्तनैरनुष्ठातृभिरपि इष्टकाः चतुःस्रक्तयः कार्या इत्यर्थः ॥ २९ ॥

पञ्चचितिकोऽग्निरिति चयने पञ्चेष्टकाश्चेतव्या इति* प्रसिद्धिरस्ति, अत्र भूमिरूपैकैवेष्टकाभिहिता, कथं पञ्चेष्टका भव-

---

* "प्राणभृत उपदधाति, ०—०, एषोऽग्नेर्यत् प्रथमा चितिः। ०—०। अथ वैश्वदेवीरुपदधाति, एषा वै सा द्वितीया चितिः।०—०। अथ तृतीयां चिति मुपदधाति।०—०। चतुर्थीं चिति मुपदधाति। ०—०। अन्नं वै चतुर्थी चितिः।०—०। पञ्चमीं चिति मुपदधाति ०—०। अथ विराज उपदधाति"—इति पञ्चैव चितयोऽत्राष्टमे काण्डे प्रोक्ताः, इष्टकास्तु बहवस्ता अप्युपरिष्टादिहैव व्यक्तीभविष्यन्ति। "आपो वा इद मग्रे सलिल मासीत्, स एतां प्रजापतिः प्रथमां चिति मपश्यदित्यादिश्रुतयश्चेह पर्यालोच्याः। तै० सं० ४, ७, ५, ६।

न्तीति, त मिमं प्रश्नोत्तराभ्यां दर्शयति— "तदाहुर्यदेव मिति। पञ्चेष्टका अपि सम्पादयति। "इय मेव प्रथमेति। तत्र यत्किञ्चिन्मृन्मयपात्रादिक मुपदध्यात् सा मृन्मयीष्टका, पुरुषाश्वादिपञ्चपशुशीर्षोपधानेन पश्विष्टका। रुक्मं हिरण्मम्, तत्र पुरुषं स्वर्णनिर्मितं चोपदधाति; उपहिता इष्टका 'हिरण्यशकलैः प्रोक्षति'; अतोऽत्र हिरण्मसंस्पर्शादेषा हिरण्येष्टकेत्युच्यते। स्रुगाद्युपधानेन वानस्पत्येका; वनस्पतिविकारत्वात् स्रुगादीनाम्। पुष्करपर्णाद्युपधान मन्नेष्टका; तत्र दधिघृतादीना मन्नत्वात्। इति 'पञ्चेष्टकाः' चेतव्याः। तत्र मार्त्तिक्य इष्टका एका एव पश्वादिसम्बन्धा भवन्तीति तात्पर्यम् ॥ १० ॥

चितानां मिष्टकाना माहवनीयाग्निरेव शिर इति सिद्धान्तयितुं पूर्वपक्षं सोपपत्तिक माह— "तदाहुः कतरत इति। 'इष्टकायाः' 'कतरतः' कस्मिन् प्रदेशे 'शिरः' तिष्ठतीति प्रश्नः।

उत्तरम्;— 'यतः' यस्मिन् प्रदेशे इष्टकायाः 'उपस्पृश्य' 'यजुः' वदेत्, तदेव शिरः इति केषाञ्चिन्मतम्। उपस्पर्शनप्रदेशं च स स्वय मेवाह— "स स्वय मिति। 'स्वयमातृण्णायाः' अच्छिमच्छिद्रयुक्तायाः शिलायाः 'अर्वात्' समीपात् प्रदेशे 'उपस्पृश्य' 'यजुः' मन्त्रं 'वदेत्'। "तथो हास्येति। तथा सति शिर इष्टकाः 'स्वयमातृण्णाम्' 'अभि'-लक्ष्य 'आहृता भवन्ति' 'इति'।

तद् दूषयति— "न तथा कुर्यादिति। इष्टका इति यत् एतानि 'अस्य' अग्नेः 'अङ्गानि' 'परूंषि' पर्वाणि; तथा सति प्रतीष्टकं यजुरुपस्पर्शनेन शिरःकरणे प्रतिपर्व शिरः स्रुतवान् भवति, तच्चानिष्टम्, अतः स्वाभिमतं शिरो दर्शयति— "यो

वावेति। विलप्रदेशे 'अग्निः' आहवनीयो निहितो भवति, 'तदेव' 'एतासाम्' इष्टकानां 'शिरः' इति उच्यते ॥ ११ ॥

चयने पशुशीर्षोपधानात् अग्निरिष्टकेत्युक्तम्, तत्र पशूनां सङ्ख्याप्रतिवचनव्याजेन इष्टकानां लोकद्वयात्मकताम्, अग्नेः सर्वलोकात्मकताञ्चाह— "तदाहुः कति पशवोऽग्ना उपधीयन्त इतीति। कति पशवोऽग्नावुपधेयाः ? इति पृष्टे, 'पञ्च' 'इति' प्रतिवदेत्। पुरुषोऽश्वो गौरविरज इति पञ्च पशवः। मृदादिभिश्चित्यन्ते तासा मुपधीयमानोऽग्निः सर्वलोकात्मकः प्रजापतिरिति ॥ १२ ॥

पूर्वं अग्निरिष्टकापात्रं पशु मिति मत्वा पञ्चेति प्रतिवचनं दत्तम्, इदानीन्तु मृत्तिकोदकसम्पादनीयाना मिष्टकानां पशुरूपत्वं प्रश्नोत्तराभ्यां दर्शयति— "अथो एक इति। पूर्वं पञ्च पशव इत्युक्तम्, इदानी मविनामक एको वा पशुर्भवतीति प्रतिब्रूयात्। अविशब्दार्थ माह— "इय मिति। भूमिरेव सर्वप्रजापोषकत्वादविरित्युच्यते। अवतेरविशब्दनिष्पत्तिः। भूमिरेवेष्टकारूपा अग्निश्चित्यनामा; 'हि' यतः 'अस्यै' अस्यां भूमौ 'सर्वोऽग्निश्चीयते', 'तस्माद्' भूमिरेकत्वाद् 'एकः' अविनामा पशुरेवेत्यर्थः ॥ १३ ॥

यथा मृत्तिका इष्टकासाधनम्, एव मापोऽपि; तासां पशुत्व माह— "अथो द्वाविति ब्रूयादिति। 'द्वौ' अविनामानौ पशू 'इति 'ब्रूयात्'। अविशब्दार्थं निरूपयति— "इयञ्चासौ चेति। 'इयं' भूमिरेकोऽविः, 'असौ' द्युलोकोऽपरोऽविः; रक्षणवृत्तिभ्यां भूमिद्युलोकयोः सर्वपोषकत्वात् अवित्वम्। मृत्तिका इयं भूमिः, आपोऽसौ द्युलोकः; ततः सम्भवात् मृत्स्न-

सम्पाद्या इष्टकाः, श्रतो द्वावषी इति प्रति वदेत्। अत्र मृज्ज-यजुषोरविग्रहवाच्यत्वात् तयोर्लोकद्वयात्मकत्वं सिद्ध मित्यर्थः॥ २४॥

पशुत्वप्रतिवचनेन लोकद्वयात्मकेष्टकाचितस्याग्नेः सर्वलोकात्मकत्व माह— "श्रयो गौरिति प्रतिब्रूयादिति। "इमे वै लोका गौरिति। 'यद्धि किञ्च'-इत्यादिना गोत्वोपपादनम्। सर्वैर्गम्यमानेन लोका गौः। कर्मार्थे गमेर्डोप्रत्ययः। यतः चीयमानोऽग्निः सर्वलोकात्मकः, स चैकः, तस्माद् गौरेकः पशुरिति प्रतिवदेत्॥ २५॥

अग्निचयनस्य प्रजापतिभवन मेव न प्रयोजन मिति विवक्षुः पूर्वं प्रयोजनं पृच्छति— "तदाहुरिति। 'कस्मै' 'कामाय' प्रयोजनाय 'अग्निः' 'चीयते' इति फलप्रश्नः। तत्र फलान्तरं पूर्वपक्षयति— "सुपर्ण इति। चीयमानोऽग्निः 'सुपर्णः' पक्षी भूत्वा। अग्नेः पक्षिरूपत्वं ब्राह्मणे समाम्नातम् *। 'मा' मां चितवन्तं यजमानं 'दिवं' स्वर्गं 'वक्षात्' प्रापयेत् 'इति' केषाञ्चिन्मतं तन्निराकरोति— "न तथेति। 'एतद्रूपं' पक्षिरूपं 'कृत्वा' 'सप्त प्राणाः' प्रजापत्यात्मना सम्पन्नाः। 'प्रजापतिः' अपि तद्रूपधारी 'देवान्' सृष्टवान्। तेऽपि तदात्मना 'अमृतत्वम्' आददन्तः। तस्मात् प्राणसम्पादितप्रजापतिभवन मेव चयनस्य फल मित्यर्थः॥ २६॥ २॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम्॥

———

* अस्मिन्नेव द्वितीयब्राह्मणे प्रथमकण्डिकायां द्रष्टव्यम् (१५ पृ० ६ पं)।

( अथ तृतीयं ब्राह्मणम् . )

प्रजापतिर्वा ऽइदमग्र ऽआसीत् * । एक एव सो ऽकामयत स्यां प्रजायेयेति सो ऽश्राम्यत्स तपो ऽतप्यत तस्माच्छ्रान्तात्तेपानादापो ऽसृज्यन्त तस्मात् पुरुषात्तप्तादापो जायन्ते ॥ १ ॥

आपो ऽब्रुवन् † । क्व वयं भवामेति तप्यध्वमित्यब्रवीत्ता अतप्यन्त ताः फेनमसृजन्त तस्मादपां तप्तानां फेनो जायते ॥ २ ॥

फेनो ऽब्रवीत् ‡ । क्वाहं भवानीति तप्यस्वेत्यब्रवीत् सो ऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥ ३ ॥

मृदब्रवीत् § । क्वाहं भवानीति तप्यस्वेत्यब्रवीत् सातप्यत सा सिकता असृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृ-

---

* 'ऽआसीदेक'—इति क ।

† 'ऽब्रुवन्'—इति ग । 'ऽब्रुवन्'—इति घ ।

‡, § 'ऽब्रवीत्'—इति ग । 'ऽब्रवीत्'—इति घ ।

षन्ति सैकत मिवैव भवत्येतावन्नु तद्यत् क्वाहं भवानि क्वाहं भवानीति ॥ ४ ॥

सिकताभ्यः शर्करा मसृजत । तस्मात् सिकताः शर्करैवान्ततो भवति शर्कराया अश्मानं तस्माच्छर्कराश्मैवान्ततो भवत्यश्मनो ऽयस्तस्मादश्मनो ऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातꣳ हिरण्यसङ्काश मिवैव भवति ॥ ५ ॥

तद्यदसृज्यताक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वो ऽक्षरत्तैवाष्टाक्षरा गायत्र्यभवत् ॥ ६ ॥

अभूद्वा ऽइयं प्रतिष्ठेति । तद् भूमिरभवत्ता-मप्रथयत् सा पृथिव्यभवत् तस्या मस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संव्वत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥ ७ ॥

तद्यानि तानि भूतानि ऋतवस्ते ऽथ यः स भूतानां पतिः संव्वत्सरः सो ऽथ या सोषाः पत्न्यौषसी सा तानीमानि भूतानि च भूतानां च पतिः संव्वत्सर ऽउषसि रेतो ऽसिञ्चन्त्स संव्वत्सरे कुमारो ऽजायत सो ऽरोदीत् ॥ ८ ॥

तं प्रजापतिरब्रवीत् । कुमार किꣳ रोदिषि

यच्छ्रमात्तपसो ऽधि जातो ऽसीति सो ऽब्रवीदन-
पहतपाप्मा वा ऽहमस्म्यहितनामा नाम मे धेहीति
तस्मात् पुत्रस्य जातस्य नाम कुर्यात् पाप्मान
मेवास्य तदपहन्त्यपि द्वितीय मपि तृतीय मभिपूर्व्व
मेवास्य तत् पाप्मान मपहन्ति ॥ ९ ॥

त मब्रवीद्रुद्रो ऽसीति । तद्यदस्य तन्ना-
माकरोदग्निस्तद्रूप मभवदग्निर्वै रुद्रो यदरोदीत्
तस्माद्रुद्रः सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव
मे नामेति ॥ १० ॥

त मब्रवीत् सर्व्वो* ऽसीति । तद्यदस्य तन्नामा-
करोदापस्तद्रूप मभवन्नापो वै सर्व्वो† ऽद्भ्यो हीदꣳ
सर्व्वं जायते सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि
धेह्येव मे नामेति ॥ ११ ॥

त मब्रवीत् पशुपतिरसीति । तद्यदस्य तन्नामा-
करोदोषधयस्तद्रूप मभवन्नोषधयो वै पशुपति-
स्तस्माद्यदा पशव ओषधीर्लभन्ते ऽथ पतीयन्ति
सो ऽब्रवीज्ज्यायान्वा ऽअतो ऽस्मि धेह्येव मे
नामेति ॥ १२ ॥

---

*, † शर्वो—इति च का०-वेबरस्थपाठः ।

त मब्रवीदुग्रो ऽसीति । तद्यदस्य तन्नामाकरो-
द्वायुस्तद्रूप मभवद्वायुर्व्वा ऽउग्रस्तस्माद्यदा बलवद्वा-
त्युग्रो व्वातीत्याहुः सो ऽब्रवीज्ज्यायान्वा ऽअतो
ऽस्मि धेह्येव मे नामेति ॥ १३ ॥

त मब्रवीदशनिरसीति । तद्यदस्य तन्नामाकरो-
द्विद्युत्तद्रूप मभवद्विद्युद्वा ऽअशनिस्तस्माद्यं व्विद्यु-
द्धन्त्यशनिरवधीदित्याहुः सो ऽब्रवीज्ज्यायान्वा अतो
ऽस्मि धेह्येव मे नामेति ॥ १४ ॥

त मब्रवीद्भवो ऽसीति । तद्यदस्य तन्नामा-
करोत् पर्ज्जन्यस्तद्रूप मभवत् पर्ज्जन्यो वै भवः पर्ज्जन्या-
द्धीदꣳ सर्व्वं भवति सो ऽब्रवीज्ज्यायान्वा ऽअतो
ऽस्मि धेह्येव मे नामेति ॥ १५ ॥

त मब्रवीन्महान्देवो ऽसीति । तद्यदस्य तन्नामा-
करोच्चन्द्रमास्तद्रूप मभवत् प्रजापतिर्व्वै चन्द्रमाः
प्रजापतिर्व्वै महान् देवः सो ऽब्रवीज्ज्यायान्वा ऽअतो
ऽस्मि धेह्येव मे नामेति ॥ १६ ॥

त मब्रवीदीशानो ऽसीति । तद्यदस्य तन्नामा-
करोदादित्यस्तद्रूप मभवदादित्यो वा ऽईशान
आदित्यो ह्यस्य सर्व्वस्येष्टे सो ऽब्रवीदेतावान्वा

ऽस्मि मा मेतः परो नाम धा इति ॥ १७ ॥

तान्येतान्यष्टावग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥ १८ ॥

यद्वेवाष्टावग्निरूपाणि । अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रो ऽग्निरिति सोऽयं कुमारो रूपाण्यनुप्राविशन्न वा ऽअग्निं कुमार मिव पश्यन्त्येतान्येवास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनुप्राविशत् ॥ १९ ॥

त मेतꣳ संवत्सर ऽएव चिनुयात् । संवत्सरे ऽनुब्रूयाद्द्वयोरित्यु हैक ऽआहुः संवत्सरे वै तद्रेतो ऽसिञ्चन्त संवत्सरे कुमारो ऽजायत तस्माद्द्वयोरेव चिनुयाद्द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात् संवत्सरे ऽनुब्रूयाद्यदाव रेतः सिक्तं तदेव जायते तत्ततो विक्रियमाण मेव वर्धमानꣳ शेते तस्मात् संवत्सर ऽएव चिनुयात् संवत्सरे ऽनुब्रूयात्तस्य चित्रस्य नाम करोति पाप्मान मेवास्य तदपहन्ति चित्रनामानं करोति चित्रो ऽसीति सर्वाणि हि चित्राण्यग्निः ॥ २० ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१. ३.] ॥

तृतीयब्राह्मणे भवादीन्यष्टौ रूपाणि चयनोपयुक्तानि उच्यन्ते। ततः कुमारोत्पत्तिः। तस्याष्टौ नामानि, अष्टौ रूपाणि × × × "प्रजापतिरग्निरूपाण्यभ्यध्यायत्"–इति * वक्ष्यमाणपशु-विधानोपयोगीनि मन्तव्यम्। अथवा पुरुषादिपञ्चपशूनुपालभ्य संवत्सरपर्यन्त मुख्याग्निं धारयित्वा चयनाय दीक्षत इति वक्ष्यते †, तदर्थ मितिहासाख्यान मिति।

"प्रजापतिर्वा इद मिति। पुरुषात् उदकसृष्टिं लोकप्रसि-द्धाह— "तस्मात् पुरुषात् तस्मादापो जायन्त इति ॥ १ ॥

"आपोऽब्रुवन्निति। प्रजापतिना सृष्टाः 'आपः' 'क्व' प्रदेशे 'वयं' 'भवाम' तिष्ठाम 'इति' प्रजापतिम् 'अब्रुवन्'। ततस्तेन तपनं कुरुतेत्युक्ता 'अतप्यन्त'। ततः 'फेनं' सृष्टवन्तः ॥ २ ॥

"फेनोऽब्रवीदिति। तस्मात् फेनात् मृदुत्पत्तिः समुपपा-दयति— "एतद्वै फेन इति। उदकमध्ये वायुवशेन परिभ्रमणं प्लवन मेव फेनस्य तपःकरणम्। 'स यदा उपहन्यते', संहता भवति, तदा मृत्तिकैव भवति ॥ ३ ॥

"मृदब्रवीदिति। मृत्तिकायाः सिकताः। 'विकृषन्ति' भूमि-कर्षण मेव मृदस्तप इत्यर्थः। 'यद्यपि सुमात्स्नं विकृषन्ति' यथा मृत्तिका चूर्णीकृता भवति, तथा विकर्षणेन सा मृत् सिकता भवति ॥ ४ ॥

एतावत्पर्यन्तं "क्वाहं भवति"–इति प्रजापतिं प्रति उदक-फेनमृद्भिः वचनम्, इत उत्तरं नास्ति; अत एव पूर्वत्र त्रये "ताः फेन मसृजन्त"–"स मृद मसृजत"–"सा सिकता असृ-

* इतः परतने एव ब्राह्मणे ( ४ब्रा० १ क० ) द्रष्टव्यम्।
† एतदपीतः परतने एव ब्राह्मणे द्रष्टव्यम्।

जत"–इति यवादीनां स्रष्टत्व मुक्तम्, इत उत्तरं तदभावात् "सिकताभ्यः शर्करा मसृजतेत्यादौ प्रजापतेः स्रष्टृत्व मुच्यते।

"तस्मात् सिकता इति। 'अन्ततः' गमने 'सिकताः शर्करा भवन्ति'। 'अश्मा' पाषाणोऽपि अन्ततः शर्करा भवन्ति। 'तस्मात्' अश्मनः पाषाणात् 'अयः' उत्पादितवान्। अश्मनोऽयःकारणत्व मुपपादयति— "अश्मनो यो धमन्तीति। अयसो हिरण्यत्वं प्रतिपादयति— "बहुधा तं हिरण्यसङ्काश मिति ॥ ५ ॥

भूमेर्गायत्रीत्व मुपपादयितु माह— "तद्यदसृज्यताक्षरदिति। एव मबादिक मुत्तरोत्तरक्रमेण स्रष्टा अक्षरत्। तस्मात् क्षरणात् 'अक्षरम्'। 'अक्षरत्'–इति लङ्यडागमे रूपम्। अत्राडागमसाहित्येन अक्षरं सम्पन्नम्। यस्मात् प्रजापतिः अष्टौ क्षत्वाक्षरत्, सैवं संख्यासाम्यात् अष्टाक्षरा गायत्री सम्पन्ना ॥ ६ ॥

"अभूद्वा इयं प्रतिष्ठेतीति। 'इयम्' एव आद्यसृष्टिः सर्वेषां 'प्रतिष्ठा' 'अभूत्' 'इति' भूम्यात्मना सम्पन्ना, तस्या बहुधा प्रथनात् पृथिवीत्वम्।

अथ कुमारोत्पत्तिं दर्शयितु माह— "तस्या मस्यां प्रतिष्ठाया मिति। 'तस्यां' पृथिव्यां 'भूतानि भूतपतिः च' 'संवत्सराय' 'संवत्सरसाध्याय कर्मणे 'अदीक्षन्त' दीक्षां कृतवन्तः। दीक्षाकरणं यजमानपत्न्योः विहित मिति तौ दर्शयति— "भूतानाम्पतिर्गृहपतिरिति। तत्र भूतपतिः 'गृहपतिः' यजमानः 'आसीत्'। 'उषाः' उषोदेवता 'पत्नी' × × × ॥ ७ ॥

शब्दाना मर्थ माह— "तद् यानि तानि भूतान्यृतव इति। 'यानि भूतानि' श्रूयन्ते, तानि ऋतुवीर्याणि, ऋतुपतिः संवत्सरः। "सोषाः पत्नी"–इत्युक्तम्। 'सा' संवत्सरस्य यज-

मानरूपत्वात् 'श्रोषसी' उषसो भर्त्ता देव एव खलु भूयो-ऽवयवैः सहितः उपोनामपत्नीयुक्तः। संवत्सरो यजमानः स्वपत्न्या मुषसि रेतः सिक्तवान्, तत् सिक्तं रेतः संवत्सरान्ते कुमारात्मना जातम्। यद्वा संवत्सर इति सप्तम्यन्तं पदम्। संवत्सरपर्यन्तं रेतः सिक्तवान्, रेतस्सेकः सोऽसौ वत्सरः, कुमारोत्पत्तिरेकः, इति वर्षद्वयं जातम्। एतदेवाभिप्रेत्य द्वयोरिति उ हैक आहुः। "संवत्सरो वैतद् रेतोऽसिञ्चत् संवत्सरे कुमारो-ऽजायत"–इति वक्ष्यते।

उत्पन्नस्य कुमारस्य अष्टौ रूपाणि दर्शयितु माह— "सोऽ-रोदीत्, तं प्रजापतिरब्रवीदित्यादिना। हे 'कुमार' 'श्रमात् जातः' त्वं किमर्थं 'रोदिषि ?–'इति' प्रजापतिनोक्ते, स आह— 'अहितनामा' अकृतनामधेयः, अत एव 'अनपहतपाप्मा' 'अस्मि', अतः पापविमोचाय 'मे' मम नामधेयं कुरु इति।

प्रसङ्गात् किञ्चिद् धर्मं दर्शयति— "तस्मात् पुत्रस्येति। 'जातस्य पुत्रस्य' नक्षत्रनाम अश्वयुजः स्वातिः हस्तः इत्यादि 'नाम' नामकरणं 'कुर्यात्', तेन तस्य 'पाप्मान मेव' 'अपहन्ति' अपहतवान् भवति। पुनः 'द्वितीयं' व्यावहारिकं माता पुत्रादि-नाम करोति। 'तृतीयम्' आहिताग्निरिति। एवं नामकरणेन 'अस्य' पुत्रस्य 'पाप्मानम्' अपहतं कृतवान् भवति॥ ८, ९॥

एवं नामधेयाय प्रार्थितवतः कुमारस्य रुद्र-सर्वादीन्यष्टौ नामानि प्रदर्शयिष्यन्ते *। अग्नेः रुद्रात्मकत्वात् तदुचिता

---

* "अग्निं हृदयेन, अशनिं हृदयाग्रेण, पशुपतिं कृत्स्न-हृदयेन, भवं यक्ना। शर्वं मतस्नाभ्याम्, ईशानं मन्युना, महा-देव मन्तःपर्शव्येन, उग्रं देवं वनिष्ठुना"–इति वा० सं० ३९. ८।

अष्टौ मूर्त्तयो वक्तव्याः। रुद्रस्य हि पृथिव्यप्तेजोवाय्वाकाश-सूर्यचन्द्रयजमानाख्या अष्टौ मूर्त्तयः सन्ति, भवादिनामानि च। ता एव अन्ने: एष्वपि निरूपयिष्यन्ते।

तत्र प्रथमं नाम निर्दिशति— "त मब्रवीद्रुद्रोऽसीति *। अग्निरेव रुद्रो नामभागभवदित्यर्थः। यद्वा 'अग्निस्तद्रूप मभवत् रुद्रनामव्यपदेश्योऽग्निरित्यर्थः †।

अन्ने रुद्रत्व मुपपादयति— "यदरोदीदिति। अनेन तेजोमूर्त्तिरुक्तेति मन्तव्यम्। 'रुद्रः' रुद्रनामा 'सः' कुमारः प्रजापतिम् 'अब्रवीत्',— 'अतः' रुद्रनाम्नः ज्यायान् प्रवृद्धोऽस्मि, तस्मैतन्नाम नाल मित्यर्थः; अतो 'मे नाम' अन्यद् 'धेहि' कुर्वेवेति ॥ १० ॥

"त मब्रवीत् सर्वोऽसीतीति ‡। तस्य सर्व इति द्वितीयं नाम, तस्य असौ रूपम्। अपां सर्वत्व मुपपादयति— "आपो वै सर्व इति। 'वै'-शब्दद्योतितां युक्ति माह— "अद्भ्यो हीद मिति। अद्भ्यः सर्वं जगदुत्पद्यते। आपो वा इदं सर्वं विश्वा भूतानि "आपो वा इदमग्रे सलिल मासीत्" -इति §। अतो जलात्मत्वं च "सलिलं सर्व मा इदम्"-इत्यत्र ‖ श्रुतम्। "ज्यायान् वा अतोऽस्मिन् धेह्येव मे नामेतीति। तस्य प्रतिनामकारणं नाम्नातम्; एकस्य पुरुषस्य एक-

* "रुद्रः"—इत्यादि अथ० सं० १५. ५. ११, १०।
† "रुद्रो वा एषः यदग्निः"—इति तै० ब्रा० २. १. ३. १.।
‡ 'शर्वः'—इत्यादि अथ० सं० १५. ५. ५, ४।
§ तै० सं० ५. ६. ४; ७. ५; ७. १. ५; तै० ब्रा० १. १. ३. ५।
‖ ऋ० सं० १०. १२९. ३। तै० ब्रा० ५. २. ५, ६।

पद मेवानामान मयुक्त मिति पूर्वंपूर्वं नाम परिज्ञाय ततो-ऽप्यधिकं स्वसमवेतं गुणविशेष माविष्कर्त्तुं मन्यन्नामधेयं कार्य्य मित्यत्र दर्शयितु मिति मन्तव्यम् ॥ ११ ॥

"त मब्रवीत् पशुपतिरसीतीति *। "तद्यदस्येत्यादि। पशुपतिनामवाच्याः 'ओषधयः' 'अभवन्'। ओषधीनां पशुपोषक-त्वात् पशुपतित्वं युक्तम्। प्रकारान्तरेण पशुपतित्व मोषधीनां दर्शयति— "तस्माद् यदा पशव इति। यदा 'पशवः' 'ओषधीः' 'लभन्ते' अदन्ति, 'अथ' जग्धवन्तः पुष्टाः सन्तः 'पतीयन्ति' कामुकाः पतीनात्मनः कामयन्ते। 'तस्मात्' पशूनां पतीच्छा-साधनत्वात् ओषधीनां पशुपतित्व मित्यर्थः। अनेनाग्नेर्भूरूपत्व मुक्त मित्यनुसन्धेयम् ॥ १२ ॥

"त मब्रवीदुग्रोऽसीतीति †। उग्रशब्दवाच्यो वायुरित्यर्थः। वायोरुग्रत्वं लोकप्रसिद्ध्योपपादयति— "यदा बलवद् वातीति। "वा गतिगन्धनयोः" ‡ ॥ १३ ॥

"त मब्रवीदशनिरसीतीति। विद्युदशन्योः पतयित्वत्व माह— "तस्माद् यं विद्युदिति। आकाशे विद्युत्पतनात् विद्युच्छब्देनाकाशरूप मिति मन्तव्यम् ॥ १४ ॥

"त मब्रवीद् भवोऽसीतीति §। "पर्जन्यस्तद्रूप मिति। भवशब्दवाच्यः पर्जन्यः। तस्य भवत्व माह— "पर्जन्याद्धीद मिति। अनेन यजमानरूपत्व मुक्तम्। तस्य हि सर्वकाम-भावकत्वात् भवत्वम् ॥ १५ ॥

---

* "पशुपतिः"—इत्यादि अथ० सं० १५. ५. ७, ६।

† "उग्रः"—इत्यादि अथ० सं० १५. ५. ८, १८।

‡ अदा० प० ४० धा०।

§ "भवः"—इत्यादि अथ० सं० १५. ५. २, १।

"स मब्रवीत् महान् देवोऽसीतीति *। "प्रजापतिर्वै चन्द्रमा इति। चन्द्रमा मनसो जातः, मनसः प्रजापतिर्देवत्वम्, ततः कार्यकारणयोरभेदोपचारादेव युक्तम्। प्रजापतेर्महादेववाच्यत्वं सर्वलोकस्रष्टृत्वात् ॥ १६ ॥

"स मब्रवीदीशानोऽसीतीति †। आदित्यस्य ईशानशब्दवाच्यत्व माह— "आदित्यो ह्यस्य सर्वस्येति। इष्ट इतीशानः।

पूर्व मग्निना "धेह्येव मे नाम"-इति ‡ प्रार्थित एव प्रजापतिरस्याष्टौ नामानि व्यदधात्, अतः पर मग्निः स्वय मेव एतैर्नामभिः स्वकीयगुणस्य कार्त्स्न्येन प्रतिपादितत्वाभिप्रायेण नामान्तरकरणं निषेधति— "सोऽब्रवीदेतावान्वा अस्मीति। "मा मेतः परो नाम धा इति। 'इतः' एभ्योऽष्टभ्यो नामभ्यः 'परः' परस्तात् 'नाम' 'मा धाः' मा कुरु 'इति' ॥ १७ ॥

"तान्येतान्यष्टावग्निरूपाणीति। "कुमारो नवम इति। रुद्रादीन्यष्टौ नामानि, एतैर्नामवाच्यः 'कुमारो नवमः' नवसङ्ख्यापूरक इत्यर्थः। उक्तां नवसङ्ख्यां त्रिवृदात्मना प्रशंसति— "सैवाग्नेस्त्रिवृत्तेति। 'सा' पूर्वं युक्ता नवमसङ्ख्यैव 'अग्नेः' 'त्रिवृत्ता' त्रिवृत्त्वं नाम। उक्तरीत्या अग्नेर्नवधा विभेदः। उत्तरत्र "त्रिवृदग्निः"-इति व्यवहरिष्यते, तत्र सर्वत्र उक्तनवसङ्ख्यावत्त्वेन त्रिवृत्त्वं सम्पन्न मिति मन्तव्यम् ॥ १८ ॥

नामगता मष्टसङ्ख्यां गायत्र्यात्मना प्रशंसति— "यद्वेवाष्टावग्निरूपाणीति। अतोऽष्टनामवाच्यरूपाष्टकोपेतत्वादग्नेरपि गाय-

---

* "महादेवः"—इत्यादि अथ० सं० १५. ५. ११, १२।

† "ईशानः"—इत्यादि अथ० सं० १५. ५. १५, १४।

‡ इहैव पुरस्तात् १० क० (४१ पृ० ८ पं०) द्रष्टव्यम्।

तत्त्वं सम्यक् मित्यर्थः । "सोऽयं कुमारो रूपाणीति । 'कुमारः' अग्निः स्वनामभिः रुद्रसर्वादिभिरष्टभिः प्रतिपाद्यानि, अम्ब्वु-दकौषध्यादीनि अष्टौ रूपाणि अनुप्रविष्टवान् । स कुमारोऽग्निः तत्तद्रूपेभ्यः पृथग्भूतो न दृश्यत इति तात्पर्यम् ॥ १८ ॥

अथ संवत्सरपर्यन्त मुख्याग्निधारणं कर्त्तव्य मिति दर्शयितु माह— "त मेतꣳ संवत्सर एव बिभृयादित्यादि । 'संवत्सर एव' संवत्सरपर्यन्तं स्थित्वेत्यर्थः । प्रसङ्गात् कञ्चिद्धर्मं दर्शयति— "संव-त्सरेऽनुब्रूयादिति । वर्षपर्यन्तं गुरुसन्निधौ स्थित्वा अधीयत इति । "संवत्सरवासिने प्रब्रूयात्"—इत्यैतरेयकम् * । तत्र पक्षान्तरं दर्शयति— "द्वयोरित्यु हैक आहुरिति । केचित् संवत्सर-पर्यन्त मुख्य मग्निं धारयित्वा, ततः संवत्सरे चयनं कर्त्तव्य मित्याहुः †, अनुवचनञ्च तथा करणीय मिति वदन्ति । तत्रो-पपत्तिं दर्शयति— "संवत्सरे वैतद्रेत इति । पूर्वं-'संवत्सरे' 'रेतोऽसिञ्चन्', 'स संवत्सरे कुमारोऽजायत' इति रेतस्से-कास्यैको वत्सरः, कुमारोत्पत्तावेक इति वर्षद्वयस्य समाम्ना-तत्वादिति । प्रथमं पक्षं सहेतुकं सिद्धान्तयति— "संवत्सरे त्वेव बिभृयादिति । 'तु'-शब्दो वर्षद्वयपक्षनिवृत्त्यर्थः । रेतस्से-कानन्तर मेव कललबुद्बुदपिण्डादिक्रमेण वर्षात् प्रागेव कुमारो-त्पत्तेरित्यर्थः ‡ ।

---

* "नानन्तेवासिने प्रब्रूयात्, नासंवत्सरवासिने, नो एवासंव-त्सरवासिने, नाब्रह्मचारिणे, नासब्रह्मचारिणे, नो एवासब्रह्मचारिणे, नानभिप्रायाय"—इत्यादि ऐ० आ० ५. ३. ३ आ० ४ ।

† एतदेव पुरस्तादुक्तं भाष्ये 'वक्ष्यते'—इति ( ४४ पृ० ५ पं० ) ।

‡ "शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथ मिदं शरीरं

"तस्य चित्रस्य नामेति। चयनसम्बन्धि चित्रनाम सम्पन्न मिति तात्पर्यम्। चित्रत्व मस्योपपादयति— "सर्वाणि हि चित्राण्यग्निरिति। अग्न्युदकौषध्यादीनां रूपाणा मग्न्यात्मकत्वात् तस्य चित्रत्व मिति। किञ्च यद्यत् चित्रवर्णं तत्तत् सर्व मग्निरेव; शुक्लभास्वररूपत्वात् तस्येति ॥ २० ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

परं संयम्यते? सौम्यो भवति, एकरात्रोषितं कललं भवति, पञ्चरात्राद् बुद्बुदः, सप्तरात्रात् पेशी, द्विसप्तरात्रादर्बुदः, पञ्चविंशतिरात्रः स्वस्थितो घनो भवति, मासमात्रात् कठिनो भवति, द्विमासाभ्यन्तरे शिरः सम्पद्यते, मासत्रयेण ग्रीवाव्यादेशो, मासचतुष्केण त्वग्व्यादेशः, पञ्चमे मासे नखरोमव्यादेशः, षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति, सप्तमे चलनसमर्थो भवति, अष्टमे बुद्ध्याध्यवस्यति, नवमे सर्वाङ्गसम्पूर्णो भवति, ०—०, दशमे मासे प्रजायते"—इत्यादि निरु० १४. ६।

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः ,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मसृणः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्त्विङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

* अन्यया टीप्पण्यो पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

( अथ द्वितीयाध्याये प्रथमं ब्राह्मणम् . )

---

प्रजापतिरग्निरूपाण्यभ्यध्यायत्। स यो ऽयं कुमारो रूपाण्यनुप्रविष्ट आसीत्तमन्वैच्छत् सो ऽग्निरवेदनु वै मा पिता प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्म ऽएष न वेदेति ॥ १ ॥

स एतान् पञ्च पशूनपश्यत्। पुरुषमश्वं गामविमजं यदपश्यत्तस्मादेते पशवः ॥ २ ॥

स एतान् पञ्च पशून् प्राविशत्। स एते पञ्च पशवोऽभवत्तमु वै प्रजापतिरन्ववैच्छत् ॥ ३ ॥

स एतान् पञ्च पशूनपश्यत्। यदपश्यत्तस्मादेते पशवस्तेष्वेतमपश्यत्तस्मादेवैते पशवः ॥ ४ ॥

स ऐक्षत। इमे वा ऽअग्निरिमानेवात्मानमभिसंस्करवै यथा वा ऽअग्निः समिद्धो दीप्यत ऽएवमेषां चक्षुर्दीप्यते यथाग्नेर्धूम उदयत ऽएवमेषामूष्मोदयते यथाग्निरभ्याहितं दहत्येवं बप्सति यथाग्नेर्भस्म सीदत्येवमेषां पुरीषꣳ सीदतीमे वा ऽअग्निरिमानेवात्मानमभिसंस्करवा

ऽइति तान्नाना देवताभ्य आलिप्सत व्वैश्वकर्मणं पुरुषं व्वारुण मश्व मैन्द्र मृषभं त्वाष्ट्र मवि माग्नेय मजᳫं * ॥ ५ ॥

स ऐक्षत । नाना वा ऽइदं देवताभ्य आलिप्सेऽग्नेर्व्वहᳫं रूपाणि कामये हन्तैनानग्निभ्यः कामायालभा ऽइति तानग्निभ्यः कामायालभत तद्यदग्निभ्य इति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत् कामायेति कामेन ह्यालभत तानाप्रीतान् पर्य्यग्निकृतानुदीचो नीत्वा समज्ञपयत् ॥ ६ ॥

स ऐक्षत । या वै श्रीरभ्यधासिष मिमास्ताः शीर्षसु हन्त शीर्षाण्येवोपदधा इति स शीर्षाण्येवोत्कृत्योपाधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावयत्तेन यज्ञᳫं समस्थापयन्नेन्मे यज्ञो व्विकृष्टो ऽसदित्यात्मा वै यज्ञो नेन्मेऽय मात्मा व्विकृष्टो ऽसदित्येतेन पशुनेष्ट्वा तत् प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्य्यैत् † ॥ ७ ॥

---

* 'माग्नेयमजᳫं'—इति क । 'माग्नेयमजᳫं'—इति ग, घ ।

† 'पर्यैत्'—इति ग ।

स ऐक्षत । य मिम मात्मान मप्सु प्राविप्लवं त मन्विच्छानीति त मन्वैच्छत्तद्यदेषा मप्सु प्रविष्टानां प्रत्यतिष्ठत्ता अपः समभरदथ यदस्यां तां मृदं तदुभयꣳ सम्भृत्य मृदं चापश्चेष्टका मकरोत्तस्मादेतदुभय मिष्टका भवति मृच्चापश्च ॥ ८ ॥

स ऐक्षत । यदि वाऽइद मित्य मेव सदात्मान मभिसंस्करिष्ये मर्त्यः कुणपोऽनपहतपाप्मा भविष्यामि हन्तैतदग्निना पचानीति तदग्निनापचत्तदेनदमृत मकरोदेतद्वै हविरमृतं भवति* यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृता एवैनास्तत् कुर्वन्ति ॥ ९ ॥

तद्यदिष्ट्वा पशुनापश्यत् । तस्मादिष्टकास्तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्वन्त्यथो ह तदन्यदेव† ॥ १० ॥

तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितय-

* 'भवति'—इति ग, घ ।

† 'तदन्यदेव'—इति ग ।

स्तद्यत् पशुशीर्षाण्युपधाय चितीश्चिनोत्येतैरेव त-
च्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ११ ॥

त ऽएते सर्व्वे पशवो यदग्निः* । तस्मादग्नौ
पशवो रमन्ते पशुभिरेव तत् पशवो रमन्ते
तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयते
ऽग्निर्ह्येष यत् पशवस्ततो वै प्रजापतिरग्निर-
भवत् ॥ १२ ॥

तद्धैक ऽआहुः । अचेवैतैः सर्व्वैः पशुभि-
र्यजेत यद्वा ऽएतैरत्र सर्व्वैः प्रजापतिरयक्ष्यत
तदेवाग्नेरन्तं पर्य्यैष्यत्तद्यदेतैरत्र सर्व्वैर्यजेत तदे-
वाग्नेरन्तं परीयादिति न तथा कुर्याद् देवानां
तदितादियादथो पथस्तदियादथो किं ततः सम्भ-
रेदेतानि वा ऽएतत् कुसिन्धान्येताश्चितीः सम्भरति
तस्मात्तथा न कुर्यात् ॥ १३ ॥

यद्वेवैतान् पशूनालभते । आयतनमेवैतदग्नये
करोति न ह्यनायतने कश्चन रमतेऽन्नं वा ऽआ-
यतनं तदेतत् पुरस्तान्निदधाति तदेनं पश्यन्नग्नि-
रुपावर्त्तते ॥ १४ ॥

---

* 'यदग्निः'—इति ग ।

पुरुषोऽश्वो गौरविरजो भवन्ति। एतावन्तो वै सर्व्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत् पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्त्तते ॥ १५ ॥

पञ्च भवन्ति। पञ्च ह्येतेऽग्नयो यदेताश्चितयस्तेभ्य एतत् पञ्चायतनानि निदधाति तदेनं पश्यन्नग्निरुपावर्त्तते ॥ १६ ॥

तद्यदग्निभ्य इति*। बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत् कामायेति यथा तं काम माप्नुयाद्यजमानो यत् काम एतत् कर्म कुरुते ॥ १७ ॥

पुरुषं प्रथम मालभते। पुरुषो हि प्रथमः पशूना मथाश्वं पुरुषᳫं ह्यन्वश्वो† ऽथ गा मश्वᳫं ह्यनु गौरथाविं गाᳫं ह्यन्वविरथाज‡ मविᳫं ह्यन्वजस्तदेनान्यथापूर्व्वं यथाश्रेष्ठ मालभते ॥ १८ ॥

तेषां व्विषमा रशनाः स्युः। पुरुषस्य व्वर्षिष्ठाथ क्रसीयस्यथ क्रसीयसी तद्यथारूपं पशूनाᳫं रशनाः करोत्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः

---

* 'इति'—इति क।

† 'ह्यन्वश्वो'—इति क।

‡ 'ह्यन्वविरथाज'—इति ख।

सर्व्वाः सदृश्यः सर्व्वे ह्येते समाः सर्व्वे सदृशा* अग्नयो ह्युच्यन्ते † ऽन्नꣳ ह्युच्यन्ते तेन समास्तेन सदृशाः ॥ १९ ॥

तदाहुः । कथ मस्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेष्वेवाप्यत ऽइयं प्रथमा मृन्मयीष्टकाथ यत्पशु मालभते तेन पश्विष्टकाप्यतेऽथ यद्वपा मभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनान्नं पञ्चमीष्टकाप्यत ऽएव मु हास्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवति ॥ २० ॥

तेषां चतुर्व्विꣳशतिः सामिधेन्यः । चतुर्व्विꣳशत्यर्द्धमासो वै संव्वत्सरः संव्वत्सरो अग्नि‡र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ २१ ॥

---

* 'सदृशाः'—इति क, ख, ङ ।

† ह्यच्यन्ते'—इति क ।

‡ 'संव्वत्सरोऽग्नि-'—इति ग ।

यद्वेव चतुर्व्विꣳशतिः * । चतुर्व्विꣳशत्यक्षरा वै गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ २२ ॥

यद्वेव चतुर्व्विꣳशतिः । चतुर्व्विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ २३ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप् प्राण मेवास्य गायत्रीभिः समिन्द्ध ऽआत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्यय मात्माभितः प्राणा भूयसीः पुरस्ताद्गायत्रीरन्वाह कनीयसीरुपरिष्टाद्भूयाꣳसो हीमे पुरस्तात् प्राणाः कनीयाꣳस उपरिष्टात् ॥ २४ ॥

सोऽन्वाह । समास्त्वाग्न ऽऋतवो व्वर्द्धयन्त्विति प्रजापतिं व्विस्रस्तं यत्राग्निः समदधात्त मब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति ॥ २५ ॥

---

* 'चतुर्व्विꣳशतिः'—इति क, ग, घ, ङ ।

स एता अपश्यत् । समास्त्वाग्न ऽऋतवो व्वर्द्धयन्त्विति समाश्च त्वाग्न ऽऋतवश्च व्वर्द्धयन्त्वित्येतत् संव्वत्सरा ऋषयो यानि सत्येति संव्वत्सराश्च त्वऽर्षयश्च सत्यानि च व्वर्द्धयन्त्वित्येतत् सं दिव्येन दीदिहि रोचनेनेत्यसौ वा ऽआदित्यो दिव्यꣳ रोचनं तेन सन्दीदिहीत्येतद्विश्वा आभाहि प्रदिशश्चतस्र इति सर्व्वा आभाहि प्रदिशश्चतस्र इत्येतत्* ॥ २६ ॥

ता एता एकव्याख्यानाः । एत मेवाभि यथैत मेव संस्कुर्य्यादेतꣳ सन्दध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत्प्रजापतिꣳ समैन्द्ध तेन प्राजापत्याः† ॥ २७ ॥

द्वादशाप्रियः । द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैन मेतदाप्रीणाति ॥ २८ ॥

यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै

---

'इत्येतत्'—इति ग । 'इत्येतत्'—इति च ।

† 'प्राजापत्याः'—इति ग, 'प्राजापत्याः'—इति च ।

जगत्यस्याᳫं हीदᳫं सर्व्वं जगदियमु वा ऽअग्नि-
रवै हि सर्व्वो ऽग्निश्चीयते यावानग्निर्यावत्यस्य
मात्रा तावतैवैन मेतदाप्रीणाति ॥ २९ ॥

यद्वेव द्वादश। द्वादशाक्षरा वै जगती जगती
सर्व्वाणि छन्दाᳫंसि सर्व्वाणि छन्दाᳫंसि प्रजा-
पतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवैन मेतदाप्रीणाति ॥ ३० ॥

ता एता ऊर्द्ध्वा अस्य समिधो भवन्तीति।
प्रजापतिं व्विस्रस्तं यत्राग्निः समदधात्तमब्रवीद्या
मत्सम्मिता आप्रियस्ताभि र्माप्रीणीहीति ॥ ३१ ॥

स एता अपश्यत्। ऊर्द्ध्वा अस्य समिधो
भवन्त्यूर्द्ध्वा ह्येतस्य समिद्धस्य समिधो भव-
न्त्यूर्द्ध्वा शुक्रा शोचीᳫंष्यग्नेरित्यूर्ध्वानि ह्येतस्य
शुक्राणि शोचीᳫंष्यर्च्चीᳫंषि भवन्ति द्युमत्तमेति
व्वीर्य्यवत्तमेत्येतत् सुप्रतीकस्येति सर्व्वतो वा ऽअग्निः
सुप्रतीकः सूनोरिति यदेनं जनयति तेनास्यैष
सूनुः * ॥ ३२ ॥

* 'सूनुः'—इति म, च।

ता एता एकव्याख्यानाः । एत मेवाभि यथैत मेव संस्कुर्यादेतꣳ सन्दध्यादेतं जनयेत्ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत्तेनाग्नेय्यो यत् प्रजापति माप्नीणात्तेन प्राजापत्याः * ॥ ३३ ॥

ता त्रिषमा त्रिषमपदाः । त्रिषमाक्षरा त्रिषमाणि हि छन्दाꣳस्यथो † यान्यस्याध्यात्म मङ्गाणि त्रिषमाणि तान्यस्यैताभिराप्रीणाति ॥ ३४ ॥

वैश्वानरः पशुपुरोडाशः । वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषा मग्नीना मुपाप्त्यै ॥ ३५ ॥

यद्वेव वैश्वानरः । ऋतवो ‡ हैते यदेताश्चि- तयोऽग्नयो वा ऽऋतव ऋतवः संव्वत्सरः संव्व- त्सरो वैश्वानरो यदग्नय इति स्यादिति तद्रे- चयेद् द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो वैश्वानर आग्नेय्यो याज्यानुवाक्या अग्निरूपाणा मुपाप्त्यै कामवत्यः कामाना मुपाप्त्यै ३६ ॥

* 'प्राजापत्याः'—इति ग ।

† '०स्यतो'—इति ङ ।

‡ 'ऋतयो'—इति ङ ।

तद्वैके । कृत्यैवैतानि पशुशीर्षाणि विकृत्वो-
पदधत्युभयेनैते पशव इति ते ह ते मर्त्याः कु-
णपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्व तथा-
षाढिः सौश्रोमतेयश्चोपदधुः स ह क्षिप्र ऽएव
ततो ममार ॥ ३७ ॥

हिरण्मयान्यु हैके कुर्व्वन्ति । अमृतेष्टका*
इति वदन्तस्ता ह ता अनृतेष्टका न हि तानि
पशुशीर्षाणि ॥ ३८ ॥

मृन्मयान्यु हैके कुर्व्वन्ति । उत्सन्ना† वा
ऽएते पशवो यद्दै किञ्चोत्सन्न मिवं तस्य सर्व्वस्य
प्रतिष्ठा तद्यच्चैते पशवो गतास्तत एनानधि सम्भ-
राम इति न तथा कुर्याद्यो वा ऽएतेषा मात्रं
च ब्राह्मणं च न विद्यात्तस्यैत ऽउत्सन्नाः स्युः
स एतानेव पञ्च पशूनालभेत यावदस्य वशः
स्यात्तान्हैतान् प्रजापतिः प्रथम आलेभे श्यापर्णः
सायकायनो ‡ ऽन्तमोऽथ हैतानेतर्ह्यालभन्ते

---

* 'कुर्व्वन्त्यमृतेष्टका'—इति क ।

† कुर्व्वन्त्युत्सन्ना'—इति क ।

‡ 'सायक्कायनो'—इति क ।

ऽथैतर्ह्यीमौ द्वावेवालभ्येते प्राजापत्यश्च वायव्यश्च तयोरुक्तो ब्राह्मणमुच्यते ॥ ३९ ॥ ४ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे , तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्याये प्रथमम् अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजात्मकपञ्चपश्वालम्भपक्षः * । तत्र चतुर्विंशतिः सामिधेन्यः, वैश्वानरः पशुपुरोडाशः , कामपदयुक्ता याज्यानुवाक्याः प्रदर्श्यन्ते । अथ वायव्यैकपश्वालम्भपक्षः । तत्र सप्तदश सामिधेन्यः , अत्रापि प्राजापत्यः पशुपुरोडाशः , शुक्रपदयुक्ता याज्यानुवाक्याश्च विधास्यन्ते । पक्षद्वयसाधारणं मन्थदाप्रीप्रभृतिकं वक्ष्यते । एतत् सर्वं कात्यायनेन सूत्रितम् ;—

“चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभतेऽदक्षिणान्”—इत्युपक्रम्य †, “अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान्”—इति ‡ , “समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न इति § नव दधाति , आप्रियो द्वादशोर्ध्वा अस्येति”—इति ‖ ,

* “पञ्च पशूनालभन्ते”—इत्यादि का० श्रौ० सू० १६. १. ८; इहापि ब्राह्मणे परस्तात् ( ६. २. २. १६. ) द्रष्टव्यम् ।

† का० श्रौ० सू० १६. १. ५ । ‡ १६. १. ८ ।

§ वा० सं० २७. १—९ । विहिताश्च ता इहोत्तरत्र ( ६. २. २१ , २५. ) ।

‖ १६. १. ११ । आप्रियस्तु ताः वा० सं० २७. ११—२२ आम्नाताः ।

"एकादशान्ते शासप्रैषादि करोति, परिहृते पुरुषसङ्कुपनम्" -इति *, वैश्वानरः पशुपुरोडाश उपांशु, पशुदेवता च, आग्नेय्यो याज्यानुवाक्याः कामवत्यः"-इति †, "पशूनालभेताम्, श्यामतूपरो वा प्राजापत्यः, षड् दद्यात्, वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दद्यात्, प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः, काद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य, शुक्रवत्यो वायव्यस्य, वपाया वा, तुल्य मन्यत् सर्वेषु ‡"-इति।

तत्र प्रथमं पञ्चपश्वालम्भपक्षं विधातुं प्रजापतिवृत्तान्तं प्रस्तौति— "प्रजापतिरग्निरूपाण्यभ्यध्यायदिति। पूर्वं प्रजापतिरग्नेरुक्तान्यष्टौ रूपाण्यभिध्यातवान्, कुमाररूपात्मना परिणतम् अन्विषेष। स कुमारोऽग्निः मां पिता प्रजापतिरन्विच्छतीति ज्ञातवान्। 'हन्त' इति प्रश्ने। 'मे' मम 'यद्' रूपम् 'एषः' प्रजापतिः 'न वेद' न जानीयात्, 'तद् रूपम्' 'असानि' भवानीति ॥ १ ॥

एवं ज्ञात्वा,— "स एतान् पञ्च पशूनपश्यदिति। तदात्मना परिणन्तु मिति शेषः। पश्यतियोगात् 'पशु'-शब्दः सम्पन्न इति दर्शयति— "यदपश्यत् तस्मादेते पशव इति। पश्यतिः प्रकृत्यन्तर मस्तीति कृत्वा पशुशब्दो निरुक्तः ॥ २, ३ ॥

"स एतानिति। 'तेषु' पशुषु तादात्म्येन प्रविष्टम् 'एतम्' अग्निं प्रजापतिरद्राक्षीत्। पश्यत्येनमग्नि मित्येतस्य देवनिमित्तादधिकरणसाधनः पशुशब्द इत्याह— "तस्माद्वेवैते पशव इति ॥ ४ ॥

* का० श्रौ० १६. १. १३ सू०।

† का० श्रौ० १६. १. २५, २६, २७ सू०।

‡ का० श्रौ० सू० १६. १. ३८—४३। द्रष्टव्युत्तरत्र ६. २. २ब्रा० प्रष्टव्यम्।

"स ऐक्षतेति। 'सः' प्रजापतिः 'ऐक्षत' स्वमतं विचारितवान्। तदेव दर्शयति-- "इमे वा अग्नि रिति। 'अग्निः' 'इमे वै' पुरुषादिपञ्चपशवः एव, ततः पृथक् दृश्यन्त इत्यर्थः। 'इमानेव' अग्न्यात्मकानेतान् पशूनेव आत्मान मभिलक्ष्य 'संस्करवै' पशुभिः स्वरूपैः स्व मात्मानं संस्करिष्य इति पर्यालोचितवान्। पशूना मग्न्यात्मकत्वं विशदयति— "यथा वा अग्निरिति। अग्नेर्यथा दीपनधूमाभ्याहितदाहनभस्मसञ्छादनादयो धर्माः, ते पशुष्वपि दृश्यन्ते इत्यतस्तेषां तदात्मकत्वम्। 'चक्षुर्दीप्यते' प्रकाशयुक्तं रोचते, 'ऊष्मः' श्वासो धूमः, 'अभ्याहितं' पुरःस्थितं वस्तु 'दहति', 'एवं' 'बप्सति' भक्षन्ति पशवः। "भस भर्त्सनदीप्त्योः"*, लिटि प्रथमपुरुषबहुवचने झौ द्विर्वचने कृते "घसिभसोर्हलि च" -इति † उपधालोपे रूप मिदम्। 'सीदति' अवसन्नं भवति।

अग्निभ्यः कामाय पशव इति ‡ सिद्धान्तयितुं बहुदेवतार्थ मालम्भनं पूर्वपक्षयति-- "तान् नानादेवताभ्य इति। अमून्तान् पुरुषादीन् पञ्च पशून् 'नानादेवताभ्यः' बहुदेवताभ्यः 'आलिप्सत' आलब्धु मैच्छत्। "वैश्वकर्मणं पुरुषम्"-इत्यादिना पञ्चानां पशूनां पृथक्-पृथक् देवतासम्बन्ध उक्तः § ॥ ५ ॥

"स ऐक्षत नानेति। 'सः' प्रजापतिः एवं विचारितवान्,

---

* जु० प० १८ धा०।

† पा० सू० ६. ४. १०० (वै०)।

‡ पुरस्तादुक्तं ६४ पृ० १५ पं द्रष्टव्यम् (का० श्रौ० सू० १६. १. ८.)। वक्ष्यति चाप्यनुपदम् ६ कं० (५४ पृ० ६ पं०, ६७ पृ० ४ पं०)।

§ "यत्तु वैश्वकर्मणं पुरुषं, वारुणं मश्वम्, ऐन्द्रं मृषभं, त्वाष्ट्र मविम्, आग्नेय मज मिति"—इत्यादि (का० श्रौ० सू० १६. १.) कर्कोक्तत्वात विचार्यम्।

——किमर्थं 'नाना' बह्वीभ्यः 'देवताभ्यः' पशुभ्यः 'आलभ' इच्छामि ? [ 'अग्नेः उ अहम्'–इति पदच्छेदः ] अह नु अग्नेरेव 'रूपाणि' 'कामये'। 'हन्त' इति साध्यसाधनयोर्वैयधिकरण्यजनिते आश्चर्ये। 'एनान्' पशून् 'कामाय' कामगुणयुक्ताय 'अग्निभ्यः' अग्नये 'आलभे'–'इति' ऐक्षतेत्यन्वयः। कामायाग्निभ्य इति सामानाधिकरण्ये कथ मग्निभ्य इति बहुवचनम् ? तत्राह— "तद् यदग्निभ्य इति। अग्निरूपापेक्षायां बहुवचनम्। 'तान्' अष्टाविति प्रागुक्तम्। "आप्रीतानिति। प्रयाजयाज्यादिभिराप्रीभिः पर्यग्निकरणेन च संस्कृतान्, तदनन्तर मेव 'उदीचो नीत्वा' शामित्रदेशं प्रापय्येत्यर्थः। 'सञ्ज्ञपनं' नाम मारणम् *। मारणार्थं नयेदित्यर्थः ॥ ६ ॥

पशुशीर्षोपधानं विधास्यते, तदर्थं प्रजापतिकर्त्तृकं तदुपधानं दर्शयति— "स ऐक्षत या वै श्रीरिति। द्वितीयाबहुवचनान्तम्। अत्र श्रीशब्देन अग्निरूपाणि विवक्षितानि। तानि 'अभ्यध्यामिषम्' ध्यातवानस्मि। 'ताः' इमाः श्रियः 'शीर्षसु' चक्षुराद्याश्रयेषु वर्त्तन्ते। 'हन्त'–इति हर्षे। "अतः शीर्षाण्येवेत्यादि। निगदसिद्धम् † ॥

पशुशरीराणा मिष्टकोपकारित्वं विवक्षन्नाह— "इतराणीति। अजशरीरस्य यज्ञे उपकरिष्यमाणत्वात् 'इतराणि' पुरुषादीनां चतुर्णां पशूनां 'कुसिन्धानि' मूर्द्धरहितानि

* "परिवृते पुरुषसञ्ज्ञपनम्"—इत्यादिः "वैश्यः पुरुषो राजन्यो वा" —इत्यन्तो ग्रन्थः का० श्रौ० सू० १६. १. १४—१७ द्रष्टव्यः।

† तत्प्रकारश्चैव मुक्तं कात्यायनेन—"कण्ठेषु छित्त्वा मस्तकाय शिराण्स्याहर्त्ति"–इति श्रौ० सू० १६. १. १८।

शरीराणि * 'अप्सु' 'प्राप्लावयत्' प्रक्षिप्तवान्। "चतुर्णां मप्सु काय-प्रासनम्"-इति कात्यायनेन च सूत्रितम् †।

अजेन शरीरेण यज्ञं समापितवन्तः। एतेन यज्ञसमाप्तौ कारण माह— "नेन्मे यज्ञ इति। 'मे' मम 'यज्ञः' मध्ये 'विस्रष्टः' विच्छिन्नः 'नेत्' नेव 'असत्' माभूत् 'इति'। यज्ञ-विच्छेदे प्रजापतेः किं मायात मित्ति तत्राह— "आत्मा वै यज्ञ इति। एतेन पशुना यज्ञसमापने उपपत्तिं दर्शयति— "एतेन पशुनेष्ट्वा तत् प्रजापतिरिति। 'यथा' येन प्रकारेण 'अग्नेः' 'अन्तं न पर्येत्' कार्त्स्न्येन न परिगतो भवेत्, 'तत्' कर्म 'प्रजा-पतिः' 'अपश्यत्' दृष्टवानित्यर्थः। यदि सर्वैः पशुभिर्यजेत, तदानी मेव यज्ञसमाप्तेः सिद्धत्वात् अग्नेरेवान्तं परिप्राप्तवान्, अग्निरूपाणि कार्त्स्न्येन प्राप्तवान् भवति, तदयुक्तम्; उत्तरत्र कर्त्त-व्यस्य सद्भावादिति तात्पर्यम्।

उत्तरत्र सर्वैः पशुभिर्यागः पूर्वपक्षयिष्यते— "तद्धैक आहु-रन्वेवैतैः सर्वैः पशुभिर्यजेत"-इत्यादिना ‡। यज्ञसमाप्त्यनन्तरं शिष्टस्य अजपशुशरीरस्य च जले प्रासनं सूत्रितम्— "अजेन चरति, संस्थिते तस्य शेषप्रासनम्"-इति § ॥ ७ ॥

यदर्थ मप्सु पशुचतुष्टयकायप्रासनम्, तदिदानी माह— "स ऐक्षत य मिम मात्मान मप्सु प्रापिप्लव मिति। 'आत्मा-

* "श्रोणी यद्रूरू क उ तन्नजान याभ्यां कुसिन्धं सुदृढं बभूव" —इति अथ० सं० १०. २. ३।

† का० श्रौ० सू० १६. १. १६।

‡ अस्मिन्नेव ब्राह्मणे त्रयोदशी कण्डी द्रष्टव्या (५६ पृ० ८पं०)।

§ का० श्रौ० सू० १६. १. २१, २२।

नम्' पशुदेहानित्यर्थः । 'प्रविशतां' प्रविशमानाम् 'एषां' पशूनां 'यत्' शरीरगतं रसादिकम् 'अप्सु' 'प्रत्यतिष्ठत्' प्रतिष्ठितम्, 'ताः' 'अपः' 'समभरत्' सम्भृतवान्; 'यत्' च अस्थिमांसादिकम् 'अस्यां' पृथिव्यां प्रतिष्ठितम्, 'तां' 'मृदं' मृत्तिकां सम्भृतवान्; 'तदुभयम्' 'अपो मृदश्च' 'सम्भृत्य' सङ्गृह्य 'इष्टका मकरोत्' * ॥ ८ ॥

पक्वा इष्टकाश्चेतव्या इति वक्तु माह— "स ऐक्षत यदि वा इद मित्थ मेव सन्तमात्मान मभिसंस्करिष्य इति । 'यदिदं' जलमृदात्मक मिष्टकारूपम् 'इत्थम्' अपाकेन 'एव' 'आत्मानम्' 'अभि'-लक्ष्य 'संस्करिष्ये', तर्हि 'मर्त्यः' मरणधर्मा 'कुणपः' [ जीवरहितो देहः कुणप इत्युच्यते ] अत एव 'अनपहतपाप्मा भविष्यामि'-इति विचार्य, ता इष्टका अग्निना पक्वा अकरोत्; अग्निना पक्व मेव 'हविः' 'अमृतम्' अमरणधर्मकम् 'भवति' इति । अग्निनेष्टकापाकः कर्त्तव्य इति दर्शयति— "तस्मादग्निनेष्टका इति ॥ ९ ॥

इष्टकाकरणकालं दर्शयति— "तद्यदिष्ट्वा पशुनापश्यदिति । 'पशुना' अजेन 'इष्ट्वा' इष्टवान् 'इष्टकाः', अतः इष्टादनन्तरं कृत्वा इतीष्टक-शब्दो निरुक्तः । पशुयागात् पूर्व मिष्टकाकरणं निन्दति— "अनिष्टका ह ता भवन्तीति । 'अथो' 'पशोः' पशुयागात् 'पुरा' इष्टकाकरणम् 'अन्यदेव' अयाज्ञीय मित्यर्थः ॥ १० ॥

पशुशीर्षोपधानानन्तर मिष्टकोपधानं पशुशिरःकबन्धसन्धान-

---

* तदुक्तम्—"ततो मृदिष्टकार्थाः पच"- इति का० श्रौ० सू० १६. १. २० ।

रूपैश्च प्रशंसति— "तस्यास्ताः श्रिय एतानि तानि पशु-शीर्षाणीति ॥ ११ ॥

यदुक्तं पशूना मग्न्यात्मकत्वम्, तत् प्रशंसति— "त एते सर्वे पशवो यदग्निरिति। यतः पशूना मग्नेश्च तादात्म्यम्, अतः परस्पर मभिसम्बन्धो दृश्यत इत्याह – "तस्मादग्नाविति। अग्निरूपाणि कामयमानस्य प्रजापतेः पशुयागेन तच्छरीरा-न्तःशीष्टकोपधानेन किं मायात मिति, तद् दर्शयति— "ततो वै प्रजापतिरग्निरभवदिति। ततः पशुयागेन तदात्मकोऽग्नि-रेव सम्पन्न इत्यर्थः। चयनस्य अग्निरूपत्वावाप्तिः फल मिति तात्पर्यम् ॥ १२ ॥

पूर्वञ्च पश्वालम्भः, तत्रैकेन पशुना याग उक्तः, इदानीं त मेव पक्षं दृढयितुं सर्वपशुयागं पूर्वपक्षयति— "तद्धैक आहु-रिति *। 'अत्र' अग्नौ 'सर्वैः' पञ्चभिः पशुभिः 'यजेत'। 'यत्' यदि 'प्रजापतिः' 'सर्वैः' पशुभिः 'अयक्ष्यत' याग मक-रिष्यन्, 'तत् एव अग्नेः अन्तं' 'पर्यैष्यत्' अगमिष्यत्, न तथा कृतवान्। क्रियातिपत्तौ यजतेरेतेश्च लृङ्-प्रयोगः †। तस्मात् सर्वैर्यागकरण मेवाग्न्यन्तगमन मित्यर्थः। तद् दूषयति— "न तथा कुर्यादिति ‡। 'तत्' तर्हि 'देवानाम्' 'इतात्' गमनात् 'इयात्' अपगतो भवतीत्यर्थः। तदेव विवृणोति— 'अथो पथः तद्द्यात्' प्रजापतिकृताद् यज्ञमार्गात् प्रच्यवेतेत्यर्थः ॥

सर्वयागपक्षे बाधां दर्शयति— "अथो किं ततः सम्भरेदिति।

---

* का० श्रौ० सू० १६. १. २३।

† "लिङ्निमित्ते लृङ् क्रियातिपत्तौ"—इति पा० सू० ३. ३. १३९।

‡ का० श्रौ० सू० १६. १. २४।

एवं सति सम्भरणार्थता विरुध्यते ; सम्भरणार्थं हि कुसिन्धानाम् अप्सु प्राशनम् *, तत इष्टका मृत्तिरग्निश्च कार्या ; अत: सर्वप्रचारे सम्भरणानुपपत्तिरित्यर्थ: । कात्यायनस्तच्छाखान्तरवाक्यानुसारे-णैकस्मिन्नपि सम्भरणानुपपत्ते: सर्वप्रचार मेकप्रचारं समविकल्पं कृतवान् । तथाहि — "चतुर्णा मप्सु कायप्रासनम्, ततो मृदि-ष्टकार्थापश्च, अजेन प्रचरति, संस्थिते तस्य शेषप्रासनम्, सर्वैरेके, एकस्यापि किं तत: सम्भरेदिति श्रुते:"–इति † । एकस्यापि पशोरालम्भे 'किं तत: सम्भरेत् ?' तत् तुल्य मेव । तस्माद् विकल्प: सर्वैर्वाजेन वेति ॥ १३ ॥

पशूनालम्भन मायतनकरणात्मना प्रशंसति— "यद् वेवैताम् पशूनालभत इति । आयतनशब्दार्थ माह— "अन्नं वा इति । कार्यकारणयोरभेदात् । 'तदेतत' पशुरूप मन्नं 'पुरस्तात् निद-धाति', 'तत्' 'एनम्' 'पश्यन्' 'अग्नि:' 'उपावर्त्तते' समीपे गतो भवति । यथा लोकेऽन्नार्थी पश्यन्नेवान्नं तत्समीपं गच्छति, तद्वदित्यर्थ: ॥ १४ ॥

पशूननुक्रामति— "पुरुषोऽश्व इति । "एतावन्त इति । यत: 'सर्वे पशव:' एतेषु पुरुषगवाश्वादिपशुषु अन्तर्भूता:, अत उपजीव्यानां सर्वेषा मन्नरूपाणां पशूना मवरोध इति नाना-जातिनिबन्धना स्तुति: ॥ १५ ॥

पशुगतपञ्चसङ्ख्यां प्रशंसति— "पञ्च भवन्ति, पञ्च ह्येते-

---

* 'कुसिन्धै: कुथितया मृदा अग्निश्चेष्टकानां दाढ्यं मुपजायते' —इति कर्क: ( का० श्रौ० सू० १६. १. २३. ) । पुरस्ताच्चेह द्रष्टव्यम् ( ७ क०, ५४ पृ० १३ पं०—६८ पृ० १ पं० ) ।

† का० श्रौ० सू० १६. १. १९—२४ ।

ऽन्नय इति। चितिसङ्ख्यापेक्षया अग्नीनां पञ्चसङ्ख्यावत्त्वम् *। "पञ्चायतनानीति। पञ्चरूपाणि पञ्च स्थानानि कल्पयतीत्यर्थः ॥ १६ ॥

"तद्यदग्निभ्य इतीति। एतद् वाक्यं पूर्ववद् व्याख्येयम् †। अग्निभ्यः कामायेति यद्यग्निबहुत्वं तद्रूपापेक्षेति ॥ १७ ॥

पशूना मालम्भनक्रमं विधत्ते— "पुरुषं प्रथम मालभत इति। "पुरुषꣳ ह्यन्वश्व इति। 'पुरुषम्' 'अनु'-लक्ष्य ; पुरुषानुगामी यतोऽश्व इत्यर्थः। एव मुत्तरत्र। "यथापूर्व मिति। पूर्वानालभ्यानतिक्रम्य, यथाक्रम मित्यर्थः। 'यथाश्रेष्ठम्' तत्र ये ये श्रेष्ठाः, तानप्यनतिक्रम्येत्यर्थः ॥ १८ ॥

तेषां बन्धनार्थं रशनां विधत्ते— "तेषां विषमा रशनाः स्युरिति। 'विषमाः' स्थौल्यह्रासवत्त्वेन भवन्ति। वैषम्यं च दर्शयति— "पुरुषस्य वर्षिष्ठाथ ह्रसीयसीत्यादि। पुरुषपशोः रशनाः 'वर्षिष्ठाः' अतिशयेन वृद्धा भवेत्। अत्र वर्षिष्ठेति स्थौल्यायामापेक्षया। "प्रियस्थिर"-इत्यादिना ‡ वृद्धशब्दस्य वर्षिष्ठादेशः। 'अथ' अश्वपशोः 'ह्रसीयसी' आयामस्थौल्याभ्यां ह्रस्वा। तदपेक्षया गोपशोः ह्रस्वा। ततो द्वयोः। 'अथ ह्रसीयसी'-इति वीप्सया पूर्वपूर्वरशनापेक्षयोत्तरोत्तरह्रासो विवक्षितः §। "यथारूप मिति। पुरुषादिपशूना माकृतिबलादिक मनतिक्रम्येत्यर्थः। "सर्वास्त्वेवेति। 'तु'-शब्दः पक्षा-

---

* इहापि ( का० श्रौ० सू० १६. १. ७. ) कर्कोक्तं द्रष्टव्यम्।

† पुरस्तात् ( ६७ पृ० ५ पं० ) द्रष्टव्यम्।

‡ पा० सू० ६. ४. १५७।

§ "वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरेषाम्" का० श्रौ० १६. १. ६।

न्तरद्योतनार्थः। सर्वा अपि रशनाः 'समाः' सदृशायामस्थौल्या इत्यर्थः। "सर्वास्त्वेव समाः"-इतिवाक्यस्य विवरणम्— "सर्वाः सदृश्य इति। यद्वा, आयामस्थौल्यादिना साम्यं वक्तुं पृथगुपन्यासः *।

रशनासाम्य इत्युच्यते पशूनां परस्परसाम्यादित्याह— "सर्वे ह्येते समा इति। साम्य मेव दर्शयति— "अग्नयो ह्युच्यन्त इति। यस्मात् एते पशवोऽग्नय इत्युच्यन्ते, तदग्न मिति चोच्यन्ते। पशूना मग्नित्व मन्नात्मकत्वञ्च पूर्व मेव दर्शितम्— "स ऐक्षतेमे वा अग्निः"-इति †, "यद्वैतान् पशूनालभत आयतन मेवैतदग्नये करोति, न ह्यनायतने कश्चन रमते, अन्नं वा आयतनम्"-इति ‡ च। 'तेन' अग्नित्वेन सर्वे पशवः 'समाः सदृशाः' इति रशना अपि समाः कार्या इत्यर्थः॥ १८॥

"तदाहुरिति। अग्निचयने पञ्चसङ्ख्याका इष्टका उपधेया इति वक्ष्यते §, तत्र पशुपरिग्रहेणैव पञ्चेष्टका अपि परिगृहीता इति वक्तुं तत् कथं पश्वालम्भमात्रेण तादृशस्याग्नेः स्वीकारः कृत इति पृच्छति— "कथ मस्यैषोऽग्निरिति। 'अस्य' चिकीर्षमाणस्य यजमानस्य 'पञ्चेष्टकः' 'एषः' प्रक्रममाणः 'अग्निः' 'कथं' 'पशुषु' परिग्रहे 'आरब्धः' प्रक्रान्तो भवतीति। उत्तरत्र करिष्यमाणस्याग्नेः प्रथमं स्वीकारः कर्त्तव्य इत्यभिप्रायः।

पशुष्वेव पञ्चेष्टकाः सम्पादयति--"पुरोडाशकपालेषु ह्येवाप्यत इत्यादिना। चयने वैश्वानरादीनां पशुपुरोडाशानां सम्भरणात्

---

* "सर्वेषां वा तुल्याः"—इति का० श्रौ० सू० १६. १. १०।

†, ‡ पुरस्तात् (५३ पृ० ५ क०, ५६ पृ० १४ क०) द्रष्टव्यम्।

§ द्वितीयप्रपाठकीयद्वितीयब्राह्मणादितस्तद् द्रष्टव्यम्।

तत्कपालेषु मृन्मयीष्टका भाव्यते, कपालानां मृन्मयत्वात् तादृग्रीष्टकाप्रारम्भः, पश्वालम्भेन पश्विष्टकाप्रारम्भः।

वपावदानसमये हिरण्यशकलद्वयं निधातव्यम्। तदाहापस्तम्बः—"जुह्वा मुपस्तीर्य हिरण्यशकल मवधाय कृत्स्नां वपा मवदाय हिरण्यशकल मुपरिष्टात् कृत्वाऽभिघारयति"—इति *। तथा चैतरेयकम्—"यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपाज्यस्योपस्तृणाति हिरण्यशल्को वपा हिरण्यशल्क आज्यस्योपरिष्टादभिघारयति"—इति †। 'अथ' 'यत्' तस्माद् 'वपा मभितः' पूर्व मुपरिष्टाच्च 'हिरण्यशकलौ भवतः तेन हिरण्येष्टका' भवति। इध्मयूपपरिधिस्वीकारात् वानस्पत्येष्टकाधानेन उलूखलमुसलस्रुगाद्युपधान मुपलक्षितम्। आज्यप्रोक्षणीपुरोडाशकरणेनाप्रूपेष्टका भवति। 'अतः' सर्वासा मिष्टकानां पशुबन्धात् सङ्ग्रहेण ता अपि प्रारब्धा भवन्तीत्यर्थः॥

यद्यपि मार्त्तिकी एका एव, अथापि मृन्मयकपालपश्वादिसम्बन्धात् पञ्चेष्टकासम्पादनं प्रागुक्तम्—"तदाहुः कथ मस्यैषोऽग्निः पञ्चेष्टकः?"—इत्यादिना॥ २०॥

अत्र कात्यायनः "समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न इति नव दधाति"—इति ‡। दर्शपूर्णमासयोः पञ्चदश सामिधेन्यः §;

---

* आप० श्रौ० सू० १६-१७-प्रश्नयोरग्निचयनगतसूत्राणि सन्ति।

† ऐ० ब्रा० २. २. ४।

‡ का० श्रौ० सू० १६. १. ११।

§ यद्यपि तैत्तिरीयसामिधेनीसङ्ख्या एकादशैव पर माद्यन्तयोः त्रयोस्त्रिरावृत्त्या पञ्चदशैव सम्पद्यते। तदुक्तं पुरस्तात् "त्रिः प्रथमा मन्वाह त्रिरुत्तमाम् ताः पञ्चदश सम्पद्यते"—इति (१ का०

अत्र "समिध्यमानो अध्वरे"-इत्यृक् *, समिद्धो अग्न आहुत" -इत्यृक् †, अनयोः प्रकृतिगतयोः सामिधेनीमध्यपठितयोर्ऋचोर्मध्ये "समास्त्वाग्न ऋतवो वर्द्धयन्तु"-इत्याद्या नव ‡ ऋचो दध्यात्। एवं "प्र वो वाजा अभिद्यव:"-इत्यद्याः पञ्चदश §, इदानीं मध्ये निहिता नव, उभयस्य चतुर्विंशतिर्भवतीति तदेतद् दर्शयति— "तेषां चतुर्विंशतिः सामिधेन्य इति। अग्निसमिन्धनसाधनभूता ऋचः सामिधेन्य इत्युच्यन्ते। "समिधा माधाने षेण्यण्"-इति ‖ षेण्यण् प्रत्ययः। सामिधेनीगतां चतुर्विंशतिसङ्ख्यां प्रशंसति— "चतुर्विंशत्यर्द्धमासो वै संवत्सर इति। संवत्सरस्य द्वादश मासाः, मासस्य द्वावर्द्धमासौ, इति संवत्सरस्य चतुर्विंशतिरर्द्धमासाः; तादृशः संवत्सर एवाग्निः; "संवत्सरे कुमारोऽजायत"-इति प्रागाम्नानात् ¶। अग्नेः संवत्सरात्मकत्वेन प्रकृते किमायात मिति, तत्राह— "यावानग्निरिति। 'अग्निः' 'यावान्' यत्परिमाणः, 'अस्य' अग्नेः 'यावती' यत्परिमाणा 'मात्रा' अवयवा यावन्तः, 'तावता'

---

२ अध्या० ५ ब्रा० ६, ७ क०)। ऋक्संहिताया माम्नातं "प्र वो वाजाः" —इति सूक्तं यद्यपि पञ्चदशर्गात्मकम् (३. २७. १—१५.), तथापीह तस्य न ग्रहणं युज्यते; तत्र समिद्वत्या ऋचोऽभावात् 'समिध्यमानसमिद्वत्योरन्तरे'—इतिविधानस्य वैयर्थ्यापत्तेः।

* तै० ब्रा० ३. ५. २. ६ (तै० सं० ३. २८. ४.)।

† तै० ब्रा० ३. ५. ३. १० (ऋ० सं० ५. २८. ५)।

‡ वा० स० २७. १—६; तै० सं० ४. १. ७. १—६।

§ तै० ब्रा० ३. ५. २. १—११। आद्यन्तयोर्ऋचोस्त्रिस्त्रिरावृत्त्यैव पञ्चदशत्व मिह सम्पद्यत इत्युक्तम्।

‖ पा० ४. ३. १२० सू० १० वा०। ¶ ४० पृ० १७ पं० द्रष्टव्यम्।

तत्परिमाणैः तैरङ्गैरेव 'एनम्' अग्निं 'समिन्धे' सन्दीपितवान् भवति। अथ मन्त्रार्थः— अग्नेः संवत्सरात्मकत्वे संवत्सरस्य यावन्तो यावन्तोऽवयवाः मासार्द्धमासाद्यात्मानः, तावद्भिरवयवैः 'एनं' चित्याग्निं 'समिन्धे'। अथ वा "यावानग्निरिति, अवयवाग्नि-परिमाणवचनम्; "यावत्यस्य मात्रेति, अवयवपरिमाणवचनम्; 'तावता' तत्परिमाणेनाग्निसंवत्सरात्मना 'एनम्' अग्निम् आह-वनीयं 'समिन्धे' इति। अनेनाग्निः स्वय मग्निना समिद्धो भवतीत्युक्तं भवति। तथा च श्रूयते — "अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा"–इति * ॥ २१ ॥

प्रकारान्तरेण चतुर्विंशतिसङ्ख्यां प्रशंसति— "यद्वेव चतु-र्विंशतिरिति। गायत्र्यात्मकत्व मग्नेः प्रागुक्तम्— "यद्वेवाष्टावग्नि-रूपाणि अष्टाक्षरा गायत्री, तस्मादाहुः गायत्रोऽग्निरिति"– इति †। "तावतैवेति। गायत्र्यक्षरसङ्ख्याकैरवयवैः 'एनम्' अग्निम् समिद्धवान् भवतीति ॥ २२ ॥

"यद्वेवेति। "चतुर्विंशो वै पुरुष इति। चतुर्विंशति-सङ्ख्याकावयवयुक्तः 'चतुर्विंशः'। तानेवावयवान् दर्शयति— "दश हस्त्या इति। हस्तयोर्भवा अङ्गुलयो दश, पादयोर्भवा दश, 'चत्वार्यङ्गानि' पादहस्तमुखमस्तकाख्यानि। एवं चतु-र्विंशतिरङ्गानि; 'पुरुषः' उक्तावयवयुक्तः 'प्रजापतिः' प्रजापति-रूपः। "स एव पुरुषः प्रजापतिरभवत्"–इत्यादिना पुरुषस्य प्रजापतित्व मुक्तम् ‡। प्रजापतेरग्नित्वञ्च "स पुरुषः प्रजापति-

---

* ऋ० सं १. १२. ६।

† पुरस्तात् ४२ पृ० ४ पं० द्रष्टव्यम्।

‡ पुरस्तात् २ पृ० १६ पं० द्रष्टव्यम्।

रभवदय मेव स योऽय मग्निश्चीयते"–इति *; तथाचैवाध्याये "प्रजापतिरग्निरूपाण्यभ्यायत्"–इत्युपक्रम्य, "ततो वै प्रजापति-रग्निभवत्"–इत्यन्तेन †। "तावतैवैन मिति। तावत्परिमाणेन चतुर्विंशत्यक्षरात्मनाग्निना 'एनम्' अग्निं दीपितवान् भवतीति ॥ २३ ॥

"उभयी गायत्रीश्च त्रिष्टुभश्चान्वाहेति। सामिधेनीषु "प्र वो वाजाः"–इत्याद्या गायत्र्यः ‡, "समास्त्वाग्न ऋतवो वर्द्धयन्तु"–इत्याद्याः त्रिष्टुप्छन्दस्काः §, ता उभयी अनुब्रूयात्, होतेति शेषः।

सामिधेनीगतगायत्रीत्रिष्टुप्छन्दांसि प्राणात्मसमिन्धनरूपेण प्रशंसति— "प्राणो गायत्रीति। गायत्र्यास्त्रिपात्त्वम्, प्राणस्य च प्राणापानव्यानात्मना त्रित्वसङ्ख्यावत्त्वम्। त्रिष्टुभो वीर्यरूपत्वात् उरसः सकाशादुत्पत्तेः आत्मरूपता। "मध्ये त्रिष्टुभो भवन्तीति। प्रथमं "प्र वो वाजाः"–इत्याद्याः "आ नो अध्वरे" इत्यन्ता गायत्र्यः, अन्ते च "समिद्धो अग्निराहुत इत्याद्या गायत्र्यः, समिध्यमानसमिद्धवत्योर्निधीयमानाः "समास्त्वाग्न ऋतव इत्याद्यास्त्रिष्टुभ इत्यर्थः ‖। "मध्ये ह्ययं मात्मेति। गायत्रीत्रिष्टुभोः प्राणापानरूपत्वोक्तेः प्राणापानयोरात्मपूर्वपरभागवर्त्तित्वं प्रसिद्धम्, मध्ये त्रिष्टुभां निधानस्योक्तत्वात्।

---

* पुरस्तात् ३ पृ० १ पं० द्रष्टव्यम्।

† १ब्रा० १–१२ कण्डिके (५३–५६ पृ०) द्रष्टव्याः।

‡ तै० ब्रा० ३. ५. २. १–११।

§ वा० सं० २७. १–६; तै० सं० ४. १. ७. १–६।

‖ पुरस्तात् २१कण्डीभाष्यं द्रष्टव्यम्।

प्रार्ध गायत्रीसमविभागं वारयन्नाह— "भूयसीः पुरस्ताद् गायत्रीरन्वाहेति। "प्र वो वाजा अभिद्यवः"–इत्याद्या एकादश गायत्र्यः प्रथम मनुवक्तव्याः, अन्ते च "समिद्धो अग्निराहुत"–इत्याद्यास्तस्र इत्यर्थः। प्राणा अपि पुरस्तात् नासापुटयोरधिकं निस्सरन्ति, ब्रह्मरन्ध्रगत मित्यभिप्रायः ॥ २४ ॥

इदानीं मध्ये निधीयमाना ऋचस्तदनुवचनं विधत्ते— "सोऽन्वाह समास्त्वाग्न ऋतवो वर्द्धयन्त्विति *। मन्त्रस्याय मर्थः,— अत्राग्निपदेन प्रजापतिरुच्यते; "ततो वै प्रजापतिरग्निरभवदिति प्रागाम्नानात् †। उत्तरत्र तासां नवाना मग्निरेव द्रष्टा प्रजापतिर्देवतेति वक्ष्यति ‡, अतोऽपि अग्निपदेन प्रजापति रेव सम्बोध्यः। हे 'अग्ने!' संवत्सरात्मक प्रजापते! 'त्वा' त्वां विस्रस्तम् 'ऋतवः' वसन्ताद्याः, प्रजापतेः संवत्सरात्मकत्वात् तदवयवा ऋतवः 'समाः', 'संवत्सराः' च 'वर्द्धयन्तु'। 'ऋषयः' 'ऋषि' पदेन प्राणा उच्यन्ते; "के त ऋषयः ? इति, प्राणा वा ऋषयः" –इति श्रुतेः §। 'यानि सत्या' सत्कर्माणि, तानि च त्वा वर्द्धयन्तु। अतोऽवयववृद्धेः 'दिव्येन' द्युलोकभवनेन आदित्येन 'सन्दीदिहि' सन्दीप्तो भव। "दीदयतिर्दीप्तिकर्मा"–इति यास्कः ‖। दीव्य-

---

* "समास्त्वाग्न ऋतवो वर्द्धयन्तु संवत्सरा ऋषयो यानि सत्या। सन्दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्रः"– इति वा० सं० २७. १।

† पुरस्तात् (५६ पृ० ६ पं०) द्रष्टव्यम्।

‡ एतत्परस्या मेव (६० पृ० १ पं०) "स एता अपश्यत्"—इत्यादि।

§ इहैव पुरस्तात् द्रष्टव्यम् (१ क० ३ पं०)।

‖ निघ० १. १६. ५। निरु० १०. २. ६।

तेर्वा यङ्लुकि लोटि सेर्ह्रौ "लोपोव्योर्वलि"-इति * लोपे अभ्यासदीर्घे कृते रूपम्। 'विश्वाः' सर्वाश्चतस्रः प्रदिशश्च 'अभि'-लक्ष्य 'आभाहि' "भा दीप्तौ" † भाहि। अत्रान्तर्णीतण्यर्थे दीपयेति।

मन्त्राणा मर्थं विवक्षुः तेषां प्रजापतिसमिन्धनार्थतां दर्शयति— "प्रजापतिं विस्रस्त मिति। यदा 'विस्रस्तं' विश्लिष्टाङ्गं 'प्रजापतिम्' अग्निं 'समदध्यात्' संयोजितवान्, 'त मब्रवीत्', प्रजापतिरिति शेषः। 'मत्सम्मिताः' मम पर्याप्ता याः 'सामिधेन्यः', 'ताभिः' 'मा' मां प्रजापतिं 'समिन्त्स्व' सन्दीपयेति। इन्धेर्लोटि मध्यमे रूपम् ॥ २५ ॥

एव मुक्तोऽग्निः प्रजापतिः समिन्धनार्थं सामिधेनीमन्त्रान् दृष्टवानित्याह—"स एता अपश्यत् समास्त्वाग्न ऽऋतवो वर्द्धयन्त्विति। 'इति'-शब्दः प्रकारे। एवम्प्रकारा नव ऋचोऽपश्यदित्यर्थः ‡।

मन्त्रं प्रतिपाद मनूद्य व्याचष्टे— "समास्त्वाग्न ऋतवो वर्द्धयन्त्वित्येतदिति ॥ २६ ॥

नवाना मपि ऋचा मेकाभिधेयतां दर्शयति— "ता एता एकव्याख्याना इति। एकार्था इत्यर्थः। त मेवार्थं दर्शयति-- "एत मेवाभीति। 'यथा' येन प्रकारेण अग्निः 'एत मेव' प्रजापतिं 'संस्कुर्यात्', 'इतं' विस्रस्तं 'सन्दध्यात्' संयोजयेत्, तथा 'एतं' 'जनयेत्' उत्पादयेत्। एव

---

* पा० सू० ६. १. ६६।

† अदा० पं० १०४० धा०।

‡ का० श्रौ० सू० १६. १. ११।

मर्थवत्त्वेन व्याख्यासाम्य मिति तात्पर्यम्। तासा मग्न्यार्षेयत्वं प्रजापतिदेवत्यत्वं च दर्शयति— "यदग्निरपश्यदिति। 'समैन्ध'- इति लङि "आडजादीनाम्"-इत्याडागमः * ॥ २७ ॥

कात्यायनः— "आप्रियो द्वादशोर्ध्वा अस्येति। तद् द्वादश-सङ्ख्याः प्रयाजयाज्या विधत्ते— "द्वादशाप्रिय इति। तनू-नपान्नराशंसयोः साहित्ये द्वादशत्वम्। आप्रीगतां सङ्ख्यां संव-त्सरात्मना प्रशंसति— "द्वादशमासाः संवत्सर इति। संवत्सरे जातत्वादग्नेस्तदात्मकत्वम्। "यावानग्निरिति। अवयविपरि-माणवचनम्। "यावत्यस्य मात्रेति। अवयवपरिमाणवचनम्। 'तावता' तत्परिमाणैरवयवैर्मासात्मभिः 'एनम्' अग्निम् 'आप्रीत-वान्' भवति। संवत्सरस्य मासा अवयवाः, तदात्मकस्याग्ने-रपि प्रयाजयाज्या अवयवाः; अनेन स्वैरेवावयवैरग्निराप्रीत-वान् भवतीत्यर्थः † ॥ २८ ॥

द्वादशसङ्ख्या मेव द्वादशाक्षरजगत्यात्मना स्तौति— "यद्वे द्वादशेति। 'इयं वै जगती' पार्थिवान्नपूरितप्रजापतिमध्य शरीरादुत्पत्तेर्जगत्या भूमिरूपत्वम्। 'अस्यां' भूमौ 'सर्वं' जग स्थावरजङ्गमात्मकं तिष्ठति। "इय मु वा अग्निरिति। भूम वधिकरणे सर्वेषा मग्नीनां चयनाधाराधेययोरभेदेन अग्नेर्भूमि रूपत्वम्। "तावतैवेति। तावत्सङ्ख्याकैर्जगत्यक्षरात्मकैरवयवै राप्रीतवान् भवतीति ॥ २९ ॥

"यद्वेव द्वादशेति। ता मेव सङ्ख्यां सर्वच्छन्दोरूपजगत्य त्मना प्रशंसति— "जगती सर्वाणि छन्दांसीति। जगत्यां सर्वे

---

* पा० सू० ६. ४. ७२।

† का० श्रौ० सू० १६. १. १९।

गायत्र्यादीनां छन्दसां मन्त्रगर्भत्वात्, अधिकाक्षरत्वात्। "ताव-
तैवेति। तावत्संख्याकैश्छन्दोरूपैर्जगत्यक्षरैरेव अग्निं प्रीणित-
वानिति ॥ १० ॥

तानाप्रीमन्त्रान् दर्शयति— "ता एता ऊर्ध्वा अस्य समिधो
भवन्तीति *। एतासां ऋचां मर्थं विवक्षुः प्राजापत्याप्रीणनार्थतां
दर्शयति— "प्रजापतिं विस्रस्त मिति ॥ ११ ॥

प्रजापतिना स्वप्रीणनार्थं मभ्यर्थितोऽग्निराप्रीमन्त्रान् दृष्टवा-
नित्याह— "स एता अपश्यदूर्ध्वा अस्य समिधो भवन्तीतीति।
'इति'-शब्दः प्रभृतौ ; एतदाद्या द्वादश ऋचो दृष्टवान्।

प्रथममन्त्रस्याय मर्थः,— अत्रापि अग्निरूपः प्रजापतिरेव
सम्बोध्यः ; पूर्वं "ताभिर्मा प्रीणीहीति"-इति प्रजापतिप्रीणन-
स्योक्तत्वात् †। 'अस्य' प्रसिद्धस्य अग्नेः 'शुक्रा' शोचमानानि,
'शोचींषि' तेजांसि, 'ऊर्ध्वा' ऊर्ध्वानि भवन्ति, 'द्युमत्तमा'
नैर्लोपः, वीर्यवत्तमानि। अग्निं विशिनष्टि— 'सुप्रतीकस्य'
शोभनावयवस्य प्रजापतेः 'सूनोः' पुत्रस्य। प्रजापतेर्विस्रस्त-
सन्धानोक्तेस्तत्पुत्रत्वम्। प्रतिपाद मनूद्य व्याचष्टे— "ऊर्ध्वा
ह्येतस्य समिधस्येति ॥ १२ ॥

एतेषा माप्रीमन्त्राणा मेकाभिधेयतां दर्शयति— "ता एता
एकव्याख्याना एत मेवाभीति। "समास्त्वाग्न ऋतवः"-इत्यत्रोक्त-
ब्राह्मणवाक्यवद् व्याख्येयम् ‡। पूर्ववदेवाग्नि प्रजापतिसम्बन्धं
दर्शयति— "ता आग्नेय्य इति ॥ १३ ॥

---

* वा० सं० २७. ११—२२

† एतत्पूर्वस्या मेव कण्डिकायां द्रष्टव्यम् ( ६१ पृ० १० पं० )।

‡ ६० पृ० १ पं०, ७६ पृ० १५ पं० द्रष्टव्यम्।

"ता विषमा विषमपदा इति । 'ताः' प्रयाजयाज्याः 'विषमाः', वैषम्य मेव दर्शयति 'विषमपदाः' पादैर्विषमाः, काश्चन त्रिपदाः काश्चन चतुष्पदाः ; अत एव 'विषमाक्षराः' अक्षरैरपि विषमाः, न्यूनाधिकाक्षरैर्युक्ता ; अत एव 'छन्दांसि विषमाणि' काश्चन त्रिष्टुभः, काश्चन गायत्र्यः, काश्चन उष्णिहः । "अथो यान्यस्याध्यात्म मिति । 'अस्य' अग्नेः 'अङ्गानि' अपि 'विषमाणि' न्यूनाधिकपरिमाणानि । अत एव विषमाभिराप्रीतः प्रजापतेर्विषमाणि अङ्गानि प्रीणितवान् भवतीत्यर्थः ॥ ३४ ॥

अथ प्रागुक्तान् पुरुषादीन् पञ्च पशूननुलक्ष्य निर्वापनीयं पशुपुरोडाशं सदेवताकं विधत्ते— "वैश्वानरः पशुपुरोडाश इति । विश्वानरहितत्वात् सर्वाग्निरूपता तस्य ॥ ३५ ॥

"यद्येव वैश्वानर इति । सर्वचितीना ममृतात्मकत्वोक्ते-रग्नीना मृतुत्व मुक्त मित्याह— "अग्नयो वा ऋतव इति । "वैश्वानरः पशुपुरोडाश इत्यत्र साक्षादग्निसम्बन्धो न प्रतीयत इति मत्वा केचित् अग्नये वैश्वानराय पशुपुरोडाश इत्यग्नि-सम्बन्धद्योतनार्थं मिदं प्रक्षिपन्ति, तदतिरेकेण दूषयति— "यदग्नय इतीति । "स्यादति तद्रेचयेदिति । तस्य पुरोडाशस्य द्वादशकपालसंस्कृतत्वं विधत्ते— "द्वादशकपाल इति * ।

अथात्र वपापुरोडाशहविषा मग्निदेवत्याः कामपदयुक्ता याज्या-नुवाक्या विधत्ते— "आग्नेय्यो याज्यानुवाक्या इति ॥ ३६ ॥

अत्र कात्यायनः—"स्वङ्मस्तिष्कोद्धृतानि हुतात्मानि शिरांसि निदधाति, सकलानि वा , अन्यानि वा हिरण्मयानि वा मृण्म-

* का० श्रौ० १६. १. ३६ ।

यानि वानालभेतान्''-इति *। त्वगेव त्वक्, मस्तिष्कशब्देन शिरःकपालगता मज्जाभिधीयते, ते उद्धृत्य घृतसिक्तानि उक्त-पुरुषादिपञ्चपशुशिरांसि ; 'सकलानि' त्वङ्मस्तिष्कसहितानि 'वा' दध्यात् ; अथ वा उक्तानुक्तान् पुरुषादिपशूनालभ्य सञ्ज्ञपन मकृत्वेत्यर्थः ; 'अन्यानि' सञ्ज्ञपनहतानि पञ्च पशुशीर्षाणि दध्यात् ; अथ वा तत्प्रतिनिधित्वेन 'हिरण्मयानि' सुवर्णनिर्मि-तानि, 'मृण्मयानि' वा गृह्णीयात् इति विकल्पत्रय मिति सूत्रार्थः।

तत्र आलम्भपक्ष एव मुख्य इति सिद्धान्तयितुं तान् पक्षान् सदोषान् कृत्वोपन्यस्यति— "तद्वैक इत्येवैतानि पशुशीर्षाणि विस्वोपदधतीत्यादिना। 'इत्येव' वक्ष्यमाणप्रकारेण 'वित्त्वा' विदे-र्लाभार्थस्य क्त्वा-प्रत्यये रूपम्, लब्ध्वा, सम्पाद्येत्यर्थः। 'उभयेन' लाभालम्भाभ्याम् 'एते पशवो भवन्ति इति' वदन्तः 'एके' इति समन्वयः। प्रयाजैरसंस्कृतत्वात् 'तानि' शिरांसि 'अना-प्रीतानि' जातानीत्यर्थः।

एतैरेवोपधाने दृष्टानिष्टे दर्शयति—"तद्ध तथाषाढेरिति। ( 'सौश्रोमतेयस्य' ) शुश्रोमती नाम का चन मुनिपत्नी, तस्या अपत्य माषाढिर्नाम ऋषिः, तस्य। तथा सञ्ज्ञपनहतानि शिरांसि 'उपदधुः', 'ततः' तदनन्तरं 'सः' आषाढिः क्षिप्र एव काले मृतवान् ॥ ३७ ॥

कुणपमर्त्यत्वदोषपरिहाराय हिरण्मयशीर्षोपधानं केचिद् वदन्तीत्याह— "हिरण्मयान्यु हैके कुर्वन्तीति। यद्यपि 'अमृ-

---

* का० श्रौ० सू० १६. १. ३०, ३१, ३२ ।

तेष्टकाः', तथापि 'न पशुशीर्षाणि' इति न तेषूपधानं युक्त मित्यर्थः ॥ ३८ ॥

"मृन्मयान्यु हैक इति । 'एते' पुरुषादयः 'पशवः' 'उत्सन्नाः' आलब्धव्यत्वात्, अतः किं मृन्मयकरण मिति; तत्राह— "यद्वै किञ्चेति । 'यत् किञ्च उत्सन्नं' वस्तु भवति, 'तस्य सर्वस्य' 'इयं' पृथिवी 'प्रतिष्ठा'; नष्टं पृथिवी मन्वेतीति तस्याः प्रतिष्ठात्वम् । 'तत्' तस्मात् 'यत्र' यस्मिन् प्रदेशे नष्टाः 'पशवः' 'गताः', 'ततः' तस्मात् प्रदेशात् 'एतान्' पशून् 'सम्भरामः' नेष्यामः 'इति' मृन्मयाकरणे युक्तिः । "न तथा कुर्यादिति, तन्निषेधः ।

इदानीं पञ्चपश्वालम्भपक्षं सिद्धान्तयति— "यो वा एतेषा मिति । 'आवृतं' प्रयानक्रमम्, तद्विधायकं 'ब्राह्मणम्' 'च' अविदुष एव 'एते' पशवः 'उत्सन्नाः'। "स एतानिति । 'सः' विद्वान् । "यावदस्य वशः स्यादिति । 'अस्य' चिन्वतः पुरुषस्य 'यावत्' कर्मप्रयोगः 'वशः' 'स्यात्' स्वाधीनो भवेत्, 'स पशूनालभेत' इत्यन्वयः ।

अस्मिन्नर्थे अनुष्ठातृसम्प्रदायं प्रमाणयति— "ताम् हैताम् प्रजापतिः प्रथम इति । सायकस्यापत्यं 'सायकायनः' 'श्यापर्णः' नाम 'अन्तमः' चरमः 'आलेभे' । 'अन्तरेण' प्रजापतिश्यापर्णयो-रन्तरालकाले ये अनुष्ठातारः, ते 'एतामेव' पञ्च पशून् 'आलभन्ते' आलेभिरे ।

एतावत्पर्यन्तं पञ्चपश्वालम्भपक्ष उक्तः, इतः परं प्राजापत्य-वायव्यपक्षौ वर्ण्येते * । त्रयः पक्षा अपि समविकल्पाः ।

---

* का० श्रौ० सू० १६. १. ३६—४१ ।

तत्रेदानीमपि अनुष्ठातृभिः पञ्चपश्वालम्भः कार्य इति मन्यन्ते, तान् प्रत्याह-- "अथैतर्हीमौ द्वावेवालभ्येते इति। 'अथ' इति पक्षान्तरप्रारम्भे। 'एतर्हि' अधुना। एतच्छब्दात् कालार्थे र्हिल् प्रत्ययः *। 'प्राजापत्यः वायव्यश्च' इति द्वौ पशू 'आलभ्येते'। तावपि समविकल्पाविति प्रागुक्तम्। 'अतः' 'तयोः' एतयोः पश्वोः विधायकं 'ब्राह्मणम्' 'उच्यते' भण्यते। "वद व्यक्तायां वाचि" †, लिटि "वचिस्वपियजादीनां किति"-इति ‡ सम्प्रसारणम् ॥ ३८ ॥ ४ [ २. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे द्वितीयेऽध्याये प्रथमं ब्राह्मणम् ॥

॥ इति षष्ठकाण्डे प्रथमः प्रपाठकः ॥

---

* "इदमो र्हिल्"—इति पा० ५. ३. १६ सू०।

† भ्वा० प० १०० धा०।

‡ पा० सू० ६. १. १५।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये द्वितीयं ब्राह्मणम्।

—•—

॥ हरिः ॐ ॥

प्राजापत्यं चरका आलभन्ते। प्रजापतिरग्निं चित्वाग्निरभवत्तद्यदेत मालभते तदेवाग्नेरन्त पर्येतीति ॥ १ ॥

श्यामो भवति। द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रजननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥ २ ॥

तस्यैकविꣳशतिः सामिधेन्यः। द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका असावादित्य एकविꣳश एष प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्धे ॥ ३ ॥

यद्वेवैकविꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविꣳशः पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ ४ ॥

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासा मुक्तो बन्धुरुक्तस्त्वेवान्वृचꣳ हिरण्यगर्भवत्याघार माघारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतिरग्निर्द्वादशा-प्रियस्तासा मुक्तो बन्धुरुक्तस्त्वेवान्वृचं प्राजापत्यः पशुपुरोडाशो य एव पशोर्बन्धुः स पुरोडाशस्य द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥ ५ ॥

अथैतं व्वायवे नियुत्वते । शुक्लं तूपर मालभते प्रजापतिः प्रजाः सृष्ट्वानुव्यैक्षत तस्यात्यानन्देन रेतः परापतत् सोऽजः शुक्लस्तूपरो लप्सुद्यभवद्रसो वै रेतो यावानु वै रसस्तावानात्मा तद्यदेत मालभते तदेवाग्नेरन्तं पर्येति शुक्लो भवति शुक्लꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो व्वायवे भवति प्राणो वै व्वायुर्नियुत्वते

भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद् दधाति ॥ ६ ॥

यद्वेवैतं वायवे नियुत्वते । शुक्लं तूपर मालभते प्रजापतिं विस्रस्तं यत्र देवाः समस्कुर्वंस्तस्यो ऽस्मात् प्राणो मध्यत उदक्रामत् त मस्मिन्नेतेन पशुनादधुस्तथैवास्मिन्नय मेतद्दधाति वायवे भवति प्राणो वै वायुर्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि वायुस्तूपरो भवति तूपरो हि वायुः* ॥ ७ ॥

तस्य सप्तदश सामिधेन्यः । सप्तदशो वै संवत्सरो द्वादश मासाः पञ्चऽर्त्तवः संवत्सरः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ ८ ॥

यद्वेव सप्तदश । सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशं पुरुषः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समिन्द्धे ॥ ९ ॥

* 'वायुः'—इति ग ।

उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासां मुक्तो बन्धुरुक्तम्वेवान्वृचं द्वादशाप्रियस्तासां मुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशोऽत्रो स काम उपाप्त इति ह स्माह माहित्थियं चरकाः प्राजापत्ये पशावाहुरिति ॥ १० ॥

यद्वेव व्वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्द्धं ह प्रजापतेर्वायुरर्द्धं प्रजापतिस्तद्यदुभौ व्वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धं हैवास्य कृतं स्यान्नार्द्धमथ यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतं सर्व्वं कृत्स्नं प्रजापतिं संस्करोति ॥ ११ ॥

यद्वेव व्वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं व्विस्रस्तं यत्र देवाः समस्कुर्व्वंस्स योऽस्मात् प्राणो मध्यत उदक्रामत्तमस्मिन्नेतेन पशुनादधुरथास्यैतेन पुरोडाशेनात्मानं समस्कुर्व्वंस्तस्य यत् प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरः प्रजापतिः कद्वत्यौ याज्यानुवाक्ये को हि प्रजापतिः ॥ १२ ॥

तद्यदपां पुरस्ताज्जुहोति । य एवायं पुर-
स्तात् प्राणस्त मस्मिन्नेतद्दधात्यथ यदेतेन मध्यतश्च-
रन्ति मध्यतो ह्यय मात्माथ यद्धविषोपरिष्टाच्चरन्ति
य एवाय मुपरिष्टात् प्राणस्त मस्मिन्नेतद्दधाति
शुक्लवत्यो याज्यानुवाक्याः स्युः शुक्लरूपाणा मुपाप्त्यै
नियुत्वत्यो यदेवनियुत्वद्रूपं तस्योपाप्त्यै ॥ १३ ॥

तदु वा ऽआहुः । व्वपाया एव शुक्लवत्यौ
स्याता मेतावद्वै पशौ शुक्लं यद्वपा शुक्लवत्यौ नियु-
त्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाप्त्या
ऽइति ॥ १४ ॥

यद्वेवैतं पशु मालभते । एतस्मिन् ह पशौ
सर्व्वेषां पशूनाꣳ रूपं यत्तूपरो लप्सुदी तत्
पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तू-
परः केसरवांस्तदश्वस्य रूपं तूपरो हि केसरवानश्वो
यदष्टाशफस्तद्गोरूप मष्टाशफो हि गौरथ यदस्या-
वेरिव शफास्तदवे रूपं यदजस्तदजस्य तद्यदेत
मालभते तेन हैवास्यैते सर्व्वे पशव आलब्धा
भवन्त्यतो यतमदस्य कर्मोपकल्पेतैते वा पशव

पशव एष वा प्राजापत्य एष वा नियुत्व-
तीयः ॥ १५ ॥

तं पौर्णमास्या मालभेत। अमावास्याया मालभेतेत्यु हैक ऽआहुरसौ वै चन्द्रः प्रजापतिः स एताꣳ रात्रि मिह व्वसति तद्यथोपतिष्ठन्त मालभेतैवं तद्दिति ॥ १६ ॥

तद्वै पौर्णमास्या मेव*। असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्या मालभन्ते यत्रैनं देवा आलभन्ते तदेन मालभा ऽइति तस्मात् पौर्णमास्यां यद्देव पौर्णमास्यां पौर्णमासी ह वाव प्रथमा व्युवास तस्माद्देव पौर्णमास्याम् † ॥ १७ ॥

तद्वै फाल्गुन्या मेव ‡। एषा ह संव्वत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्व्वा मुखत एव तत् संव्वत्सर मारभते ॥ १८ ॥

स वा ऽइष्ट्वैव पौर्णमासेन §। अथ पशु माल-

---

*, ‡ 'मेव'—इति ग, 'मेव'—इति घ।

† 'पौर्णमास्याम्'—इति ग।

§ 'पौर्णमासेन'—इति क, ख, ग, ङ।

भेत पौर्णमासेन वा ऽइन्द्रो वृत्रं पाप्मानꣳ हत्वापहतपाप्मैतत्कर्मारभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानꣳ हत्वापहतपाप्मैतत्कर्मारभते ॥ १९ ॥

तद्वा ऽउपाꣳशु भवति। एतद्वैतैः प्रजापतिः पशुभिः कर्मैयेष तद्वाऽनानद्धैवैवासानिरुक्त मिव तस्मादुपाꣳशु * ॥ २० ॥

यद्देवोपाꣳशु। प्राजापत्यं वा ऽएतत् कर्म प्रजापतिꣳ ह्येतेन कर्मणारभते ऽनिरुक्तो वै प्रजापतिः ॥ २१ ॥

यद्देवोपाꣳशु †। रेतो वा ऽअत्र यज्ञ उपाꣳशु वै रेतः सिच्यते वपा पशुपुरोडाशो हविरेतावान् हि पशुः ‡ ॥ २२ ॥

अष्टकाया मुखाꣳ सम्भरति। प्राजापत्य मेतदहर्यदष्टका प्राजापत्य मेतत् कर्म यदुखा प्राजापत्य ऽएव तदहन् प्राजापत्यं कर्म करोति ॥ २३ ॥

---

* 'तस्मादुपाꣳशु'—इति ग।

† 'यद्देवोपाꣳशु'—इति ग। 'यद्देवोपाꣳशु'—इति ख, घ।

‡ 'पशुः'—इति ग।

यद्वेवाष्टकायाम्। पर्व्वैतत् संव्वत्सरस्य यदष्टका पर्व्वैतदग्नेर्यदुखा पर्व्वण्येव तत् पर्व्व करोति ॥ २४ ॥

यद्वेवाष्टकायाम्। अष्टका वा ऽउखा निधिर्द्वा ऽउद्धी तिरश्ची रास्ना तच्चतुस्रस्तस्र उर्द्ध्वास्तदष्टावष्टकाया मेव तदष्टकां करोति ॥ २५ ॥

अमावास्यायां दीक्षते। अमावास्यायै वा अधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥ २६ ॥

यद्वेवामावास्यायाꣳ। रेतो वा ऽएतद् भूतमात्मानꣳ सिञ्चत्युखायां योनौ यद्दीक्षते तस्मा ऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतं लोक मभि जायते तस्मादाहुः कृतं लोक पुरुषो ऽभि जायत ऽइति ॥ २७ ॥

स यत् कनीयः संव्वत्सराद्दीक्षितः स्यात्। अलोका इष्टका उपदध्यादिष्टका लोकानतिरिच्येरन्नथ यद्भूयसो लोकान् कृत्वेष्टका नानूपदध्याल्लोका इष्टका अतिरिच्येरन्नथ यदमावास्यायां दीक्षित्वामावास्यायां क्रीणाति तद्यावन्त मेव लोकं

करोति तावतीरिष्टका उपदधात्यथास्यापूर्यमाणपक्षे सर्वो ऽग्निश्चीयते ॥ २८ ॥

तदाहुः । यद्यावत्य एतस्याग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्यूर्ध्वानि क्रयादहानि कथ मस्य ते लोका अनूपहिता भवन्तीति यदा ऽमावास्यायां दीक्षित्वा मावास्यायां क्रीणाति तद्यावन्त मेव लोकं करोति तावतीरिष्टका उपदधात्यथ यान्यूर्ध्वानि क्रयादहानि तस्मिन्नवकाशे-ऽध्वर्युरग्निं चिनोति क्वो हि चिनुयान्न च सो ऽवकाशः स्याद्यावन्ति वै संवत्सरस्याहोरात्राणि तावन्त्य एतस्याग्नेरिष्टका उप च त्रयोदशो मासस्त्रयोदशो वा ऽएष मासो यान्यूर्ध्वानि क्रयादहानि तद्या अमूस्त्रयोदशस्य मास इष्टकास्ताभिरस्य ते लोका अनूपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥ २९ ॥

एतद् वै यैव प्रथमा पौर्णमासी * । तस्यां पशु मालभते या प्रथमाष्टका तस्या मुखाꣳ सम्भरति

* 'पौर्णमासी'—इति ग ।

या प्रथमामावास्या तस्यां दीक्षत ऽएतद्वै यान्येव संव्वत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते तानि च तदाप्नोत्यथातः सम्पदेव * ॥ ३० ॥

तदाहुः । कथ मस्यैतत् कर्म संव्वत्सर मग्नि माप्नोति कथꣳ संवत्सरेणाग्निना सम्पद्यत ऽइत्ये- तेषां व्वै पञ्चानां पशूनां चतुर्व्विꣳशतिः सामि- धेन्यो द्वादशाप्रियस्तत् षट्त्रिꣳशदेकादशानुयाजा एकादशोपयजस्तदष्टापञ्चाशत् ॥ ३१ ॥

ततो याष्टाचत्वारिꣳशत् † । साष्टाचत्वारिꣳश- दक्षरा जगतीयं वै जगत्यस्याꣳ हीदꣳ सर्व्वं जगदिय मु वा ऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ ३२ ॥

यद्वेवाष्टाचत्वारिꣳशत् । अष्टाचत्वारिꣳशद- क्षरा वै जगती जगती सर्व्वाणि छन्दाꣳसि सर्व्वा- णि छन्दाꣳसि प्रजापतिः प्रजापतिरग्निर्यावा- नग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ३३ ॥

---

* 'सम्पदेव'—इति ग ।

† '०शत्'—इति म , '०शत्'—इति च ।

अथ यानि दश। सा दशाक्षरा विराड् विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ ३४ ॥

वपा पशुपुरोडाशः *। तत् षष्टिः षष्टि-र्मासस्याहोरात्राणि तन्मास माप्नोति मास आप्त ऋतु माप्नोत्यृतुः संवत्सरं तत् संवत्सर मग्नि माप्नोति ये च संवत्सरे कामा अथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तत् † ॥ ३५ ॥

अथैतस्य प्राजापत्यस्य ‡। एकविꣳशतिः सामि-धेन्यो द्वादशाप्रियस्त्रयस्त्रिꣳशदेकादशानुयाजा ए-कादशोपयज तत् पञ्च पञ्चाशद्वपा पशुपुरो-डाशो हविस्तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामो ऽस्यैव त माप्नोति द्वावाघारौ तत् षष्टिः स यः षष्ट्यां कामो ऽस्यैव तमाप्नोत्यथ यदतोन्यद्यदेव संवत्सरे ऽन्नं तत्तत् § ॥ ३६ ॥

---

* 'पशुपुरोडाशः'—इति ग।

†, § 'तत्तत्'—इति ग।

‡ 'प्रजापत्यस्य'—इति ग, 'प्रजापत्यस्य'—इति क।

अथैतस्य नियुत्वतीयस्य। सप्तदश सामिधेन्यो द्वादशाप्रियस्तदेकान्न त्रिᳪंशदेकादशानुयाजा एकादशोपयजस्तदेकपञ्चाशदपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद् द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स यो ऽष्टापञ्चाशति कामोऽस्यैव त मवाप्नोति वनस्पतिश्च वसाहोमश्च तत् षष्टिः स यः षष्ट्यां कामो ऽस्यैव त मवाप्नोत्यथ यदतोऽन्यद्यदेव संवत्सरे ऽन्नं तत्तदेव मु हास्यैतत् कर्म संवत्सर मग्नि माप्नोत्येवᳪं संवत्सरेणाग्निना सम्पद्यते ॥ ३७ ॥

तदाहुः*। नैतस्य पशोः समिष्टयजूᳪंषि जुहुयान्न हृदयशूलेनावभृथ मभ्यवेयादारम्भो वा ऽएषो ऽग्नेः पशुर्व्यवसर्गो देवतानाᳪं समिष्टयजूᳪंषिसᳪंस्थावभृथो नेदारम्भे देवता व्यवसृजानि नेद् यज्ञᳪं सᳪंस्थापयानीति स वै स मेव स्थापयेदेतेन पशुनेष्ट्वा तत् प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत्तस्मात्सᳪंस्थापयेद्यद्देव सᳪंस्थापयति प्राण एष

* 'तदाहुः'—इति ग, घ। 'तदाहुः'—इति क।

पशुस्तस्य यदन्तरियात् प्राणस्य तदन्तरियाद्यदु वै प्राणस्यान्तरियात् तत एवं म्रियेत तस्मात् स मेव स्थापयेदथातो व्रताना मेव * ॥ ३८ ॥

तदाहुः † । नैतेन पशुनेष्ट्वोपरि शयीत न माꣳस मश्नीयान्न मिथुन मुपेयात् पूर्वं दीक्षा वा ऽएष पशुरनवक्लृप्तं वै तद्यद्दीक्षित उपरि शयीत यन्माꣳस मश्नीयाद्यन्मिथुन मुपेयादिति नेत्त्वेवैषा दीक्षा नैव हि मेखलास्ति न कृष्णाजिन मिष्टकां वा ऽएतां कुरुते तस्मादु काम मेवोपरि शयीतैतदु सर्व्व मन्नं यदेते ‡ पशवस्तदस्यानाप्त मारब्धं भवति तद्यानि कानि चामधुनोऽशनानि तेषा मस्य सर्व्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात् पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बन्धुः ॥ ३९ ॥

तदाहुः § । तद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मे-ऽयं यज्ञोऽदक्षिणोऽसद् ब्रह्मणा ऽस्मादिष्टदक्षिणां

* 'मेव'—इति ग । 'मेव'—इति ङ ।

†, § 'तदाहुः'—इति ग, घ। 'तदाहुः'—इति ङ ।

‡ 'यद्दते'—इति ग ।

दद्याद् ब्रह्मा वै सर्व्वो यज्ञस्तदस्य सर्व्वो यज्ञो भिषज्जयितो* भवतीति न तथा कुर्यादिष्टकां वाऽएतां कुरुते तद्यथेष्टकाया मिष्टकायां दद्यात्ताहक्तदमुर्थ्यैव दद्याद्यदस्योपकल्पेत ॥ ४० ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. २.] ॥

प्रजापतिदेवत्यपश्वनुष्ठाने सम्प्रदायं दर्शयति— "प्राजापत्यं चरका आलभन्त इति। चरका नाम चरकप्रोक्तशाखाध्यायिनो महर्षयः। तत्र फल माह— "प्रजापतिरग्निं चित्वेति ॥ १ ॥

तस्य पशोर्वर्णं विधत्ते—"श्यामो भवतीति। 'श्यामः' शुक्लकृष्णवर्णद्वययुक्तः पशुः कार्य इत्यर्थः। तद् वर्णद्वयं प्रजापतिः स इत्युपपादयति— "द्वयानि वै श्यामस्य लोमानीति। प्रजापतेर्लोकप्रजननसद्भावात् उक्तविधरूपद्वयसमुदायस्य प्राजापत्यत्वम्। गुणान्तरं विधत्ते— 'तूपरो भवतीति। विषाणरहितस्य प्रजापतेरपि शृङ्गरूपस्योत्तमवस्तुनो राहित्यादिति तत्साम्यम्। अत्र कात्यायनः— "श्यामतूपरो वा प्राजापत्य उपदध्यात्"—इति † ॥ २ ॥

प्रजापतिदेवत्यपशुपक्षे सामिधेनीषु समिध्यमानसमिद्धवत्योर्ऋचोर्मध्ये "समास्त्वाग्न ऋतवः"—इत्याद्याः षड्सङ्ख्या ऋचो निदध्यादिति ‡, तदिदं विधत्ते— "तस्यैकविंशतिः सामिधेन्य

---

* 'भिषज्जितो' 'भिषज्जियितो'—पाठौ च दृष्टौ डा०-वेबरमहोदयेन।

† का० श्रौ० सू० १६. १. ३३।

‡ पृ० ५६, कं० २५, एतद्भाष्यं च द्रष्टव्यम्।

इति। प्रकृतिगताः पञ्चदश, इदानीं धाय्याः षट् *, उभय्य एकविंशतिरित्यर्थः। सामिधेनीगता मेकविंशतिसङ्ख्यां प्रकार-द्वयेन प्रशंसति— “द्वादश मासा इति। कण्डिकाद्वयं पूर्ववद् व्याख्येयम् ॥ ३, ४ ॥

“उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाहेति। सामिधेनीषु पूर्वं गायत्रीच्छन्दस्का भूयस्यः, मध्ये त्रिष्टुभः, अन्ते च गायत्र्यः, ताश्च प्रजापतिसम्पादनार्थाः।

एतस्य सर्वस्य विधायकं ब्राह्मण मतिदिशति— “तासा मुक्तो बन्धुरुक्तस्त्वेवान्वृच मिति। ‘बन्धुः’ स्तावकं ब्राह्मणम् ‘उक्तम्’, पञ्चपशुविधिप्रकरणे; सामिधेनीषु आसाम् ‘अन्वृचं’ प्रत्यृचम् उक्त मेव, व्याख्यातञ्चेत्यर्थः, “प्राणो गायत्र्यात्मा त्रिष्टु-बित्यादिना †, “ता एता एकव्याख्यानाः एत मेवाभि यथैत मेव संस्कुर्यादेतं जनयेत्—इति च ‡।

अस्मिन् प्राजापत्यपक्षे उत्तराघारे मन्त्रविशेषं विधत्ते— “हिरण्यगर्भवत्याघार माघारय”—इति §। हिरण्यगर्भपदवत्या ऋचा आघाराः स्रुचि, उत्तरस्या मिति सामर्थ्याल्लभ्यते ‖। “हिरण्यगर्भः समवर्त्तताग्रे”—इतिमन्त्रेणेत्यर्थः ¶। अत्र कि मय मविशेषेणोक्तो मन्त्रः पूर्वस्मिन् स्रुवाघारे विनियुज्यते, उतोत्तरस्मिन् स्रुच्याघारे? इति। किं तावत् प्राप्तम्? पूर्वा-

---

* “षट् दध्यात् (धाय्याः)”—इति का० श्रौ० सू० १६. १. ३४।

†, ‡ ५८ पृ० ८ पं०, ६० पृ० २७ कं०।

§ का० श्रौ० सू० १६. १. ३५।

‖ हिरण्यवत्याघार माघारयतीतिवचनात्’—इति (का० श्रौ० सू० १६. १. ३५.) कर्कः।

¶ वा० सं० १३. ४।

घारो हिरण्यगर्भवत्या कर्त्तव्यः । कुतः ? देवतासामान्यात् पूर्वाघारः तूष्णीं क्रियमाणत्वात् प्रजापतिदेवत्यः, हिरण्यगर्भमन्त्रस्यापि प्रजापतिर्देवता; "कस्मै देवाय हविषा विधेम"—इतिमन्त्रलिङ्गात् * । 'क'-शब्देन प्रजापतिरभिधीयते; "को हि प्रजापतिः"—इतिश्रुतेः † । अतो मन्त्रो देवताभिधानसमर्थः पूर्वस्मिन् स्रुवाघारे एव विनियुज्यते इति प्राप्ते, ब्रूमः—पूर्वाघारे नायं मन्त्रः, किन्तर्हि ? उत्तराधारे; मन्त्रवत्त्वसामान्यात् । यस्याघारस्य प्रकृतौ मन्त्रो दृष्टः, तत्रैव मन्त्रान्तरविधानं युक्ततरम्; इतरत्र पूर्वाघारे तु पूर्वं प्रकृतौ मन्त्राहित्यादमन्त्रवता विधेया, तद्विशेषे च गौरवं स्यात् । तर्हि उत्तराघारे ऐन्द्रमन्त्रस्य विनियुक्तत्वात् कथ मत्र तद्विशेषविधिरिति चेत्, सत्यम्! 'इन्द्र'-पदस्य प्रजापतिपरतया व्याख्यातुं योग्यत्वात्, मन्त्रवत्त्वसामान्याच्च मन्त्रान्तरस्य निवर्त्तको भवति । तस्मात् उत्तराघारे एवायं मन्त्र इति सिद्धान्तः ।

कात्यायनेनापि पूर्वोत्तरपक्षौ दर्शितौ— "हिरण्यगर्भ इत्यृचा स्रुवाघारः, पूर्वो देवतासामान्यात्, उत्तरे तु सामान्योपदेशाभ्याम्"—इति ‡ । पूर्व एव नापूर्वाघारः; प्रकृतिलिङ्गसामान्यात् । न तु पूर्वः प्रथम आघारः; उत्तरत्र वक्ष्यमाणपूर्वोत्तरपक्षविरोधात् । ते चाधिकरणे पूर्वोत्तरपक्षवद् योज्ये ।

---

* हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्या मुतेमां कस्मै देवाय हविषा विधेम"—इति ।

† शत० ब्रा० ४. ५. ६. ४; ६. २. २. ५, १२ (८७, ८६ पृ०); ४. ३. ४; तै० सं० १. ७. ६. ६ ।

‡ का० श्रौ० सू० १६. १. ३५, ३६, ३७ ।

"तुल्य मन्यत् सर्वेषु"-इति * यत् कात्यायनेन दर्शितम्, तदिद माह-- "द्वादशाप्रिय इति। एतासा माप्रीणा मपि सङ्ख्यास्तावकं ब्राह्मणं प्रजापतिसंस्कारसन्धानजननलक्षणैकार्थ-व्याख्यानं चातिदिशति-- "तासा मुक्तो बन्धुरिति। 'बन्धुः' ब्राह्मणम्। प्राजापत्यपशुपुरोडाशस्य तत्पशुब्राह्मण मतिदिशति— "य एव पशोर्बन्धुः स पुरोडाशस्येति। एवं ह्येतत्— "प्राजापत्यं चरका आलभन्ते प्रजापतिरग्निं चित्वाग्निरभवत् तद्यदेत मालभते तदेवाग्नेरन्तं पर्येति"-इति †।

'क'-पदयुक्तानां प्रजापतिदेवत्यत्वं दर्शयति— "को हि प्रजापतिरिति ॥ ५ ॥

वायव्यपशुपक्षं विधत्ते— "अथैतं वायव इति। 'नियुत्वते' नियुत्वद्गुणकाय वायवे 'शुक्लः' वर्णतः, 'तूपरः' विषाणरहितः, आलब्धव्यः ‡। "प्राजापतिः प्रजाः सृष्ट्वानुव्यैक्षतेत्यादिकं "तूपरो हि वायुरित्यन्तं ब्राह्मणं § पशोः शुक्लत्वतूपरत्वयोर्नित्यत्वाद् वायुदेवत्यस्यैव स्तावकम्। "तूपरो लप्सुदीति। 'लप्सुदी' ललाटे शुक्लवर्ण इत्यर्थः ‖ ॥ ६ ॥ ७ ॥

अस्य पशोः सप्तदश मामिधेनीराह— "तस्य सप्तदशेति। कात्यायनोऽपि— "वायवे नियुत्वते श्वेतलप्सुदी हेदध्यात्"-इति।

---

* का० श्रौ० सू० १६. १. ४३। 'सर्वेषु त्रिष्वपि पशुषु'—इति वृत्तिः।

† इहैव पुरस्ताद् (१ ब्रा० १ क० ८६ पृ०) द्रष्टव्यम्।

‡ श्वेतः श्वेतवर्णः, लप्सुदी लप्सुदं कूर्चं तद्वान्'—इति कर्कः।

§ इहैव ८७ पृ० १४ पं०—८८ पृ० ६ पं० द्रष्टव्यम्।

‖ का० श्रौ० सू० १६. १. ३८।

सप्तदशसङ्ख्यां मासर्त्तुरूपसंवत्सरात्मना स्तौति— "सप्तदशो वै संवत्सर इति ॥ ८ ॥

प्रकारान्तरेण ता मेव सङ्ख्यां प्रशंसति— "यद्वेव सप्तदश सप्तदशो वै पुरुष इति। सप्तदशत्व मेव विभज्य दर्शयति— "प्राणा इति। "चत्वार्यङ्गानीति। बाहुद्वयं पादद्वय मित्यर्थः। 'आत्मा' मध्यदेशः। 'ग्रीवाः'-इति बहुवचनं कण्ठगतधमनि-बहुत्वापेक्षम् ॥ ९ ॥

"उभयीर्गायत्रीरिति। सामिधेन्याप्रीस्तावकं ब्राह्मणं पूर्ववत्। अत्र वायव्यपशौ प्राजापत्यपशुकरणं प्रशंसति— "अतो स काम उपाप्त इति ह स्माहेति। यं कामं प्राजापत्ये पशौ आहुर्वेदवादिनः, 'सः' तादृशः 'कामः' 'अतो' अत्रैव प्राजापत्ये पुरोडाशे 'उपाप्तः' 'इति' 'माहित्थिः' नाम ऋषिः उवाच ॥ १० ॥

"यद्वेव वायव्यः पशुर्भवतीति। 'वायुः' हि 'प्रजापतेः' 'अर्द्धम्' अर्द्धभागः; सूत्रात्मरूपत्वात्। 'प्रजापतिः' स्वय मेव 'अर्द्धम्' अर्द्धभागः; तत्र यदि पशुपुरोडाशौ 'उभौ' अपि 'वायव्यौ' वायुदेवत्यौ स्याताम्, 'उभौ वा प्राजापत्यौ'; तर्हि 'अस्य' प्रजापतेः 'अर्द्धम्' एव तत् 'कृतम्' संस्कृतं 'स्यात्', न तु कृत्स्नः प्रजापतिः; उभयात्मकत्वात् तस्येति। एकदेवत्यपशुपुरोडाश-करणे अर्द्धं तत् कृतं भवेदिति भावः, उभयोर्भिन्नभिन्नदेवत्ययोः करणे सर्वं प्रजापतिं संस्कृतवान् भवति *। निगदसिद्ध मन्यत्। एतस्य प्राजापत्यपुरोडाशस्य कत्पदयुक्ते याज्यानुवाक्ये विधत्ते—

---

* का० श्रौ० सू० १६. १. ३६।

"कद्वत्याविति *। 'क'-शब्दस्य प्रजापतिवाचकत्व माह— "को हीति ॥ ११, १२ ॥

"तद्यद्वपां पुरस्ताज्जुहोति"—इत्यादेरय मर्थः,— पूर्वं वायव्य-पशोर्वपायागेन, मध्यतः प्राजापत्यपुरोडाशाचरणेन, अन्त्ये पश्वङ्गयागेन, उभयतः प्राणान्, मध्ये आत्मानं च निहितवान् भवतीति।

वपाहविषोर्नियुत्वत्पदयुक्तां याज्यानुवाक्यां विधत्ते— "शुक्र-वत्य इति † ॥ १३ ॥

अथ शाखान्तरानुसारेण वपाया एव 'शुक्र'-पदयुक्ते याज्यानु-वाक्ये, पशुहविषस्तु 'नियुत्वत्'-पदयुक्ते याज्यानुवाक्ये इति दर्श-यति— "तदु वा आहुरिति। पूर्वं प्राजापत्यपुरोडाशस्य कत्पद-युक्ते याज्यानुवाक्ये उक्ते इति त्रयाणां वपापुरोडाशहविषां भिन्ना याज्यानुवाक्या इत्यर्थः। तदुक्तं कात्यायनेन— "प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः, कद्वत्यौ याज्यानुवाक्याः प्राजापत्यस्य, शुक्रवत्यौ वायव्यस्य, वपाया वा"—इति ‡ ॥ १४ ॥

पूर्वं पुरुषादयः पञ्च पशव उक्ताः, अत्र त्वेक एव वायव्यः, तत् कथ मेकेन पशुना सर्वयागसाध्यं फलं लभेत? अतः पञ्चपशुपक्षस्वीकार एव युक्त इति शङ्कां व्युदस्यन् एकस्यापि वायव्यस्य पञ्चपशुरूपतां दर्शयति— "यद्वेवैतं पशु मालभते, एतस्मिन् ह पशौ सर्वेषां पशूनां रूप मिति। प्रागुक्तः

---

* का० श्रौ० सू० १६. १. ४०।

† का० श्रौ० सू० १६. १. ४१।

‡ का० श्रौ० सू० १६. १. ३६, ४०, ४१।

पञ्चपश्वादिपक्षाणा मन्यतमः पक्ष इच्छया कर्त्तव्य इत्याह— "अतो यतमदस्य कर्मोपकल्पेतेति ।

तान्येव रूपाणि योजयति— "यत्तूपरो लप्सुदीति । 'केसराः' श्मश्रुरोमाणि ॥ १५ ॥

पश्वालम्भकालं विधत्ते— "तं पौर्णमास्या मालभेतेति । तच्छब्दः पूर्वपरामर्शार्थः । वायव्यं पौर्णमास्या मालभेत एतदुपलक्षणम्, सर्वानपि पञ्च पशून् प्राजापत्यं वायव्यं वा पौर्णमास्या मालभेतेत्यर्थः । अत एव कात्यायनेन सर्वशेषतया पञ्चपशुपक्षादौ सूत्रितम्— "उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभते"-इति * ।

अत्र केषाञ्चित् पक्षं सोपपत्तिक मनुवदति— "अमावस्याया मालभेतेत्यु हैक आहुरिति † । चन्द्रस्य प्रजापतितादूप्यं प्रागुक्तम्; चन्द्रमा मनसो जातः, मनश्च प्रजापतिः, तदेतयोः कार्यकारणयोरभेदोपचारेणेति । सः 'चन्द्रः' 'एतां रात्रिम्' । अमावास्यारात्रौ 'इह' च लोके ओषध्यात्मना 'वसति', तस्मात् 'यथा' येन प्रकारेण 'उपतिष्ठन्तं' चन्द्रम् 'आलभेत', 'एवं' 'तत्' पश्वालम्भनम् । अमावास्यायां पश्वालम्भश्चन्द्रालम्भसमान इति प्रशस्त इत्यर्थः ॥ १६ ॥

पौर्णमास्या मेवालभेतेति सिद्धान्तयितुं पुनरनुवदति— "तद्वै पौर्णमास्या मेवेति । "असौ वै चन्द्रः पशुरित्यादेरय मर्थः— वस्वादयो 'देवाः' पशुरूपं चन्द्रं पौर्णमास्या मालभ्य, प्रति-

---

* 'अदधियान्'—इति तत्र तच्छेषः । का० श्रौ० सू० १६. १. ५ ।

† का० श्रौ० सू० १६. १. ७ । 'सा च माघामावास्या सन्निधानाद् गृह्यते'—इति तत्र कर्कः ।

पदादितिथिषु एकैकां कलां प्राप्नोतीति प्रसिद्धम्; अत एवामावास्याया मेककलावशेषत्वात् पुनस्तं वर्द्धयन्ति। अत्र तैत्तिरीयकम्— "घ्नन्ति वा एवं पूर्णमास आ अमावास्यायां प्याययन्ति"–इति *। 'तस्मात्' अयापीदानी मनुष्ठाना 'यत्र' यस्मिन् काले 'देवाः' पशु मालब्धवन्तः, तस्मिन्नेव काले पशुरालब्धव्य इति "प्रथमा व्युधासेति ॥ १७ ॥

"तद्वै फाल्गुन्या मेवेति। 'एषा' 'संवत्सरस्य' सर्वासां रात्रीणां 'प्रथमा' आदिभूता 'रात्रिः', या उत्तरफाल्गुनीनक्षत्रयुक्ता 'पौर्णमासी'; 'या पूर्वा' 'एषा' संवत्सरस्य 'उत्तमा' अन्त्या रात्रिः। तैत्तिरीया आमनन्ति— "एषा वै जघन्या रात्रिः संवत्सरस्य, यत् पूर्वे फाल्गुनी०—० एषा वै प्रथमा रात्रिः संवत्सरस्य, यदुत्तरे फल्गुनी"–इति †। अतोऽस्या मुत्तरस्यां फल्गुन्यां पौर्णमास्यां पश्वालम्भेन संवत्सरादौ उपक्रान्तवान् भवतीत्यर्थः ॥ १८ ॥

पश्वालम्भः पूर्णमासे कर्त्तव्य इत्युक्तम्, तत्र नित्यपौर्णमासेष्टिकरणानन्तरं कर्त्तव्य इत्याह— "स वा इष्ट्वैव पौर्णमासेनाथ पशु मालभेतेति।

पौर्णमासयागानन्तर्यं पशुयागस्य सदृष्टान्तं प्रतिपादयति— "पौर्णमासेन वा इन्द्रो वृत्रं पाप्मान मिति। अत्र कात्यायनः— "वैश्वानरः पशुपुरोडाश उपांशु, पशुदेवता च"–इति ‡। 'उपांशु' करणवदशब्दमनःप्रयोग मित्युक्तलक्षणम् ॥ १९ ॥

---

* तै० सं० २. ५. २. (५) ७।

† तै० ब्रा० १. १. ३. ८।

‡ का० श्रौ० सू० १६. १. २५, २६।

तदिदं विधत्ते— "तद्वा उपांशु भवतीति। तच्छब्दो न पश्वनुष्ठानं परामृश्यते। उपांशुत्वं प्रतिपादयति— "एतद्वैतैः प्रजापतिः पशुभिरिति। पूर्वं 'प्रजापतिः' अयनाख्यं 'कर्म' 'पशुभिः' 'इयेष' इच्छति स्म। करिष्यमाणं कर्म 'अत्र' अस्मिन् पश्वनुष्ठानकाले 'अनद्धा' अप्रत्यक्षम् 'इव' 'आस'। साकल्येनानुष्ठितत्वाद् बीजरूपत्वाच्चाप्रत्यक्षत्वम्। तदेवाह— "अनिरुक्त मिति। इदं कर्म इयदितिकर्त्तव्यतायुक्त मिति निर्वक्तु मयोग्यम् ॥ २० ॥

उपांशुत्वं प्रशंसितु मनुवदति— "यद्वेवोपांशु प्राजापत्यं वा एतदिति। 'एतत्' पशुकर्म 'प्राजापत्यं' प्रजापतिसम्बन्धि। एतावताप्यस्य कर्मणोऽनिरुक्तत्वं कथ मित्याह— "अनिरुक्तो वा इति। प्रजापतेरपि सर्ववस्तुरूपत्वात् अय मेतावानिति कर्मणस्तद्रूप्यम् ॥ २१ ॥

प्रकारान्तरेणोपांशुत्वं प्रशंसति— "यद्वेवोपांशु रेतो वेति। 'अत्र' पशौ यज्ञे 'रेतः' रेतोभूतः बीजरूपत्वात्। यज्ञे पशुव्यतिरिक्तान्यन्यान्यङ्गानि सन्ति, तत् कथं पशौ यज्ञो बीजभूतस्तिष्ठतीति तत् समर्थयते— "वपा पश्विति। 'वपा', पशुपुरोडाशहवीरूपः 'पशुः', 'एतावान्' एव यज्ञ इति 'पशुः' यज्ञबीजात्मना तिष्ठतीत्यर्थः ॥ २२ ॥

अग्निधारणार्थं मुखासम्भरणं विधत्ते— "अष्टकाया मुखां सम्भरतीति। अष्टकानामाष्टमी, तस्या मुखां विदध्यात्। पूर्वं फाल्गुनपौर्णमास्यां पश्वालम्भ उक्तः, तस्यां बहुलाष्टम्या मुखार्थं मृत्तिकाट्टढवल्मीकवपादिद्रव्यसम्भरण मित्यर्थः। कात्यायनोऽपि— "उखासम्भरण मष्टम्याम्"—इति *। उखा चोपलक्षणम्,

* का० श्रौ० सू० १६. २. १ ('फाल्गुनकृष्णाष्टम्याम्')।

अषाढाद्यपि अनया क्रियया संश्रियत एव। अष्टम्या मुखासम्भरणं प्रशंसति— "प्राजापत्य मेतदिति। अष्टमीदिवसस्य अधिदेवता प्रजापतिरिति तदाह— "प्राजापत्य मिति। 'उखा' इति 'यत्' अस्ति, 'तत्' 'प्राजापत्यं कर्म'; प्रजापत्यात्मकोऽग्निः, तद्धारणार्थकत्वात्। प्राजापत्योऽग्निः, तत्सम्बन्धि 'अहन्' अष्टम्यर्थः। "सुपां सुलुक्०" * ॥ २३ ॥

पुनः प्रशंसितु मनुवदति— "यद्देवाष्टकाया मिति। 'एतत्' अहः अष्टम्याख्यम्, 'संवत्सरस्य' 'पर्व' सन्धिस्थानीयम्; यथाङ्गुलेः पर्व सन्धिस्थानीय मेवम्। तत् पक्षस्य अन्तात् अष्टमी मध्येति पर्वरूपा भवति, तद्द्वारा संवत्सरस्यापीति; 'अग्नेः' अप्येषा 'उखा' 'पर्व'; सन्धिस्थानत्वात्, अत्र ह्यग्निः सन्धीयते ॥ २४ ॥

अथाष्टम्या मुखासम्पादन मष्टकानामसाम्याद्युक्त मिति तत् पुनः प्रशंसति— "यद्देवाष्टकाया मष्टका वा उखेति। अष्टकानामाष्टसङ्ख्या भवतीति तदष्टसङ्ख्यावत्त्व मुखायां दर्शयति— "निधिर्द्वा उद्धी इति। 'निधिः' नाम उखायाः प्रथमं मृत्पिण्डस्य प्रथमेन अग्निधारणार्थोऽधस्तात्प्रदेशः। 'द्वा उद्धी', 'उद्धिः' नाम प्रथितमृत्पिण्डस्योपरि प्रक्षिप्तः अन्यो मृत्पिण्डः, तौ द्वौ। 'रास्ना' नाम उखाकण्ठलग्ना 'तिरश्ची' तिरःस्थाना वृत्ताकारा †। एवं निध्यादिचतुष्टयम्। 'अष्टीः' प्रतिदिश मेकैकं

* पा० सू० ७. १. ३९।

† "विहृतीये उत्तरे वर्त्तिं सर्वतः करोति"—इति। 'उखाया उत्तरभागस्योत्तरे उपरि वर्त्तमाने तृतीये भागे सर्वासु दिक्षु मध्यमयीं वर्त्तिं वर्ण्याकारां रास्नां करोति' इति तत्र (का० श्रौ० सू० १६. २. ३०) कर्काचार्यः।

वर्त्तिपर्यन्ताः 'चतस्रः' आश्रयभूताः, ताश्चतस्रः। एवम् 'अष्टौ' उखायां सम्पन्नाः *। अतोऽष्टम्या मष्टकाकरणं युक्त मित्यर्थः।

उत्तरत्र पञ्चमाध्याये †— "मृत्पिण्ड मुपादत्ते"-इति प्रक्रम्य, "तम् प्रथयति वसवस्त्वेति, "अयं हैव लोके निधिः"-इति प्रथमस्य पृथिवीरूपतोक्ता ‡। "अथ पूर्वं मुद्धि मादधाति ०—० अथोत्तर मुद्धि मादधाति"-इति §, "अथ तिरश्चीं रास्नां पर्यस्यति ०—० अथ चतस्र ऊर्द्ध्वीः करोति"-इति ‖। अत्र कात्यायनः— "ऊर्द्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्त्ति प्राप्ताः"-इति ¶ ॥ २५ ॥

चयनसहितस्य सोमयागस्य दीक्षाकालं विधत्ते— "अमावास्यायां दीक्षत इति। फाल्गुनामावास्यायां दीक्षां कुर्यात्। सूत्रितञ्च— "दीक्षामावास्याया मामावास्येनेष्ट्वेति **। अमावास्यासम्बन्धीष्टिकरणादनन्तर मेव दीक्षा कर्त्तव्या; पौर्णमास्योपक्रमाद् दर्शयागेन तत्परिसमाप्तेरवकाशत्वादित्यभिप्रायः। "अमावास्यायै वा अधीति। अधिः पञ्चम्यर्थानुवादी। 'यन्नः' चन्द्रमाः, 'तायते' विस्तार्यते; पौर्णमास्यां देवैरालब्धस्य

---

* निधिः, उद्धी द्वौ, रास्ना, वर्त्तयश्चतस्र इत्यष्टौ।

† 'चतुर्थाध्याये'—इति ख-पाठः।

‡ इहैव काण्डे उपरिष्टात् ५ अ० २ ब्रा० १, ३ क०।

§ इहैवोत्तरत्र ५ अ० २ ब्रा० ४, ५ क०।

‖ इहैवोत्तरत्र ५ अ० २ ब्रा० ११—१४ क०।

¶ का० श्रौ० सू० १६. ३. ३१।

** का० श्रौ० सू० १६. ४. २७।

चन्द्रस्य ममावास्यायां माप्यायनस्योक्तेः। 'यतः' यस्मात् दिनाद्यङ्गां (?) विस्तारितम्, तस्मात् अहमपि 'यज्ञम्' उत्पादयेयमिति। यद्वा, यज्ञपदेन दर्शेष्टिः; दर्शपूर्णमासौ हि सर्वस्या इष्टेः प्रकृतिभूताविति। तस्मादस्या उपरि 'यज्ञस्तायते'। "तनोतेर्यकि"—इति * नलोपे "अकृत्सार्वधातुकयोः"—इति † दीर्घे कृते 'तायते'—इति रूपम् ॥ २६ ॥

प्रकारान्तरेण दीक्षाकरणं प्रशंसति— "यद्वेवामावास्यायां रेतो वा एतदिति। 'दीक्षते' यजमान इति 'यत्', 'एतत्' उखारूपायां 'योनौ' 'रेतोभूत मात्मानं' सिक्तवान्। दीक्षाकरण मग्न्युत्पादनात् प्रागवस्थेति रेतस्सेकात्मकत्व मित्यर्थः। 'यत्' यदा 'दीक्षितः' प्राप्तदीक्षो 'भवति', तदा तस्मै रेतोरूपत्वेनोत्पद्यमानायाग्नये 'पुरस्तात्' पूर्वं 'लोकं' स्थानं करोति, स्थाने निष्पन्ने पश्चात् अग्निर्जायते। अय मर्थः,— दीक्षाप्रारम्भोऽग्नेरुत्पत्तिप्रागवस्था, तत्समाप्तिरेव जनिष्यमाणस्याग्नेः स्थानकरण मिति स्थानसम्पादनानन्तर मुत्पत्तिं लोकप्रसिद्धया द्रढयति— "तस्मादाहुः कृतं लोक मिति ॥ २७ ॥

साग्निके क्रतौ "संवत्सरभृत मेव चिन्वीत"—इत्याम्नानात् ‡

---

* पा० सू० ६. ४. ४४।

† पा० सू० ७. ४. २५।

‡ उपरिष्टात् द्रष्टव्यम् (१० का० २ अ० ६ ब्रा० ६ क०)। "तयोर्विभाग माह, साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः— 'संवत्सरं चिन्वीतेति (शत० ब्रा० १०. २. ६. ६.), पवित्रे चतस्रो दीक्षा आम्नाताः 'पवित्रश्चतुर्दीक्षः'—इति (का० श्रौ० सू० १५. १. ४.)" —इति च का० श्रौ० १६. ६. ६. सूत्रे कर्कः।

न्यूनातिरेकाभावेन संवत्सरपर्यन्तं दीक्षा कर्त्तव्येति सिद्धान्त-यितुं न्यूनातिरेकपक्षयोर्दोष मुपन्यस्यति— "स यत् कनीयः संवत्सरादिति। अग्निस्तावत् संवत्सरात्मकः, तादृशस्याग्नेरव-यवा यजुष्मत्य इष्टकाः षट्त्रिंशत्सङ्ख्याका इति दशमे काण्डे वक्ष्यते *। तत्र दीक्षाणां संवत्सरादर्वाक्त्वे कतिपयाना मिष्टकाना माधारभूतकालराहित्यादधिका भवन्तीति प्रदेश-रहिता इष्टका एवोपहिता हितवान् भवतीति। एवं तर्हि एतद्दोषपरिहाराय दीक्षाणां वर्षाधिक्ये इष्टका न्यूना इति लोका अतिरिक्ता भवन्तीति सोऽपि नेष्टव्यः॥

इष्टकाकाल मनुवदति— "अथ यदमावास्यायां दीक्षित्वामावा-स्यायां क्रीणातीति। प्रथमायां फाल्गुनामावास्यायां 'दीक्षित्वा', ततः कतिदिवसं दीक्षितधर्मानाचरन् पुनः फाल्गुनावास्यायां राजानं सोमं 'क्रीणाति', अतो न्यूनाधिकभावौ न स्तः। इष्टकातिरेको लोकातिरेको वा नास्तीत्यस्मिन् पक्षे गुणान्तरं दर्शयति— "अथास्यापूर्यमाणपक्ष इति। दीक्षानन्तरं राजक्रये उपसद्यागः, तत्र हि अनूपसद मग्निं चिनोतीति उपसत्स्वग्नि-चयनं स्यात्, तच्चयनं शुक्लपक्षे सम्पद्यत इति गुणः॥ २८॥

एवं दीक्षाणां संवत्सरकालीनत्वेनेष्टेः कालसाम्ये सिद्धान्ते-ऽपि वेदवादिनां कालविषया मधिका माशङ्कां दर्शयति— "तदाहुर्यथावत्य एतस्येति। यद्यपि प्रथमफाल्गुनामावास्यायां दीक्षित्वा, आगामिफाल्गुनामावास्यायां सोमक्रयावधिरूपवत्सर-

* "षष्टिश्च त्रीणि च शतानि परिश्रितः, षष्टिश्च त्रीणि च शतानि यजुष्मत्यः"—इति १० का० ५ अ० ४ ब्रा० ५ क०।

स्त्रीकारे अग्न्यवयवभूतेष्टकानां कालरूपाधाररात्रित्य माधिक्यं वा नास्ति, तथापि क्रयादनन्तराण्यहानि उपसदर्थानि विद्यन्ते ; तत्र कथ मिष्टकाभिर्यजमानस्य लोका उपहिता भवन्तीति प्रश्नः।

"यद्वा अमावास्यायां दीक्षिलेत्यादिपरिहारवाक्यस्याय मर्थः— दीक्षादिक्रयकालपर्यन्तो यावान् कालरूपो लोकः, तावत्य इष्टका अभूवन्निति तावदविवादम्। यदि तस्मादूर्द्धानि यान्यहानि, सोऽवकाशोऽध्वर्यौरग्निचयनस्य। यदि तान्यहानि चयनकालो न भवेत्, तर्हि 'क्को हि' कुत्रावकाशे 'चिनुयात्'? अवकाशस्याभावात्। अन्येष्वहस्सु इष्टकोपधानं नास्तीति न मन्तव्य मिति। "यावन्ति वै संवत्सरस्याहोरात्राणि"–इत्यादिना क्रयोत्तरकालेऽपीष्टकोपधान मस्तीत्याह। संवत्सरधारणात् तद्रूपोऽग्निरित्युक्तम्, तत्र इष्टका अग्न्यवयवा इति च, अतः संवत्सरस्य यावन्ति दिनानि, तावत्य इष्टका उपहिता इत्युक्ते संवत्सरे त्रयोदशमासस्यापि सम्भवात् तत्सङ्ख्या इष्टकोपधानम्। अतस्त्रयोदशमासरूपाणि क्रियोत्तराण्यहानि तत्सङ्ख्याकाभिरिष्टकाभिर्यजमानलोका उपहिता भवन्तीत्यनेन यावन्तो लोकास्तावत्य इष्टका उपहिता इत्यर्थः ॥ २९ ॥

पश्वालम्भोखासम्भरणदीक्षाकाला ये उक्तास्तेषां प्राथम्य मुपजीव्य प्रशंसति—"एतद्वै यैव प्रथमा पौर्णमासीति।

अथ पशुकर्मणः संवत्सररूपाग्नेश्च सङ्ख्यासम्पत्तिं दर्शयितुं प्रतिजानीते— "अथातः सम्पदेवेति। 'सम्पत्' सम्पत्तिः, सङ्ख्यासाम्यम्, तत् पशुकर्माग्न्योर्दर्शयिष्यत इत्यर्थः ॥ ३० ॥

"तदाहुः कथ मस्यैतत् कर्मेति। अग्निः संवत्सरात्मकः, तम् 'कथ मेतत् कर्माप्नोति'। अत्रानुपपत्तिं स्वय मेव दर्शयति—

"कथं संवत्सरेणेति। संवत्सररूपेण 'अग्निना' सह 'कथं सम्पद्यते' सङ्ख्यातः कथं सम्पन्नं भवेदिति प्रश्नार्थः॥

पञ्चपशुप्राजापत्यवायव्यरूपपशुत्रयेऽपि सम्पत्तिं दिदर्शयिषुः पञ्चपशुग्रन्थे प्रथमं दर्शयति— "एतेषां वै पञ्चानां पशूना मिति। तस्मिन् यज्ञे 'सामिधेन्यः चतुर्विंशतिः'। उक्ताः प्रकृतिगताः पञ्चदश, "समास्त्वाग्ने ऋतवः"–इत्याद्या मध्ये विहिता नवेति चतुर्विंशतिः। 'द्वादश आप्रियः'। "ऊर्ध्वा अस्य समिधो भवन्ति"–इत्याद्याः आप्रीसञ्ज्ञकाः प्रयाजयाज्या द्वादशोक्ताः *। 'एकादश अनुयाजाः'। 'एकादश उपयजः' उपयजो नाम पशुगुदहोमाः। तदाहापस्तम्बः— "एकादशधा तिर्यक् छित्त्वाभिन्दन्नपर्यावर्त्तयन्ननूयाजानां वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति"–इति †। एताः सर्वा मिलित्वा 'अष्टापञ्चाशत्' सङ्ख्या सम्पन्ना॥ ११॥

अस्तु, प्रकृते किमायात मित्याह— "ततो याष्टाचत्वारिंशदिति। उक्ताया मष्टापञ्चाशत्सङ्ख्यायां मध्ये दश सङ्ख्यां हित्वा अवशिष्टा अष्टाचत्वारिंशत्सङ्ख्या; तावत्सङ्ख्याक्षरजगतीच्छन्दोरूपा, जगत्यपि हि द्वादशाक्षरपादेति पादचतुष्टये उक्तसङ्ख्या भवति। अस्यां भूमौ सर्वं जगत् प्रतिष्ठित मिति भूमिरपि जगतीशब्दवाच्या, सैव हि सर्वाग्निचयनाधिकरण मिति आधाराधेययोरभेदोपचारेण भूमिरेव अग्निशब्दवाच्या। अग्नियावत्परिमाण-

---

* पुरस्तात् (७४—८० पृ०) द्रष्टव्याः।

† आप० श्रौ० सू० ७. २७. ११। "सहस्रं गच्छ स्वाहेत्येतैर्मन्त्रैः"—इति तत्रत्यविशेषः।

वचन:, यच्चाग्नेर्मात्रावयवो यावती यत्परिमाण:, तत्कर्मसङ्ख्याकं तावदग्निं तदवयवसङ्ख्याकं भवति ॥ ३२ ॥

प्रोक्ताया एव सङ्ख्याया: प्राजापत्यात्मना सम्पत्तिं प्रशंसति— "यद्वेवाष्टाचत्वारिंशदिति। पूर्ववद् व्याख्येयम् ॥ ३३ ॥

अवशिष्टां दशसङ्ख्यां प्रशंसति— "अथ यानि दश ता दशाक्षरेति। 'विराट् अग्नि:' अन्नात्मकत्वात्। अग्निर्विराट् अन्नम् इति श्रुते: विराजोऽन्नत्वम् *। अग्नेर्दिगात्मकत्वं प्रागादिदिक्षु विभज्योपधीयमानत्वात्। प्राणापानादय: पञ्च, नागकूर्मकृकलदेवदत्तधनञ्जयाख्या: पञ्चेति 'दश प्राणा:'। यद्वा, प्राणा दश इन्द्रियाणि। अग्ने: प्राणात्मकत्वम्, हिरण्यगर्भात्मकत्वात्। "यावानग्निरित्यादि पूर्ववत् ॥ ३४ ॥

एवं पञ्चपशुपचेऽष्टापञ्चाशतं सङ्ख्या मग्न्यात्मना स्तुत्वा संवत्सराग्निना सम्पत्तिं वक्तुं सङ्ख्यान्तरं दर्शयति— "वपापशुपुरोडाश इति। 'वपा' वैश्वानर:, 'पशु पुरोडाश:' इति द्वौ। एताभ्यां सह षष्टिसङ्ख्या जाता। 'मासस्य' संवत्सरावयवभूतस्य षष्टिसङ्ख्यानि अहोरात्राणि विद्यन्ते, तत् षष्टिसङ्ख्याकं मासं तावत्सङ्ख्याक महोरात्र माप्नोति। 'आप्त:' सम्पन्न: 'मास:' स्वावयविनम् 'ऋतुम्' 'आप्नोति'; ऋतुर्हि मासद्वयात्मक:। 'ऋतु:' अपि 'संवत्सरम्' आप्नोति; ऋतुषट्कात्मको हि संवत्सररूपोऽग्निरिति प्रागुक्तम्। अत: सामिधेन्यादि-वपापशुपुरो-

---

* "अग्निं मन्थन्ति ०—० अन्नं विराट्"—इत्यादि (तै० ब्रा० १. ६. ३. ३.), अन्नं विराट्, विराजैवान्नाद्य मवरुन्धे"—इत्यादि च (तै० ब्रा० १. ८. २. २.) द्रष्टव्यम्।

ऽद्याऽन्तर्गता षष्टिसङ्ख्या संवत्सररूपात्मना सम्पन्नेति सर्वान् संवत्सरमध्यवर्तिनः कामानाप्नोति। न चास्मिन् कर्मणि षष्ठानि बहूनि सङ्ख्येयानि विद्यन्ते, तत् कथं षष्टिसङ्ख्येत्युक्ता अत आह— "अथेत्यादि। अथेति प्रश्ने। 'अतः' उक्तसङ्ख्यातः 'अन्यत्' 'यत्' अस्ति, 'तत्' 'संवत्सरे' विद्यमानम् 'अन्नम्' एव 'तत्' ॥ ३५ ॥

एवं पञ्चपशुपक्षे सम्पत्तिं दर्शयित्वा प्राजापत्यपशुपक्षे दर्शयति— "अथैतस्य प्राजापत्यस्येति। अग्नेः 'एकविंशतिः सामिधेन्यः' हविः, पशुहृदयादिरूप मित्यर्थः। एव मष्टापञ्चाशत् सम्पन्ना। तत्र पूर्वोक्तं फल मतिदिशति— "स योऽष्टापञ्चाशति काम इति। अत्रापि संवत्सराग्निना सम्पत्तिं वक्तुं सङ्ख्यान्तरं समुच्चिनोति— "द्वावाघाराविति। स्रुवाधारः स्रुच्याधारश्चेत्यर्थः। एवं षष्टिसङ्ख्यायां सम्पन्नायां पूर्वोक्तषष्टिफल मतिदिशति— "स यः षष्ट्यां कामोऽत्रैव त मितिः ॥ ३६ ॥

वायव्यपशुपक्षे सम्पन्ने सम्पत्तिं दर्शयति— "अथैतस्य नियुत्वतीयस्येति। "द्वौ स्विष्टकृताविति। पशुपुरोडाशः स्विष्टकृत्, पशुश्च स्विष्टकृच्चेति द्वय मित्यर्थः। "वनस्पतिश्च वसाहोमश्चेति। पृषदाज्यद्रव्यको वनस्पतियागः स्विष्टकृतः प्रागनुष्ठेयः, हविषो याज्याया अर्द्धर्चे प्रतिप्रस्थात्रा कर्त्तव्यो वसाहोमः। अत्रापि फलद्वयवाक्यं पूर्ववद् योज्यम् ॥ ३७ ॥

पश्वनुष्ठानस्य चयनकर्मादित्वात् तदवसानः कर्त्तव्यः; देवताविसर्गरूपसमिष्टयजुर्होमः समाप्तिरूपावभृथश्च न कर्त्तव्याविति केषाञ्चित् पक्षं सोपपत्तिक मुपन्यस्यति— "तदाहु-

र्मैतस्य पशोरिति । पशुपशुपक्षेऽपि "अजेन चरति"–इत्युक्तेः *
अजस्य वा प्राजापत्यस्य वा वायव्यस्य वा पशोरित्यर्थः । 'अग्नेः'
अग्निचयनकर्मणः 'एषः' उक्तः 'पशुः' पशुयागः 'आरम्भः'
कर्मोपक्रमः ; आदावनुष्ठीयमानत्वात् । 'समिष्टयजूंषि' इति
यत् , तत् 'देवतानां' 'व्यवसर्गः' विसर्जनम् । 'अवभृथः' इति
यत् , तत् 'संस्था' कर्मसमाप्तिः । अतः कर्मोपक्रमे एव देवता-
विसर्जनं कर्मसमापनं च कर्तुं न युक्त मित्यर्थः ।

तन्मतं निरस्यति— "स वै स मेव स्थापयेदिति । पूर्वं 'प्रजा-
पतिरेतेन पशुना इष्ट्वा' 'अपश्यद्' विचारितवान् ,— 'यथा' येन
प्रकारेण 'एतस्य' 'अग्नेः' 'अन्तं' 'न' 'पर्ययेत्' पर्यगच्छत्, चिकीर्ष-
माणः स स्वय मेव तदपश्यत् इत्यन्वयः । यद्येतेनैव पशु-
नेष्ट्वाग्नेरन्तं परिगच्छेत् , तर्हि समिष्टयजुरादिकं न कर्त्तव्यं
स्यात् ; न तथा ; एकेन पशुना यागेऽपि इतरेषां पशुशरी-
राणा मप्सु प्रासनात् तत्परिमाणमृण्मयशीर्षेष्टकोपधानादिकं
विना अग्न्यन्तगमनाभावसिद्धेः पशुकर्म संस्थापयितव्य मित्य-
भिप्रायः ।

संस्थापनाकरणे अनिष्टं दर्शयितु मनुवदति— "यद्येव
संस्थापयति प्राण एष पशुरिति । पशोः प्राणत्वं पुरस्तादुक्तम् ।
'तस्य' पशोः सम्बन्धि 'यत्' कर्म 'अन्तरियात्' व्यवहितं कुर्यात् ,
'प्राणस्य' सम्बन्धिन मेकदेश मेव व्यवहितं कृतवान् भवति ।
'ततः' च प्राणादन्तरितः स अनन्तर मेव 'म्रियेत' मृतो
भवति ; 'तस्मात्' पशुकर्म 'संस्थापयेदेव' इत्यर्थः ॥

---

* पुरस्तादृ द्रष्टव्यम् ( १ ब्रा० ७ क० ५४, ६८ पृ० । का० श्रौ०
सू० १६. १. १५—२२. ) ।

अथ पशुयागानन्तरं चयनकर्मणि यजमानकर्तव्यानां नियमानां मीमांसा वक्ष्यत इति प्रतिजानीते—“अथातो व्रताना मेवेति ॥ १८ ॥

कर्तव्याकर्तव्यविचारं पूर्वोत्तरपक्षाभ्यां निरूपयति—“तदाहु र्नैतेनेति। ‘पशुः’ नाम ‘पूर्वा’ प्रथमभाविनी ‘दीक्षा’, दीक्षाकर्मोपक्रमार्थं मिति मत्वा पूर्वपक्षोद्भवः। ‘अतः’ पशुकर्मणो दीक्षात्वात् यजमानस्योपरि शयनादिकम् ‘अनवक्लृप्तम्’ अयुक्त मित्यर्थः। दूषयति—“नेत्वेवैषा दीक्षेति। अत्र दीक्षाशब्दस्य मुख्यार्थस्वीकारः। मुख्यदीक्षायां “मेखलया दीक्षयति”—“कृष्णाजिनेन दीक्षयति”—इति *, मेखलाजिनयोरत्राभावात् इयं दीक्षा न भवतीत्यर्थः। किं तत् पश्वनुष्ठान मिति, तत्राह—“इष्टकां वा एतां कुरुत इति। पशुयागो नामेष्टकाकरण मेव। ‘तस्मात्’ मांसोपयोमने ‘कामं’ कुर्यात्। “एतद्ध सर्व मन्न मिति। पुरुषादिपशूनां सर्वान्नत्वात्। ‘तद्’ ‘यदा’ ‘आप्तम्’ ‘आरब्धं’ प्रक्रान्तं भवति, तस्मात् ‘आ मधुनः’ मर्यादाया माङ्, मधुपर्यन्तम् ‘यानि’ ‘अशनानि’ अन्नानि, ‘तेषां’ मध्ये ‘अस्य’ यष्टुः ‘कामाशनम्’ इच्छया भोजनम्। किं सर्वदा? नेत्याह—“यदि न लभेतेति †। ‘यदि’ हि अन्नं ‘न’ ‘लभेत’ लब्धं भवेत्, तर्हीत्यर्थः। एकं नियम माह—“मिथुनं तु नोपेयादिति ‡। मिथुनवर्जनं सर्वथा कार्यं

---

* तै० सं० ६. १. ३. १४, ४ प्रभृतिकं द्रष्टव्यम्।

† “यदि लभेत”—इत्येव सर्वमूलपुस्तकपाठः।

‡ अहनि मांसमैथुने वर्जयेत्”—इति का० श्रौ० सू० २. १. ८। ‘अहनि, अस्मिन् प्रकरणे अत्येऽहनि’—इति तत्र तट्टीकाकारः।

मित्येतत् प्राप्तम्, तस्यावधिं दर्शयति— "पुरा मैत्रावरुण्यै पयस्याया इति। पञ्चम्यर्थे चतुर्थी। आमिक्षायागपर्यन्तम्। अत्र कात्यायनः— "मैथुनं वर्जयेदा पयस्यायाः, मांसो-पर्यासने चैव्वन्"-इति *।

तस्य नियमस्य विधायकं ब्राह्मण मतिदिशति— "तस्यो-परि बन्धुरिति। 'उपरि' उत्तरत्र नवमकाण्डे "अथ मैत्रा-वरुण्या पयस्यया यजते"-इति † मैत्रावरुणीं पयस्यां विधाय आम्नातम्— "स यद्येतयानिष्ट्वा मानुष्यां चरेत् प्रत्यवरोहः स यथा देवः सन् मानुषः स्यात् तादृक् तत्"-इति ‡॥ ३८॥

अस्मिन् यज्ञे ब्रह्मसम्प्रदायकं दक्षिणादानं पूर्वोत्तरपक्षाभ्यां निषेधयति— "तदाहुर्दद्यादेतस्मिन् यज्ञे दक्षिणा मिति। 'ब्राह्मणः' 'आदिष्टदक्षिणाम्' प्रतिनियतदक्षिणाम्। 'भिषज्यितः' चिकित्सितः। भिषज्-शब्दात् कण्ड्वादिभ्यो यक्, तदन्तात् कर्मणि क्तः, इडागमः। "इष्टकां वा एता मिति। पशुयागो नामेष्ट्याकरणम्, तस्मात् प्रतीष्टकं दक्षिणादानसमानम्, पशु-यागे दक्षिणादान मित्यर्थः। पशौ देयाया दक्षिणायाः कालं दर्शयति— "अमुष्मैव दद्यादिति। 'अमुर्हि' अदःशब्दो विप्र-कृष्टवचनः। चयनकर्मणो दक्षिणादानकाले 'अस्य' ब्रह्मणो

---

* का० श्रौ० सू० १६. १. २८, २६। "पयस्या मैत्रावरुणी, तत्रैव दोहनं प्रकृते वा दध्यानयति"—इति, "मित्रावरुणाभ्यां पयस्याम्" —इत्यादि च द्रष्टव्यम् (४. ४. ७, ८; ६. १. १६। पञ्चमं हविः)।

†, ‡ ६ का० ५ अ० १ ब्रा० ५४ क० द्रष्टव्यम्। "अग्ने व्रतपतये व्रतेऽहनि मैथुनमांसभोजने चेत्"—इति च तत्र प्रायश्चित्तं सूचि-तम् (२५. ४. २७.)।

'यद्' देयम् 'उपकल्पेत' अवक्लृप्तं स्यात्, तदा तद् देय मित्यर्थः ॥ ४० ॥ १ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे द्वितीयेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम्. )

एतद्वै देवा अब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाᳪं स्वयमातृण्णां चितिमपश्यत् तस्मात्तां प्रजापतिनोपदधाति ॥ १ ॥

तमग्निरब्रवीत्। उपाहमायानीति केनेति पशुभिरिति तथेति पशिवष्टकया ह तदुवाचैषा वाव पशिवष्टका यद्दूर्वेष्टका तस्मात् प्रथमायै स्वयमातृण्णाया ऽअनन्तर्हिता दूर्वेष्टकोपधीयते तस्मादस्या ऽअनन्तर्हिता ओषधयो ऽनन्तर्हिताः पशवो ऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येष एतयोपैत् * ॥ २ ॥

---

* 'एतयोपैत्'—इति ग, घ। 'एतयोपैत्'—इति क।

ते ऽब्रुवन् । चेतयध्व मेवेति चिति मिच्छ-
तेति वाव तदब्रुवन्निति ऊर्ध्वं मिच्छतेति तेषां
चेतयमानाना मिन्द्राग्नी च विश्वकर्मा चान्त-
रिक्षं द्वितीयाᳪ स्वयमातृण्णां चिति मपश्यं-
स्तस्मात् ता मिन्द्राग्निभ्यां च विश्वकर्मणा चोप-
दधाति ॥ ३ ॥

तान् वायुरब्रवीत् । उपाह मायानीति केनेति
दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद्
द्वितीयायै स्वयमातृण्णाया ऽअनन्तर्हिता दिश्या
उपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्त-
र्हितो वायुरनन्तर्हितो ह्येष एताभिरुपैत् * ॥ ४ ॥

ते ऽब्रुवन् । चेतयध्व † मेवेति चिति मिच्छतेति
वाव तदब्रुवन्निति ऊर्ध्वं मिच्छतेति तेषां चेतय-
मानानां परमेष्ठी दिवं तृतीयाᳪ स्वयमातृ-
ण्णां चिति मपश्यत् तस्मात् तां परमेष्ठिनोपदधा-
ति ॥ ५ ॥

---

* 'एताभिरुपात्'—इति ग, घ ।

† 'तेऽब्रुवंश्चेतयध्व'—इति क, ङ ।

त मसावादित्योऽब्रवीत् । उपाह मायानीति केनेति लोकम्पृणयेति तथेत्येष वाव लोकम्पृणा-त्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णा-मन्तर्हितालोकम्पृणाया ऽउपधीयते तस्मादसावा-दित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येष एत-योपैत् * ॥ ६ ॥

तदेता वाव षड् देवताः । इदᳪ सर्व्वं मभवन् यदिदं किञ्च ते देवाश्चऽर्षयश्चाब्रुवन्निमा वाव षड् देवताः । इदᳪ सर्व्वं मभूम्नुप तज्जा-नीत यथा व्वय मिहाप्यसामेति तेऽब्रुवंश्चेतयध्व मिति चिति मिच्छतेति व्वाव तदब्रुवंस्तदिच्छत यथा व्वय मिहाप्यसामेति तेषां चेतयमानानां देवा द्वितीयां चिति मपश्यन्नृषयश्चतुर्थीम् † ॥ ७ ॥

तेऽब्रुवन् । उप व्वय मायामेति केनेति यदेषु लोकेषूपेति तथेति तद्यदूर्द्ध्वं पृथिव्या अर्वाचीन मन्तरिक्षात्तेन देवा उपायंस्तदेषा द्वितीया चिति-

---

* 'एतयोपैत्'—इति ग, घ। 'एतयोपैत्'—इति ङ।

† '०चतुर्थीम्'—इति ग, घ। 'चतुर्थीम्'—इति ङ।

ऽथ यदूर्ध्वं मन्तरिक्षादर्वाचीनं दिवस्तेनऽर्षय उपायं-स्तदेषा चतुर्थी चितिः ॥ ८ ॥

ते यदब्रुवन् । चेतयध्व मिति चितिं मिच्छ-तेति वाव तदब्रुवन् यच्चेतयमाना अपश्यंस्तस्मा-च्चितयः ॥ ९ ॥

प्रजापतिः प्रथमां चिति मपश्यत् । प्रजा-पतिरेव तस्या आर्षेयं देवा द्वितीयां चिति मप-श्यन् देवा एव तस्या आर्षेय मिन्द्राग्नी च विश्व-कर्मा च तृतीयां चिति मपश्यंस्त ऽएव तस्या आ-र्षेय मृषयश्चतुर्थीं चिति मपश्यन्नृषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चिति मपश्यत् परमेष्ठ्येव तस्या आर्षेयं स यो हैतदेवं चितीना मार्षेयं वेदार्षेयवत्यो हास्य बन्धुमत्यश्चितयो भवन्ति ॥ १० ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२. ३.] ॥

उत्तरत्रोपधास्यमानानां चितीना मृषिदेवतासम्बन्धेनोत्पत्ति-प्रकारः, तत्सङ्ख्याविशेषः, स्वयमातृण्णेष्टकानां स्थानविशेष-प्रदर्शनञ्च तृतीये ब्राह्मणे प्रतिपाद्यते। स्वयमातृण्णेष्टकास्तिस्रो

भूम्यन्तरिक्षद्युलोकात्मिकाः। अत एव प्रथममध्यमोत्तमासु चितिषूपधेयाः।

तत्र प्रथमायाश्चितेरुपपत्तिं दर्शयति— "एतद्वै देवा अब्रुवन्निति। 'एतद्' वक्ष्यमाण मर्थजातम् अवोचत्। तदाह— "चेतयध्व मितीति। स्वय मेवैतस्य पदस्यार्थ माह— "चिति मिच्छतेतीति। चेतयध्व मित्येतेन चिति मिच्छते त्याव तदब्रुवन्निति। 'तेषां' 'चेतयमानानां' चिति मिच्छतां देवानां मध्ये प्रजापतिः 'इमां' भूमिरूपां प्रथमां 'स्वयमातृण्णां' स्वय मेव मध्ये छिद्रां शिलारूपा मिष्टकां 'चितिम्' 'अपश्यत्'। यस्मात् प्रजापतिरपश्यत्, 'तस्मात्' 'ताम्' इष्टकां 'प्रजापतिना' "प्रजापतिष्ट्वा सादयतु"–इत्यादिना * प्राजापत्यमन्त्रेण 'उपदधाति' ॥ १ ॥

तस्मिन् मन्त्रे † "अग्निष्ट्वाभिपातु"–इत्यग्निसम्बन्धः श्रूयते, त मपि दर्शयति— "त मग्निरब्रवीदिति। 'तम्' इष्टकाकारं प्रजापतिम् अग्निम् 'अग्निः' 'अहं' स्वयम् 'उपायानि' आगच्छानि 'इति' 'अब्रवीत्'। 'केन'–इत्यादिनी प्रश्नोत्तरे प्रजापत्यग्न्योः; 'तथा'–इति प्रजापतिरङ्गीकारोक्तिः। 'पशुभिः'–इति यदग्नि-

* वा० सं० १३. १९—१६।

† 'तस्मिन् चतुर्थे वर्गे'–इति वक्तव्यम्; "अग्निष्ट्वाभिपातु"–इत्यस्य तत्तृतीये मन्त्रे समाम्नानश्रुतेः। वस्तुतो हि ध्रुवासीत्यादीनां चतुर्णा मेव मन्त्राणां तत्र विधानम्। तथाहि– "स्वयमातृण्णां पुरुषे प्राक्रां छिद्रां ध्रुवासीति"–इति का० श्रौ० सू० १७. ४. १५। तदेवं स्वयमातृण्णोपधानमन्त्राणां प्रथमो ध्रुवासीति, द्वितीयः प्रजापतिष्ट्वेति, तृतीयो भूरसीति, चतुर्थो विश्वस्मा इति, तस्यैवोत्तरार्द्धे श्रुतम् अग्निष्ट्वाभिपात्विति।

मोक्तम्, तद् विवृणोति— "पश्चिष्टकया ह तदुवाचेति। पश्चिष्टकास्वरूप माह— "यद् दूर्वेष्टकेति। दूर्वेष्टकया सहाग्नि-रह माधानीत्यर्थः सिद्धो भवति। यस्मादेतया अग्निरनन्त-र्हित उपागच्छत्, 'तस्मात्' प्रथमं स्वयमातृण्णेष्टकोपधानानन्तर मेव 'दूर्वेष्टकोपधीयते'। तदिदं प्रशंसति— "तस्मादस्या अनन्तर्हिता ओषधय इति। 'अस्याः' भूमेः 'ओषधयः' अनन्तर मेवोत्पन्नाः; दूर्वाणा मोषधित्वात्। पशूनां दूर्वात्वात् दूर्वेष्टकया 'पशवः' अपि 'अनन्तर्हिताः' उपहिता भवन्तीति। अत एव स्वयमातृण्णोपधानानन्तरं दूर्वेष्टकोपधानम्।

तदुपधानमन्त्रद्वयं च सप्तमे काण्डे समाम्नास्यते— "स्वयमातृण्णा मुपदधाति"-इत्युपक्रम्य *, "तां वै प्रजापतिनोपदधाति" †, "अथ दूर्वेष्टका मुपदधाति" ‡, "काण्डात्काण्डात् प्ररोहन्तीति"-इति §। प्रथमं स्वयमातृण्णोपधानमन्त्रे प्रजापत्यभिसम्बन्धः, तस्या भूमिरूपत्वं चोक्तम्— "प्रजापतिस्त्वासादयत्वपाम्पृष्ठे"-इत्युपक्रम्य ‖ "भूरसि भूमिरस्यदितिरसि" -इति ¶ मध्ये, "अग्निष्टाभिपातु मह्या स्वस्त्या **"-इति चान्त इति ॥ २ ॥

---

* ७ का० ४ अ० २ ब्रा० १ क०।

† ७ का० ४ अ० ३ ब्रा० ५ क०।

‡ ७ का० ४ अ० २ ब्रा० १० क०।

§ ७ का० ४ अ० २ ब्रा० १४ क०। "काण्डात्काण्डात्"—इति वा० सं १३. २०। "मूलाग्रवर्ती दूर्वा तस्यां पुरस्तात् भूमिं प्राप्तां काण्डात् काण्डादिति"—इति चात्र का० श्रौ० सू० १७. ४. १८।

‖ ७ का० ४ अ० २ ब्रा० ६ क०।

¶ वा० सं० १३. १८। ** वा० सं० १३. १६।

अथ द्वितीयस्वयमातृण्णेष्टकाप्रधानायाः तृतीयचितेरुत्पत्तिं दर्शयति— "तेऽब्रुवन्निति। पूर्ववद् व्याख्येयम्। चितिं मिच्छतेति यदुक्तम्, तत्तात्पर्यं दर्शयति— "इत ऊर्ध्वं मिच्छतेति। 'इतः' पञ्चनुष्ठानाद् 'ऊर्ध्व' चितिम् 'इच्छत' इत्यर्थः। 'इन्द्राग्नी च विश्वकर्मा च' अन्तरिक्षरूपां 'द्वितीयां' स्वयमातृण्णेष्टकाम् 'अपश्यन्'। 'तस्मात्' 'ताम्' इष्टकाम् इन्द्राग्निदेवत्यमन्त्रेण *, विश्वकर्मदेवत्यमन्त्रेण † चोपदध्यात् ॥ ३ ॥

तन्मन्त्रे च "वायुष्ट्वाभिपातु"-इति ‡ वायुसम्बन्धः श्रूयते, तमाह— "तान् वायुरब्रवीदुपाहमिति। 'तान्' इन्द्राग्नी विश्वकर्माणञ्च। 'केन'-इत्यादिनी प्रश्नोत्तरे पूर्ववत्। "दिश्याभिरिति। यदिन्द्राग्निभ्यां विश्वकर्मणा चोक्तम्, तद् विवृणोति— दिश्याभिरेव तदुवाचेति। दिशि भवा दिश्याः इष्टकाः, ताभिः अगच्छानीत्युक्तवान्। "दिगादिभ्यो यत्"-इति § दिक्शब्दात् यत् प्रत्ययः। 'तस्मात्' द्वितीयस्वयमातृण्णोपधानानन्तरम्, दिश्येष्टकोपधानम् ‖। तदुपधानमन्त्रद्वयञ्चाष्टमे काण्डे प्रदर्शयिष्यते ¶। तन्मन्त्रे प्रथम मिन्द्राग्निविश्वकर्मसम्बन्धः, मध्ये अस्या अन्तरिक्षरूपत्वम्, अन्ते वायुसम्बन्ध इति ** ॥ ४ ॥

---

* वा० सं० १४. ११।

† वा० सं० १४. १२।

‡ वा० सं० १४. १२ उत्तरार्द्धं द्रष्टव्यः।

§ पा० सू० ४. ३. ५४।

‖ का० श्रौ० सू० १७. ६. १, २, ३।

¶ ८का० ३अ० १ब्रा० १२, १३, १४।

** वा० सं० १४. १३, १४।

अथ तृतीयस्वयमातृण्णाप्रधानायाः पञ्चमचितेरुत्पत्तिं दर्शयति—"तेऽब्रुवन्नित्यादि। पूर्ववत्। 'परमेष्ठी' 'दिवं' द्युलोकात्मिकां 'तृतीयां' 'स्वयमातृण्णाम्' इष्टकाम् 'अपश्यत्'। 'तस्मात्' 'ताम्' इष्टकाम् 'परमेष्ठिना' "परमेष्ठी त्वा सादयतु"-इति मन्त्रेण * उपदध्यात् † ॥ ५ ॥

तस्मिन् मन्त्रे सूर्यस्त्वाभिपातु"-इति सूर्यसम्बन्धः श्रूयते ‡, तं दर्शयति— "त मसावादित्योऽब्रवीदिति। "लोकम्पृणयेतीति। एतन्नामधेयेष्टकया। लोकम्पृणयेति यदादित्येनोक्तम्, तद् विवृणोति—"आत्मना हैव तदुवाचेति। तस्याः तृतीयायाः स्वयमातृण्णेष्टकाया लोकम्पृणायाश्च पौर्वापर्येण उपधानमुत्तरत्र वक्ष्यते। तन्मन्त्रे § पूर्ववदादिमध्यान्तेषु परमेष्ठिसम्बन्धः, द्युलोकरूपत्वम्, सूर्यसम्बन्धश्च विद्यते ‖ ॥ ६ ॥

इत्थं प्रथममध्यमोत्तमास्तिस्रश्चितय ऋषिदेवतासम्बन्धित्वेन दर्शिताः, इतः परं द्वितीयचतुर्थ्योश्चित्योरुत्पत्तिप्रकारं वक्तुं उक्तचितित्रये ऋषिदेवताः परिगणयति— "तदेता वाव षड् देवता इति। प्रजापतीन्द्राग्निविश्वकर्मपरमेष्ठिनस्त्रय ऋषयः, अग्निवायुसूर्यास्तिस्रो देवताः, इति षड् देवताः इत्युक्तम्। इन्द्राग्न्योर्विश्वकर्मणश्च सहैव चितिद्रष्टृत्वेनैका देवतेति परिगणनया षट् देवता भवन्तीत्यर्थः। लोकानां भूम्यादीनां त्रित्वात्,

---

* वा० सं १५. ६४। † का० श्रौ० सू० १७. १२. २६।

‡ का० श्रौ० १७. १२. २४ सूत्रेऽपि विहितः परमेष्ठीति मन्त्रः (वा० सं० १५. ५८), तस्मिन् नास्ति सूर्यसम्बन्ध इति चात्र ध्येयम्।

§ वा० सं० १२. ५४—५६ = १५. ५८—६१।

‖ का० श्रौ० सू० १७. १. १७. पुनस्तत्रैव १२. २५।

तदभिमानिना मन्वादीनाञ्च विलात्, एतेषु सर्वसङ्घाभि-प्रायेण "इदं सर्वं मभवन् यदिदं किञ्च"-इत्युक्तम्। "ते देवा ऋषय इति। उक्तव्यतिरिक्ताः 'ऋषयो देवाश्च' परस्परम् 'अब्रुवन्'। उक्तिप्रकारं दर्शयति— "इमा वाव षड् देवता इति। प्रजापत्यादय एव षड् देवताः 'सर्वम्' अभूवन्, 'वयम् अपि' देवा ऋषयश्च 'इह' अस्मिन् चयनकर्मणि 'यथा' येन प्रकारेण 'असाम' भवेम। अस्तेर्लोटि रूपम्। चयन-मध्ये भवनम् 'उपजानीत' अन्योन्यं विचारयतेति अन्ये देव-र्षयोऽवोचन् ॥

"तेऽब्रुवन्नित्यादिना द्वितीयचतुर्थ्योश्चित्योरुत्पत्तिरुक्ता। प्रथम-स्वयमातृण्णाचितेरनन्तरं देवदृष्टा द्वितीया चितिः, द्वितीयस्वय-मातृण्णानन्तर मृषिदृष्टा चतुर्थी चितिः, एवं पञ्च चितयः सम्पन्ना इत्यर्थः ॥ ७ ॥

"तेऽब्रुवन्नुपेति। "तद् यदूर्ध्वं पृथिव्या इति। 'पृथिव्याः' भूलोकाद् 'ऊर्ध्वम्' 'अन्तरिक्षादर्वाचीनं' 'यत्' पदार्थजात मस्ति, 'तेन' सह 'देवाः' द्वितीयां चितिम् उपागच्छन्। 'अन्तरिक्षात् ऊर्ध्वम्' 'दिवः' द्युलोकात् 'अर्वाचीनम्' 'यद्' वस्तुजात मस्ति, 'तेन' सह 'ऋषयः' चतुर्थीं चिति मपश्यन्नित्यर्थः ॥ ८ ॥

चितिशब्दं निर्वक्ति— "ते यदब्रुवन्निति। यस्मात् तेषु चोक्ताः प्रजापत्यादयः सर्वेऽपि 'चेतयध्व मिति' उक्त्वा चितिं दृष्टवन्तः, 'तस्मात्' चितिसंसर्गात् चितिशब्दो निरुक्तः। "चिति सञ्ज्ञाने" *, क्तिनि धातुतकारलोपे कृते रूप मिति मन्तव्यम्। यद्वा "चिञ् चयने"-इति † अस्य क्तिनि रूपम् ॥ ९ ॥

---

* भ्वा० प० ३९ धा०। † स्वा० उ० ५ धा०।

उक्तानां स्वयमातृण्णादीनां पञ्चानां चितीनां * प्राजापत्यादयोऽग्न्यादयश्च ऋषयो देवाश्चोक्ताः, तत्र ऋषीनेव सुखप्रतिपत्तये दर्शयति— "प्रजापतिः प्रथमां चिति मपश्यदिति । "प्रजापतिरेव तस्यार्षेय मिति । एवकारोऽन्यनिवृत्त्यर्थः । 'तस्याः' प्रथमायाश्चितेः 'आर्षेयम्' । ऋषिरेवार्षेयम्, स्वार्थिको ढक् प्रत्ययः ।

चितीना मृषिविदुषः फल माह— "स यो हैतदेव मिति । 'अस्य' वेदितुः 'चितयः' 'आर्षेयवत्यः' ऋषिसम्बद्धाः, 'बन्धुमत्यः' विधायकब्राह्मणानूदिताः । वेदनमात्रेण ऋषिदृष्टा ब्राह्मणविहिताश्चितयोऽनुष्ठिताः 'भवन्ति' इत्यर्थः ॥ १० ॥ २ [२. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यंन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे प्रथमेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

* तै० सं० ५. ६. १० द्रष्टव्यम् ।

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥



* अश्वत्याष्टोप्यन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः।

( अथ तृतीयाध्याये प्रथमं ब्राह्मणम् . )

एतद्वै देवा अब्रुवन् । चेतयध्व मिति चिति मिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानाᳬं सवितैतानि सावित्राण्यपश्यद्यत् सवितापश्यत् तस्मात् सावित्राणि स एता मष्टागृहीता माहुति मजुहोत्ताᳬं हुत्वेमा मष्टधाविहिता मषाढा मपश्यत् पुरैव सृष्टाᳬं सतीम् * ॥ १ ॥

ते यदब्रुवन् । चेतयध्व मिति चिति मिच्छतेति वाव तदब्रुवन्यच्चेतयमाना अपश्यंस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्टापश्यत् तस्मादिष्टका ॥ २ ॥

तां वा ऽएताम् † । एकाᳬं सती मष्टागृहीता मष्टाभिर्यजुर्भिर्जुहोति तस्मादिय मेका सत्यष्टधा विहिता ‡ ॥ ३ ॥

* 'सतीम्'—इति ग, घ ।

† 'एताम'—इति ग, घ ।

‡ 'विहिता'—इति ग, घ ।

ता मूर्द्धा मुद्गृह्णन् जुहोति। इमाᳫं तद्- र्द्धाᳫं रूपैरुद्गृह्णाति तस्मादियं मूर्द्धा रूपैः* ॥ ४ ॥

ताᳫं सन्ततां जुहोति। एतद्वै देवा अबि- भयुर्यद्वै न इह रक्षाᳫंसि नाष्ट्रा नान्ववेयुरिति त ऽएतᳫं सन्ततहोम मपश्यन् रक्षसां नाष्ट्राणा मन- न्ववायनाय तस्मात् सन्ततां जुहोति ॥ ५ ॥

यद्वेवैता माहुतिं जुहोति। सवितैषोऽग्निस्त मेतयाहुत्या पुरस्तात् प्रीणाति त मिष्ट्वा प्रीत्वा- थैनᳫं सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात् सावित्राणि तस्माद्वा ऽएता माहुतिं जुहोति ॥ ६ ॥

यद्वेवैता माहुतिं जुहोति। सवितैषोऽग्निस्त मेतयाहुत्या पुरस्ताद्रेतो भूतᳫं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग् जायते तद्यदेतया सवितारᳫं रेतो भूतᳫं सिञ्चति तस्मात् सावि- त्राणि तस्माद्वा ऽएता माहुतिं जुहोति ॥ ७ ॥

स्रुवश्चात्र स्रुक् च प्रयुज्येते। वाग्वै स्रुक्

---

* 'रूपैः'—इति ग, घ।

प्राणः स्रुवो व्वाचा च वै प्राणेन चैतदग्रे देवाः कर्म्मान्वैच्छंस्तस्मात् स्रुवश्च स्रुक् च ॥ ८ ॥

यद्देव स्रुवश्च स्रुक् च । यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ या सा व्वागासीदेषा सा स्रुग्योषा वै व्वाग्योषा स्रुगथ यास्ता आप आयन्वाचो लोकादेतास्ता या मेता माहुतिं जुहोति ॥ ९ ॥

ताᳪं सन्ततां जुहोति । सन्तता हि ता आप आयन्नथ यः स प्रजापतिस्त्रय्या व्विद्यया सहापः प्राविशदेष स यैरेतद्यजुर्भिर्जुहोति ॥ १० ॥

तद्यानि त्रीणि प्रथमानि । इमे ते लोका अथ यच्चतुर्थं यजुस्त्रयी सा व्विद्या जगती सा भवति जगती सर्व्वाणि छन्दाᳪंसि सर्व्वाणि छन्दाᳪंसि त्रयी विद्याथ यानि चत्वार्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्रजापतिरथैषा त्रयी व्विद्या * ॥ ११ ॥

स जुहोति । युञ्जानः प्रथमं मन इति

---

* 'त्रिद्या'—इति ग, घ ।

प्रजापतिर्व्वै युञ्जानः स मन एतस्मै कर्मणेऽयुङ्क्त तद्यन् मन एतस्मै कर्मणेऽयुङ्क्त तस्मात् प्रजापतिर्युञ्जानः ॥ १२ ॥

तत्वाय* सविता धिय इति। मनो वै सविता प्राणा धियोऽग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत् पृथिव्या ऽअध्याभरदिति पृथिव्यै ह्येनदध्याभरति ॥ १३ ॥

युक्तेन मनसा व्वय मिति। मन एवैतदेतस्मै कर्मणे युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं देवस्य सवितुः सव ऽइति देवेन सवित्रा प्रसूता इत्येतत् स्वर्ग्याय शक्नोति यथैतेन कर्मणा स्वर्गं लोक मियादेव मेतदाह शक्नोति शक्त्या हि स्वर्गं लोक मेति ॥ १४ ॥

युक्ताय सविता देवानिति। मनो वै सविता प्राणा देवाः स्वर्यतो धिया दिव मिति स्वर्गं ह्येनांल्लोकं यतो धियैतस्मै कर्मणे युयुङ्क्ते

* 'तत्त्वाय'—इति च इष्ट' डा०-वेवरमहोदयेन।

बृहज्ज्योतिः करिष्यत इत्यसौ वा ऽआदित्यो बृहज्ज्योतिरेष उ ऽएषो ऽग्निरेतस्वेतं संस्करिष्यन्तो भवन्ति सविता प्रसुवाति तानिति सवितृप्रसूता एतत् कर्म करवन्नित्येतत् ॥ १५ ॥

युञ्जते मन उत युञ्जते धिय इति । मनश्चैवैतत् प्राणांश्चैतस्मै कर्मणे युङ्क्ते विप्रा विप्रस्येति प्रजापतिर्व्वै विप्रो देवा विप्रा बृहतो विपश्चित इति प्रजापतिर्व्वै बृहद्विपश्चिद्धि होत्रा दध ऽइति यद्वा ऽएष चीयते तदेष होत्रा विधत्ते चिते ह्येतस्मिन् होत्रा अधिविधीयन्ते वयुनाविदित्येष हीदं वयुनमविन्ददेक इदित्येको ह्येष इदꣳ सर्व्वं वयुनमविन्दन् मही देवस्य सवितुः परिष्टुतिरिति महती देवस्य सवितुः परिष्टुतिरित्येतत् ॥ १६ ॥

युजे वां ब्रह्म पूर्व्यं नमोभिरिति । प्राणो वै ब्रह्म पूर्व्यमन्नं नमस्तदेषैवाहुतिरन्नमेतयैव तदाहुत्यैतेनान्नेन प्राणानेतस्मै कर्मणे युङ्क्ते विश्लोक एतु पथ्येव सूरेरिति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य स्यादेवमेतदाह

शृण्वन्तु व्विश्वे ऽअमृतस्य पुत्रा इति प्रजापति-र्व्वा ऽअमृतस्तस्य व्विश्वे देवाः पुत्रा आ ये धामानि दिव्यानि तस्थुरितीमे वै लोका दिव्यानि धामानि तद्य ऽएषु लोकेषु देवास्तानेतदाह ॥ १७ ॥

यस्य प्रयाण मन्वन्यऽइद्ययुरिति । प्रजापतिर्व्वा ऽएतदग्रे कर्माकरोत् तत्तो देवा अकुर्वन् देवा देवस्य महिमान मोजसेति यज्ञो वै महिमा देवा देवस्य यज्ञं व्वीर्य मोजसेत्येतद्यः पार्थिवानि व्विममे स एतश इति यद्वै किञ्चास्यां तत् पार्थिवं तदेष सर्व्वं व्विमिमीते रश्मिभिर्ह्येन-दभ्यवतनोति रजाᳬसि देवः सविता महित्व-नेतीमे वै लोका रजाᳬस्यसावादित्यो देवः सविता तानेष महिम्ना व्विमिमीते ॥ १८ ॥

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति । असौ वा ऽआदित्यो देवः सविता यज्ञो भगस्त मेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति दिव्यो गन्धर्व्वः केतपूः केतं नः पुनात्वित्यसौ वा ऽआदित्यो दिव्यो गन्धर्व्वो ऽन्नं केतो-

ऽन्नपूरन्नं नः पुनात्वित्येतद्वाचस्पतिर्व्वाचं नः स्वद-त्विति व्वाग्वा ऽइदं कर्म प्राणो व्वाचस्पतिः प्राणो न इदं कर्म स्वदत्वित्येतत् ॥ १९ ॥

इमं नो देव सवितर्यज्ञं प्रणयेति । असौ वा ऽआदित्यो देवः सविता यदु वा ऽएष यज्ञियं कर्म प्रणयति तदनार्त्तꣳ स्वस्त्युदृच मश्नुते देवाव्य मिति यो देवानवदित्येतत् सखिविदꣳ सत्राजितं धनजितꣳ स्वर्जित मिति य एतत् सर्व्वं व्विन्दादित्येतदृचेत्यृचा स्तोमꣳ समर्द्धय गाय-त्रेण रथन्तरं बृहद् गायत्रवर्त्तनीति सामानि स्वा-हेति यजूꣳषि सैषा त्रयी व्विद्या प्रथमं जायते यथैवादो ऽमुत्राजायतैव मथ यः सोऽग्निरसृज्यतैष स योऽत ऊर्द्ध मग्निश्चीयते ॥ २० ॥

तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतꣳ सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशोऽग्निर्नव प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतꣳ सिञ्चति तानि दश भवन्त्या-

हुतिर्हैषाग्नौ दशाक्षरा त्विराड्विराडग्निर्हैष दिशो दिशोऽग्निर्हैष प्राणाः प्राणा अग्निर्यावानग्निर्याव-त्यस्य मात्रा तावत् तद् भवति ॥ २१ ॥

एतस्या माहुत्याᳫ हुतायाम्। अग्निर्हैवेभ्य उदक्रामत्ते देवा अब्रुवन् पशुर्व्वा ऽअग्निः पशु-भिरिम मन्विच्छाम स स्वाय रूपायाविर्भविष्य-तीति तं पशुभिरन्वैच्छन्त्स स्वाय रूपायाविरभवत् तस्मादु हैतत् पशुः स्वाय रूपायाविर्भवति गौर्व्वा गवे ऽश्वो वाश्वाय पुरुषो वा पुरुषाय * ॥ २२ ॥

तेऽब्रुवन्। यद्वाइ सर्व्वैरन्वेषिष्यामो यातयामा अनुपजीवनीया भविष्यन्ति यद्यु ऽअसर्व्वैरसर्व्वं मनुवेत्स्याम इति त ऽएत मेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यन् रासभं गोश्चाश्वाच्च तद्यदेत मेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यंस्तस्मादेष एकः सन्द्वि-रेताः ॥ २३ ॥

अनद्धापुरुषं पुरुषात्। एष ह वा ऽअनद्धा-पुरुषो यो न देवानवति न पितॄन्न मनुष्यांस्तत्

---

* 'पुरुषाय'—इति म। 'पुरुषीय'—इति प।

सर्व्वैरह पशुभिरन्वैच्छन्नो यातयामा अनुपजीवनीया अभवन् ॥ २४ ॥

त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्विच्छति ते पञ्चसम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चऽर्त्तवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ २५ ॥

ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्देवेभ्य उदक्रामत्स मुञ्जं प्राविशत् तस्मात् स सुषिरस्तस्मादिवान्तरतो* धूमरक्त इव सैषा योनिरग्नेर्यन् मुञ्जो ऽग्निरिमे पशवो न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्व्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २६ ॥

त्रिवृतो भवन्ति त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्व्वतो वा ऽअश्वाभिधानी मुखं परिश्रेते सर्व्वतो योनिर्गर्भं परिश्रेते योनिरूप मेतत् क्रियते ॥ २७ ॥

* 'सुखिर०'—इति च दृष्टं डा०-वेबरमहोदयेन ।

ते प्राञ्चस्तिष्ठन्ति । अश्वः प्रथमोऽथ रासभो-ऽथाज एवᳪ ह्येतेऽनुपूर्वं यद्वै तदश्रु संक्षरित मासीदेष सोऽश्वोऽथ यत्तद्रसदिवैष रासभोऽथ यः स कपाले रसो लिप्त आसीदेष * सोऽजो-ऽथ यत्तत्कपाल मासीदेषा सा मृद्या मेतदाहरि-ष्यन्तो भवन्त्येतेभ्यो वा ऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्य एवैन मेतज्जनयति ॥ २८ ॥

ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवा अबिभयु-र्यद्वै नो यज्ञं दक्षिणतो रक्षाᳪसि नाष्ट्रा न हन्यु-रिति त ऽएतं वज्र मपश्यन्नमु मेवादित्य मसौ वा ऽआदित्य एषो ऽश्वस्त ऽएतेन वज्रेण दक्षिणतो रक्षाᳪसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रऽएतं यज्ञ मतन्वत तथैवैतद्यजमान एतेन वज्रेण दक्षिणतो रक्षा-ᳪसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ २९ ॥

दक्षिणत आहवनीयो भवति । उत्तरत एषा-भिरुपशेते वृषा वा ऽआहवनीयो योषाभिर्दक्षिणतो

---

* 'आसीदेष'—इति च इष्ट' का०-वेबरेण ।

वै वृषा योषा मुपशेते ऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषा मुपशेते * ॥ ३० ॥

सा व्वैणवी स्यात्। अग्निर्देवेभ्य उदक्रामत्स व्वेणुं प्राविशत् तस्मात् स सुषिरः स एतानि व्वर्माण्यभितोऽकुरुत पर्व्वाण्यननुप्रज्ञानाय यत्र-यत्र निर्ददाह † तानि कल्माषाण्यभवन् ॥ ३१ ॥

सा कल्माषी स्यात्। सा ह्याग्नेयी यदि कल्माषीं न विन्देदप्यकल्माषी स्यात् सुषिरा तु स्यात् सैवाग्नेयी सैषा योनिरग्नेर्य्यद्वेणुरग्निरियं मृन्न वै योनिर्गर्भं हिनस्त्यहिंसायै यानेव्वैं जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ ३२ ॥

प्रादेशमात्री स्यात्। प्रादेशमात्रं ह्यीद मभि व्वाग्वदत्यरत्निमात्री त्वेव भवति बाहुर्व्वा ऽअरत्नि-र्बाहुनो वै व्वीर्यं क्रियते व्वीर्यसम्मितैव तद् भवति ॥ ३३ ॥

---

* 'सुपश्रोते'--इति ग, घ। 'सुपश्रोते'—इति क।

† 'निर्ददाह'—इति ग, घ।

अन्यतःख्नुत् स्यात् । अन्यतरतो हीदं वाचः ख्नुत मुभयतः ख्नुत्त्वेव भवत्युभयतो हीदं वाचः ख्नुतं यदेनया दैवं च वदति मानुषं चाथो यत् सत्यं चानृतं च तस्मादुभयतःख्नुत् * ॥ ३४ ॥

यद्वेवोभयतःख्नुत् † । अतो वाऽस्मिन्नुभे वीर्य्ये यतोऽस्यै ख्नुत मुभयत एवास्या मेतद् वीर्य्यं दधाति ॥ ३५ ॥

यद्वेवोभयतःख्नुत् । एतद्वाऽएनं देवा अनुविद्येभ्यो लोकेभ्योऽखनंस्तथैवैन मय मेतदनुविद्येभ्यो लोकेभ्यः खनति ॥ ३६ ॥

स यदिति खनति । तदेन मस्माल्लोकात् ‡ खनत्यथ यदूर्द्ध्वंहरति तदमुष्माल्लोकादथ § यदन्तरेण सम्हरति तदन्तरिक्षलोकात् सर्व्वेभ्य एवैन मेतदेभ्यो लोकेभ्यः खनति ॥ ३७ ॥

ता मादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मादद गायत्रेण छन्दसा-

*, † 'ख्नुत्'—इति ग, घ ।

‡ 'मस्माऽल्लोकात्'—इति घ ।

§ 'तदमुष्माऽल्लोकादथ'—इति घ ।

ङ्गिरस्वदिति सवितृप्रसूत एवैना मेतद्देवताभिर्देवता-
भिरादत्ते गायत्रेण छन्दसाथो अस्यां गायत्रं छन्दो
दधाति पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्व-
दाभरेति पशवो वै पुरीषं पृथिव्या उपस्थादग्निं
पशव्य मग्निवदाभरेत्येतत् त्रैष्टुभेन छन्दसाङ्गिरस्व-
दिति तदेनां त्रैष्टुभेन छन्दसादत्तेऽथोऽस्यां त्रैष्टुभं
छन्दो दधाति ॥ ३८ ॥

अभ्रिरसीति*। अभ्रिर्ह्येषा तदेनाꣳ† सत्येना-
दत्ते नार्यसीति वज्रो वा अभ्रिर्योषा नारी न
वै योषा कञ्चन हिनस्ति शमयत्येवैना मेतदहिꣳ-
सायै त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्थ
ऽएतीदं वै सधस्थं त्वया वयमग्निꣳ शकेम खनितु
मस्मिन्त्सधस्थ ऽइत्येतज्जागतेन छन्दसाङ्गिरस्वदिति
तदेनां जागतेन छन्दसादत्तेऽथो अस्यां जागतं छन्दो
दधाति ॥ ३९ ॥

त्रिभिरादत्ते। त्रिवृदग्निर्यावानग्निर्यावत्यस्य

---

* 'अभ्रिरसीति'—इति क, ग, घ। 'अभ्रिरसीति'—इति ख, ङ।
† 'तदेनां'—इति ग, घ।

मादत्त तावत्तैवैना मेतदादत्ते त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयत ऽएतद्वा ऽएनां देवास्त्रिभिरादायाथास्यां चतुर्थेन व्वीर्य्य मदधुस्तथैवैना मय मेतत्त्रिभिरादायाथास्यां चतुर्थेन व्वीर्य्यं दधाति ॥ ४० ॥

हस्त ऽआधाय सवितेति । हस्ते ह्यस्याहिता भवति बिभ्रदभ्रि मिति बिभर्त्ति ह्येनाᳪ हिरण्ययी मिति हिरण्मयी ह्येषा या छन्दोमय्यग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत् पृथिव्या ऽअध्याभरदिति पृथिव्यै ह्येनदध्याभरत्यानुष्टुभेन छन्दसाङ्गिरस्वदिति तदेना मानुष्टुभेन छन्दसादत्तेऽथो ऽअस्या मानुष्टुभं छन्दो दधाति तान्येतान्येव छन्दाᳪस्येषाभ्रिरारम्भायैवेयं व्वैणवी क्रियते ॥ ४१ ॥

ताᳪ हैके हिरण्मयीं कुर्व्वन्ति । हिरण्ययीति वा ऽअभ्युक्तेति न तथा कुर्याद्यद्वा ऽएषा छन्दाᳪसि तेनैषा हिरण्य ममृतᳪ हिरण्य ममृतानि छन्दाᳪसि ॥ ४२ ॥

तां चतुर्भिरादत्ते । चतुरक्षरा वै सर्व्वा व्वाग् वागित्येक मक्षर मक्षर मिति त्र्यक्षरं तद्यत्तद् वागित्येक मक्षरं यैवैषानुष्टुबुत्तमा सा साथ यदक्षर

मिति अाक्षर मेतानि तानि पूर्व्वाणि यजूᳩषि सर्व्वयैवैतद्वाचाग्निं खनति सर्व्वया व्वाचा सम्भरति तस्माच्चतुर्भिः ॥ ४३ ॥

यद्वेव चतुर्भिः। चतस्रो वै दिशश्चतसृषु तद्दिक्षु व्वाचं दधाति तस्माच्चतसृषु दिक्षु व्वाग् वदति छन्दोभिश्च यजुर्भिश्चाद्वत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवान्तरदिशः सर्व्वासु तद्दिक्षु व्वाचं दधाति तस्मात् सर्व्वासु दिक्षु व्वाग्वदति ॥ ४४ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [३. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अध्यायद्वयेन चीयमानाग्नेरुत्पत्तिप्रकारः, चयनोपयुक्तपशूदककर्म, मृत्तिकासिकताद्युत्पत्तिः, पुरुषादिपञ्चपशुप्राजापत्यवायव्येष्ट्यनुगमेन प्रकारेणानुष्ठानप्रकारः, पञ्चचित्युत्पत्तिश्च दर्शिताः; इतस्तृतीयादिभिरध्यायैः "युञ्जानः प्रथमं मन इत्यादीनां चयनमन्त्राणां विनियोगोऽभिधास्यते। तत्र प्रथमं "युञ्जानः प्रथम मित्यादिभिरष्टभिः * सावित्रहोमः कार्यः।

---

* वा० सं० ११. १—८।

तदाह कात्यायनः— "अष्टगृहीतं जुहोति सन्तत मुद्द्रवन् युञ्जान इति"-इति *। अष्टवारं स्रुवेण स्रुचि गृहीत माज्य-द्रव्यं 'सन्ततम्' अविच्छेदेन 'उद्द्रवन्' जर्ध्वं गच्छन् "युञ्जानं प्रथमं मनः"-इत्यादिभिरष्टभिः सवितृदेवत्यैर्मन्त्रैर्जुहुयात् †। "अष्टा-गृहीता मष्टाभिर्यजुर्भिर्जुहोति"-इति वक्ष्यति ‡। एतेषां यजुष्ट्वं यजुर्वेदे पाठात् ; अन्यथा पादबद्धानां यजुष्ट्वानुपपत्तेः। अथवा यजुस्संहितापठिता मन्त्राः छत्रिन्यायेन यजुःशब्देनोक्ताः ; अत्रा-ष्टमो मन्त्रो यजुः। तथा चापस्तम्बः— "यजुरष्टमाभिर्ऋग्भिरेका माहुतिं जुहोति"-इति §।

त मिमं सावित्रहोमं विधास्यन् सवितृसम्बन्ध मादौ दर्श-यति— "एतद्वै देवा अब्रुवन्निति। 'चेतयमानानां' चिति मिच्छतां देवानां मध्ये 'सविता' देवः 'एतानि' वक्ष्यमाणानि सावित्राणि कर्माणि 'अपश्यत्'। यस्मात् सविता एतानि दृष्टवान् अतः सावित्राणीत्युच्यन्ते। सवितुरिमानीत्यर्थे "तस्ये-दम्"-इति ‖ अण् प्रत्ययः। सम्बन्धसामान्ये प्रत्ययविधानात् आत्मनोऽभ्यन्तरेऽपि देव इति कृत्वा दृष्टदृश्यसम्बन्धे कर्मणा मपि सवितृदेवत्वेन "सास्य देवता"-इत्यर्थे ¶ विशेषे च विशेष-प्रत्ययो भवतीत्यर्थः॥

---

* का० श्रौ० सू० १६. २. ७।

† "युञ्जानः प्रथमम् (१), युक्तेन मनसा (२), युक्ताय सविता (३), युञ्जते मनः (४), युजे वाम् ब्रह्म (५), यस्य प्रयाण मन्वन् (६), देव सवितः (७), इमं नो देव सवितर् (८)"—इत्यष्टौ वा० सं० ११. १–८।

‡ तृतीयकण्डिकाम् (१३० पृ० १३ पं०) द्रष्टव्यम्।

§ आप० श्रौ० सू० १६. १. ४।

‖ पा० सू० ४. ३. १२०। ¶ पा० सू० ४. २. २४।

आज्यस्याष्टग्रहणं विधातु माह— "स एता मष्टागृहीता मिति। "तां हुत्वेमा मिति। यतः 'अष्टागृहीता माहुतिं सविता अजुहोत्', 'अष्टधा विहिताम्' अष्टप्रकारेण विहिताम् 'अषाढां' नामेष्टकाम् 'अपश्यत्' ॥ १ ॥

"ते यदब्रुवन्निति। अषाढाया इष्टकात्व मुपपादयति— "आहुतिर्वै यज्ञो यदिष्ट्वापश्यदिति। 'यत्' यस्मात् एतां साविनाहुतिम् 'इष्ट्वा' 'अपश्यत्', 'तस्मादिष्टका' अषाढेति, आहुतिसदृशीष्टकेति ॥ २ ॥

तत् प्रशंसति— "तां वा एता मेकां सती मष्टागृहीता मिति। यस्मादेकाहुति मष्टाभिर्मन्त्रैरष्टगृहीतेनाज्यद्रव्येण हुतवान्, तस्मात् अषाढा वस्तुत एकापि अष्टधा विधीयत इति तत्समानत्वं तस्योपचरित मित्याशयः ॥ ३ ॥

तस्या आहुतेरूर्ध्वं ग्रहणं विधत्ते— "ता मूर्द्धा मिति। ('उद्गृह्णन्') उदुपसर्गस्यार्थः ऊर्ध्व मित्यनेनोक्तः। "इमां तदूर्द्धा मिति। 'इमां' भूमिम् ॥ ४ ॥

तस्याः सान्तत्येन हवनं विधत्ते— "तां सन्ततां जुहोतीति। 'सन्तताम्' अविच्छिन्नधारा मित्यर्थः। सन्ततत्वं सोपपत्तिकं प्रशंसति— "एतद्वै देवा अबिभयुरिति। "ञि भी भये" * लङि "सिजभ्यस्तविदिभ्यश्च"—इति † झेर्जुस्। राक्षसेभ्यः सकाशात् देवा भीतवन्तः। 'यत्' यथा 'इह' यज्ञे 'नाष्ट्रा' नाशकानि 'रक्षांसि' नार्तृपदम्, 'नः' अस्मान् देवान् 'नान्ववेयुः' न

* जु० प० २ धा०।

† पा० सू० ३. ४. १०९।

सङ्गता भवेयुः। "इण् गतौ" * लिटि रूपम्, 'ईति' ईतो, यस्मात् कारणात् 'एनं' सावित्रं 'होमं' 'सन्ततम्' अनवच्छिन्नम् 'अपश्यत्'; अवकाशान्वेषिणां राक्षसाना मसङ्गमनाय; अवकाशे हि यज्ञविघातकाः प्रविशन्ति ॥ ५ ॥

अस्या आहुतेः सवितृदेवत्यत्व मिदानी माह— "यद्देवैता माहुति मिति। आग्नेये कर्मणि कुतः सवितुः प्रसङ्ग इत्यत आह — "सवितैषोऽग्निरिति। "षू प्रेरणे"—इति †, अस्मात्तृचि पदं सवितेति।

"सवितारं प्रीणाति, तस्मात् सावित्राणीति। अनेनाहुतेः सवितृप्रीणनसाधनत्वात् तद्देवत्यत्व मिति, प्रत्ययस्तु पूर्व मेवोक्तः ॥ ६ ॥

प्रकारान्तरेणाहुतिकरणं प्रशंसति— "यद्देवैता माहुति मिति। रेतोभूतं सिञ्चतीति। चयनकर्मणः प्रारम्भादित्यर्थः ॥ ७ ॥

आज्यहोमत्वादत्र केवलस्रुवेण होमकरणं व्युदसितु माह— "स्रुवश्चात्र स्रुक् च प्रयुज्येत इति। स्त्रीलिङ्गत्वात् स्रुचो वाक्त्वम्, पुंलिङ्गत्वात् स्रुवस्य प्राणत्वम्। ताभ्यां वाक्प्राणाभ्याम् 'अग्रे' पूर्वं 'देवाः' इदं 'कर्म' अनुष्ठितवन्तः। अतोऽस्मिन् स्रुक्स्रुवौ प्रयुज्येते ॥ ८ ॥

प्रकारान्तरेणैतयोः प्रयोगं प्रशंसितु मनुवदति— "यद्वेव स्रुवश्च स्रुक् चेति। स्रुक्स्रुवयोर्वाक्प्रजापतिरूपत्वं यदर्थ मुक्तम्; तद् दर्शयति— "अथ यास्ता आप इति। 'याः आपः' यानि उदकानि प्रजापतिसृष्टानि 'वाचो लोकात्' वाग्रूपाल्लोकात्

* अदा० प० ३५ धा०।

† तु० प० २८ धा०।

सकाशात् 'आयन्' आगतानि, 'ताः' आप एवेदानीं हूयमानाहुतिरित्यर्थः। पूर्वं प्रजापतिर्वाचः सकाशात् अपः सृष्टवान् इत्याम्नातम्, तथा प्रथमाध्याये— "सोऽपोऽसृजत वाच एव लोकात्"—इति * ॥ ९ ॥

"तां सन्तता मिति। आहुतिसाधनान् मन्त्रान् प्रशंसति— "अथ यः स प्रजापतिस्त्रय्या विद्ययेति। पूर्वं प्रजापतिरपः सृष्ट्वा पुनरपि बहुल मुत्पत्तिं त्रयीमय्या विद्यया सह ता आपः प्रविष्टवान्, अत इदानी मपि आहुतिरूपतोऽग्नौ मन्त्राणाञ्च त्रयीरूपत्वात् तैर्होमकरणं प्रजापतेर्बहुधोत्पत्तये विद्यया सहोदकप्रवेशसमान मित्यर्थः। एतदपि पूर्व माम्नातम्— "सोऽकामयताभ्योऽद्भ्योऽधि प्रजायेयेति, सोऽनया त्रय्या विद्यया सहापः प्राविशदिति † ॥ १० ॥

मन्त्रानष्टौ प्रविभज्य स्तौति— "तद् यानि त्रीणि प्रथमानीति। 'तत्' तत्र तेषु मन्त्रेषु 'यानि प्रथमानि त्रीणि' यजूंषि। यजुर्वेदपठितत्वात् यजूंषीत्युच्यन्ते; अन्यथा पादबद्धानां यजुष्ट्वानुपपत्तेः, यजुरन्तगा ‡ वा मन्त्रास्त्विति न्यायेन यजुःशब्देनोक्ताः। तन्मन्त्रत्रयं पृथिव्यन्तरिक्षद्युलोकात्मकम्, चतुर्थो मन्त्रस्त्रयीविद्यात्मकः। त्रयीत्वं छन्दोद्वारा प्रतिपादयति— "जगती सा भवतीति। "युञ्जते मन उत युञ्जते धियः"—इति § चतुर्थो मन्त्रो जगतीछन्दस्कः; जगत्याः सर्वछन्दोमयत्वात्

---

* इहैव काण्डे ४ पृ० ३ पं द्रष्टव्यम्।

† इहैव पुरस्तात् ४ पृ० ६ पं० द्रष्टव्यम्।

‡ 'यजुरन्तिमा'—इति च पाठः।

§ वा० सं० ११. ४।

मन्वाच तत्सम्भवात्, चतुर्थस्यास्य त्रयीरूपत्वम्। इमानि चत्वारि यजूंषि प्रागादिमहादिशः; सङ्ख्यासाम्यात्। "इमे वै लोकाः"-इत्यादिना समानां मन्त्राणां प्रजापतिरूपत्वम्, एकस्यास्त्रयीविद्यारूपत्वञ्च प्रदर्शित मिति मन्तव्यम् ॥ ११ ॥

अथ होम मनूद्य प्रथमा मृचं विधत्ते— "स जुहोति युञ्जान इति *। प्रथमा ऋक्, अनुष्टुप्। अय मर्थः— "सविता सर्वस्य स्वस्वकार्ये प्रेरकः सूर्यः 'प्रथमम्' आदौ अग्निचयनविषये 'मनः' ज्ञानसाधनभूतं चित्त' 'युञ्जानः' कर्मविषयं ज्ञान मुत्पादयितु मात्मना संयुक्तं कुर्वन् अनन्तरं 'धियः' बुद्धीः प्राणान् वा 'तत्त्वाय'। "तनु विस्तारे" †, क्त्वाप्रत्यये "उदितो वा" -इति ‡ इडभावपक्षे "अनिदिताम्०"-इति § न-लोपे, "क्त्वो यक्"-इति ‖ यक्प्रत्यये च क्षते रूपम्। तनित्वा विस्तार्य्य, मनसा बुद्धिं प्राणं वा पर्यालोच्य। यत्र मनस्तत्र प्राणः इति हि व्याप्तिः। यद्वा, एकं वाक्यम्; प्रथमं मनो ज्ञानसाधनं धियम् तत्कार्यं ज्ञानञ्च 'तत्त्वाय' तत्त्व-शब्दाच्चतुर्थी, तत्त्वं नामाग्नित्वम्। तच्छब्देन प्रकृतत्वादग्निः परामृश्यते, तस्य भावस्तत्त्वम्, अग्निरूपावाप्तये। मनो ज्ञानञ्च नियुञ्जानः अग्नेः सम्बन्धि ज्योतिः पश्वसु पशुषु प्रविष्टं तेजः 'निचाय्य'। "चायृ

---

* "युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियम्।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्"—इति वा० सं ११.१।

† तना० उ० १ धा०।

‡ पा० सू० ७. २. ५६।

§ पा० सू० ६. ४. २४।

‖ पा० सू० ७. १. ४७।

पूशानिशामनयो:" *। निशामनं दर्शनम्। पृथिव्याः चितायाः अधि उपरि विशिष्टप्रदेशं प्रति 'आभरत्'। ततः पशुभ्यः सकाशात् अग्नितेज आहृतवान्। "हृग्रहोर्भश्छन्दसि"-इति † हकारस्य भकारः।

मन्त्रप्रतिपाद्य मनूद्य व्याचष्टे— "प्रजापतिर्वै युञ्जान इति। अत्र सविहृपदेन धात्वर्थमात्र माश्रित्य प्रजापतिरुच्यत इति विशेषः। अत्र "तस्त्वाय अग्निरूपायामये अग्नये ज्योतिः पशुषु दृष्ट्वा"-इत्यादिकं सर्वं युज्यते ॥ १२, १३ ॥

द्वितीयं मन्त्रं विधत्ते— "युक्तेन मनसा वय मितीति ‡। इयं गायत्री। अथ मर्थः— 'युक्तेन' कर्मविषये एकाग्रेण मनसा। अन्यत्र व्यापके मनसि कर्म कर्तुं न शक्यते, अतः कर्मणि युक्तेनेत्युक्तम्। तादृशेन 'मनसा' सहिताः 'सवितुः देवस्य' 'सवे' अभ्यनुज्ञाने वर्त्तमानाः 'वयम्' अनुष्ठातारः 'स्वर्ग्याय' हितार्थे यत्-प्रत्ययः § स्वर्गहिताय स्वर्गसाधनाय कर्मणे, तदर्थम्, "क्रियार्थोपपदस्य०"-इति ‖ चतुर्थी। 'शक्त्या' कर्मकरणसामर्थ्येन, तदर्थद्रव्यसामर्थ्येन च प्रयत्नः कार्य इति वाक्यशेषः ¶। नित्ये तावत्, यथा शक्नुयात् तथा कुर्यादिति प्रकारवाचिना यथाशब्देन शक्ते-

---

* आ० उ० ८८०।

† पा० ८. २. ३२ सू० १ वा०।

‡ का० श्रौ० सू० १६. २. ७।

§ पा० सू० ५. १. ५।

‖ पा० सू० २. ३. १४।

¶ "युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शक्त्या"—इति वा० सं० ११. २।

यथासम्भवोक्तिः ; काम्ये, यदा शक्नुयात् तदा कुर्यादिति पूर्वोक्तेः सम्पूर्णता चोक्ता ॥

मन्त्रप्रतिपाद्यं मनूद्य व्याचष्टे— "मन एवैतदिति । मनसो युक्तत्वं व्यतिरेकमुखेन प्रतिपादयति— "न ह्ययुक्तेनेति ॥ १४ ॥

तृतीयं मन्त्रं विधत्ते— "युक्ताय सविता देवानिति * । तावृश्यान् 'युक्ताय' पूर्ववत् क्त्वो यक्, मनसा युक्त्वा स्थित इति विशेषः । यद्वा, 'देवान्' प्राणान् 'युक्ताय' इत्येत मेकं वाक्य मिति प्रदर्शितम् । 'युयुजे' इति लिट् प्रयुक्तः । 'बृहत्' महत् 'ज्योतिः' अग्न्यात्मकं सूर्यात्मकञ्च 'करिष्यतः' संस्करिष्यतः, आत्मत्वेन भावयतः 'तान्' देवान् 'सविता' 'प्रसुवाति' अभ्यनुजानातु † । सुवतेः पञ्चमे लकारे "लेटोऽडाटौ"-इत्याडागमः ‡ । अत एव 'करवम्' -इति पञ्चमो ल उदाहृतः § ॥ १५ ॥

चतुर्थीं विधत्ते— "युञ्जते मन इति ‖ । इयं जगती ¶ । 'विप्राः' मेधाविनो देवाः । 'बृहतो विपश्चितः' । "विप्"-इति वाङ्-नाम ** । सकलशाखागता मन्त्रा एकत्र कर्मणि सञ्चिताः । 'विप्रस्य' मेधाविनः प्रजापतेः अग्न्यात्मकस्य विस्रस्तं पुनः सन्धानार्थं

* का० श्रौ० सू० १६. १. ७।

† "युक्ताय सविता देवान् स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान्"—इति
वा० सं० ११. ३ ।

‡ पा० सू० ३. ४. ९४ ।

§ १३४ पृ० ४ पं० मूले द्रष्टव्यम् ।

‖ का० श्रौ० सू० १६. २. ७।

¶ "युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः"—
इति वा० सं० ११. ४ ।

** निघ० १. ११. ४१ ।

'मनो युञ्जते' कर्मार्थमेकाग्रं कुर्वन्ति । 'उत' अपि च 'धियः' बुद्धीः प्राणान् वा 'युञ्जते' । 'वयुनाविद्' 'वयुना'-इति प्रज्ञानाम *, इह ज्ञातव्ये कर्त्तव्ये ज्ञानवान् जानात् 'एकः' 'इत्' एव चीयमानः अग्निः, 'होत्राः' सप्तहोत्रकाणां प्रख्यितयाज्याः 'विदधे' चकार । तदिदं 'सवितुः देवस्य' 'मही' महती 'परिष्टुतिः' । स यत् प्रजापतिः समिधानाय देवाः कर्मणो मनः प्राणांश्च युङ्क्ते, अतोऽग्निहोत्रं विदधे इति ॥

मन्त्रं व्याचष्टे—"युञ्जते मन इत्यादि । स्पष्टोऽर्थः । "यद्वा एव चीयत इति । यश्चीयते स एव होतृकर्माणि करोतीत्यर्थं द्रढयितु माह—"चिते होतरग्निरिति । 'चिते' अग्नौ होतृमैत्रावरुणादिक्रियाणां विधानात् तस्यैव कर्त्तृत्व मित्युपचरितम् ॥ १६ ॥

पञ्चमी मृचं विधत्ते--"युजे वां ब्रह्म पूर्व्य मिति † । त्रिष्टुप् । 'वाम्'-इति पत्नीयजमानावुच्येते । युवाभ्या मर्थाय , 'नमोभिः' अन्नैः सहितं , 'पूर्व्यं' पुरातनं 'ब्रह्म' ब्रह्मणि 'युजे' युञ्जताम् सवितेति । अन्नानवाचिना नमः-पदेनाहुतिरभिधीयते , तयाहुत्या पत्नीयजमानयोः बुद्धीः प्राणान् एतस्मै कर्मणि युङ्क्ते इत्यर्थः । यद्वा, 'युञ्जे'-इत्युत्तमैके रूपम् , अध्वर्युरह मिति । किमर्थम् ? तदाह— 'सूरेः' कर्मविदुषो यजमानस्य 'श्लोकः' कीर्त्तिः 'व्येतु' विविधं गच्छतु , उभयत्र देवमनुष्येषु प्रख्यता भवत्विति । 'पथ्येव' पथि-शब्दात् "धर्मपथ्यर्थन्यायात्०"-इति ‡

* निघ० ३. ११. १० ।

† का० श्रौ० सू० १६. २. ७ ।

‡ पा० सू० ४. ४. ९२ ।

यत्। पथो यज्ञमार्गात् अनपेता आहुतिः यथा उभयत्र प्रसारिणी भवति, एवं श्लोक इत्यर्थः। 'अमृतस्य' मरणधर्मरहितस्य प्रजापतेः 'पुत्राः' 'विश्वे' देवाः 'शृण्वन्तु', यजमानश्लोक मित्यनुषङ्गः। 'ये' देवाः दिव्यानि धामानि सर्वलोकस्थानि 'तस्थुः' अधिष्ठितवन्तः, ते शृण्वन्त्विति * ॥

मन्त्रप्रतिपाद्य मनूद्य व्याचष्टे— "युजे वां ब्रह्म पूर्व्यं नमोभिरित्यादि। निगदसिद्ध मेतत् ॥ १७ ॥

षष्ठी मृच माह — "यस्य प्रयाण मिति †"। इयं जगती ‡। अथ मर्थः— अन्ये देवाः 'यस्य देवस्य' द्योतनशीलस्य प्रजापतेः 'प्रयाणं' प्रथमगमनं कर्मानुष्ठान मनुलक्ष्य 'ओजसा' वीर्येण 'महिमानं' चयनात्मकं यज्ञं 'ययुः' अन्वगच्छन्। प्राजापत्यनुष्ठानानन्तरं सर्वे देवा अनुष्ठितवन्तः। 'यः' 'सविता' 'पार्थिवानि' पृथिव्या मवस्थितं वस्तुजातं 'विममे'। "माङ् माने" §। स्वीयैस्तेजोभिः सर्वं वस्तु व्यनक्ति। 'एतशः' सर्वत्र चरणशीलः। यद्वा, 'एतशः' -इत्यश्वनाम ‖, मत्वर्थीयलोपः अश्ववान्। 'सविता' आदित्यो 'देवः'। 'रजांसि' पृथिव्यन्तरिक्षद्युलोकान् 'महित्वना' स्वमहिम्ना 'वि ममे' विमिमीते ॥

---

* "युजे वाम् ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः। शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि तस्थुः"—इति वा० सं० ११. ५।

† का० श्रौ० सू० १६. २. ७।

‡ यस्य प्रयाण मन्वन्य इद्ययुर्देवा देवस्य महिमान मोजसा। यः पार्थिवानि वि ममे स एतशो रजांसि देवः सविता महित्वना" —इति वा० सं० ११. ६।

§ जु० आ० ६ धा०।

‖ निघ० १. १४. १०।

"प्रजापतिर्वा एतदग्रे कर्मेत्यादि, मन्त्रव्याख्यानम् ॥ १८ ॥

सप्तमं मन्त्रं विधत्ते— "देव सवितः प्रसुव यज्ञ मिति * । वाजपेये व्याख्यातोऽयं मन्त्रः † ॥ १९ ॥

अष्टमं यजुर्विधत्ते— "इमं नो देव सवितर्यज्ञ मिति ‡ । प्रणयेतिपदस्यार्थ माह— 'यज्ञियं कर्म' 'प्रणयति' प्रकर्षेण नयति । तदेवाह— 'तत्' सवित्रा प्रणीतं कर्म 'अनार्त्तम्' अनुपहतम्, 'स्वस्ति' क्षेमेण 'उदृचं' समाप्तिम् 'अश्नुते' । देवाव्य मिति पदं व्याचष्टे— "यो देवानवदिति । देवानवति तर्पयतीति देवावीः । "अवितॄस्तृतन्त्रिभ्य ईः"-इति § ई-प्रत्ययः । अस्य यजुषः त्रयीविद्यात्व मुपपादयितु माह— "ऋचेति । अस्मिन् यजुषि तावत् 'ऋचा स्तोमं समर्द्धय' । "गायत्रेण रथन्तरं बृहद् गायत्र वर्त्तनि स्वाहा"-इति पठ्यते ‖ । तत्र ऋचेतिपदेन ऋग्वेदोऽभिधीयते, स्तोमा गायत्ररथन्तरबृहदादिभिः सामान्युच्यन्ते, स्वाहेतिपदेन यजुर्वेदः । अत एवैष मन्त्रो वेदत्रयात्मकत्वात् 'त्रयी विद्या' । अत्र त्रय्याः कः प्रसङ्ग इत्यत आह— "यथैवादोऽमुत्रेति । 'अदः' स्थितिक्रियाविशेषणम्, 'अमुत्र'-इति विप्रकृष्टवचनः । यथा प्रागध्यायादौ सर्वसृष्टेः पुरा त्रयी विद्या उत्पन्ना, एव मेतद् यजुरपि— "स श्रान्तस्तेपानो ब्रह्मैव

---

* का० श्रौ० सू० १६. २. ७ ।

† ५का० १अ० १ब्रा० १४क०=५भा० १३पृ० १पं० द्रष्टव्यम् ।

‡ का० श्रौ० सू० १. ६. २. ७ । § उ० ३ पा० १५८ सू० ।

‖ "इमं नो देव सवितर्यज्ञं प्रणय देवाव्यꣳ सखिविदꣳ सत्राजितं धनजितꣳ स्वर्जितम् । ऋचा स्तोमꣳ समर्द्धय गायत्रेण रथन्तरं बृहद् गायत्रवर्त्तनि स्वाहा"-इति वा० सं० ११. ८ । विहितस्यास्यैव मन्त्रस्यान्तिमो भाग एष द्रष्टव्यः ।

प्रथम मसृजत त्रयी मेव विद्याम्"-इति *। पूर्वं योऽग्निः सृष्टः, अथ यो गर्भेऽन्तरासीत्, 'सोऽग्निरसृज्यतेति। 'स:' सृष्टोऽग्निरेव, इदानीं चीयमानोऽग्निरित्यर्थः ॥ २० ॥

उक्तानष्टौ मन्त्रान् सङ्ख्य प्रशंसितु मनुवदति— "ताश्चे-ताश्चष्टौ सावित्राणीति। गायत्र्या अष्टौ अक्षराणि, अग्नेरपि अष्टनामत्वात् अग्नेर्गायत्रत्वं प्रागुक्तम् †। अतोऽग्नेर्यावन्तोऽव-यवाः, तैः तावन्त मेवाग्निम् एतया आहुत्या सिक्तवान् भवतीत्यर्थः।

अष्टममन्त्रान्ते यः स्वाहा-शब्दः पठितः ‡, तेन नवमेन सह सङ्ख्यां दिक्प्राणात्मना प्रशंसति— "तानि नव भवन्ति, स्वाहा-कारो नवम इति।

स्वाहा-शब्दप्रयोगानन्तर मन्त्रावाप्याहुतिर्हूयते, तया सह पूर्वसङ्ख्यां विराट्प्राणात्मकाग्न्यात्मना स्तौति— "तानि दश भवन्ति आहुतिर्दशमीति। अष्टौ मन्त्राः, स्वाहाकारो नवमः, स्वाहाकारान्ते हूयमाना 'आहुतिः' 'दशमी' दशसङ्ख्यापूर-णीति ॥ २१ ॥

अत्र पूर्वं यत्र पुरुषादीनां चतुर्णां पशूनां कायप्रासनम्, तस्मात् प्रदेशात् उखाद्यर्थेष्टकाकरणार्थं मृत् आनेतव्या; "चतुर्णा मप्सु कायप्रासनम्, ततो मृदिष्टकार्थापश्च"-इति § आम्नातम्।

---

* एतस्मिन्नेव भागस्य ३ पृ० १४ पं० द्रष्टव्यम्।

† "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री तस्मादाहुर्गायत्रो-ऽग्निरिति"—इति ४३ पृ० ४ पं०।

‡ १५४ पृ० '‖' टीप्पन्यां प्रकाशितो मन्त्रो द्रष्टव्यः।

§ का० श्रौ० सू० १६. १. १६, २०। इह च ७०पृ० २१पङ्क्तितः।

तत्र नेतव्यान् पशून् विधातु माख्यायिका माह— "एतस्या माहुत्यां हुतायां मिति। पूर्वं मग्निर्देवसकाशादुत्क्रान्तः, 'ते देवाः' परस्परम् 'मब्रुवन्', 'पशुः मग्निः' मतः 'पशुभिः' 'इमं' पशुरूप मग्निम् 'मन्विच्छाम' मन्विष्याम। 'सः' मग्निः पशुः 'स्वाय' स्वजातीयपशुरूपाय, तं दृष्ट्वा 'माविः' प्रत्यक्षो भविष्यतीति विचार्य, पशुभिरन्विष्टवन्तः। सोऽप्यग्निः प्रत्यक्षोऽभवत्। तस्मात् लोके पशुः सजातीयरूपं दृष्ट्वा प्रत्यक्षो भवतीत्यर्थं लोकप्रसिद्ध्यापपादयति— "गौर्वा गवे, मश्वो वाश्वाय, पुरुषो वा पुरुषायेति ॥ २२ ॥

"तेऽब्रुवन् यद्यह सर्वैरन्वेषिष्याम इति। 'यदि' 'सर्वैः' पुरुषादिपञ्चपशुभिः पशुरूप मग्नि मन्वेष्टु मिच्छामः, तर्हि ते पशवः 'यातयामाः' गतसाराः, मतः 'मनुपजीवनीयाः' न भवन्ति; 'यदि' 'मसर्वैः' पशुभिः, तर्हि 'मसर्वम्' मसम्पूर्ण मग्नि मेव 'मनुवेत्स्यामः' लाभार्थस्य विदेरूपम् *। 'इति' देवाः विचार्य 'द्वाभ्यां' प्रतिनिध्यर्थे कर्मप्रवचनीयः, "प्रतिः प्रतिनिधि प्रतिदाने च" †। 'तस्मात्'-इति, 'पशुभ्याम्'-इति च पञ्चमी। गवाविपशुद्वयप्रतिनिधित्वेन एकं रासभं 'मत्यपश्यन्', यतः 'एषः' द्वयोः प्रतिनिधिः, 'तस्मात्' रासभः स्वरूपेण 'एकः' मपि 'द्विरेताः' विलक्षणपशुद्वयजनकः। रासभादश्वतरस्य गर्दभस्य चोत्पत्तिर्दृश्यते। मतः मश्वाजी, गवाविप्रतिनिधित्वेन रासभ इति त्रयः पशव इत्युक्तम् भवति ॥ २३ ॥

---

* "विद्लृ लाभे"-इति तु० उ० १५२ धा०।

† पा० सू० १. ४. ६२।

उत्तरत्र अनड्वापुरुष मीक्षतेऽग्निम्पुरीष्य मिति वक्ष्यति *; अत्रानड्वापुरुषस्य कः प्रसङ्ग इति, तं दर्शयति— "अनड्वा पुरुषं पुरुषादिति। × × × पुरुषपशोः प्रतिनिधि मनड्वापुरुष मपश्यत्। अनड्वापुरुषस्य लक्षण माह— "एष ह वा अनड्वापुरुषो यो न देवानवति, न पितॄन्, न मनुष्यानिति †। 'अवति' प्रीणयति, देवपितृमनुष्याणा मनर्थक इत्यर्थः। अतः पुरुषपशोः प्रतिनिधिरनड्वापुरुषः, गवाविप्रतिनिधित्वेन रासभः, पूर्वावेवाश्वाजौ। एवं 'सर्वैः पशुभिः' पशुरूप मग्नि मन्विष्टवन्त इति। सर्वैरन्वेषणे असर्वाग्निलाभदोषो नास्तीत्याह— "नो यातयामा इति। सर्वैरन्वेषणे यातयामत्वादिदोषो नास्तीत्यर्थः ॥ २४ ॥

उत्तरत्रानड्वापुरुषस्य तत्कर्मकेक्षणे विनियोगस्य वक्ष्यमाणत्वात् तदितरैरश्वगर्दभाजैस्त्रिभिरग्नेरन्वेषणं दर्शयति— "त्रिभिरन्विच्छन्तीति। पशुगतत्रित्वसङ्ख्यां प्रशंसति— "त्रिवृदग्निरिति। अग्नेस्त्रिवृत्त्वं प्रागुक्तम्— "अष्टौ (रुद्रादीनि) अग्निरूपाणि, कुमारो नवम इति; सैवाग्नेस्त्रिवृत्ता"—इति ‡। अत्र पशुत्रित्वसङ्ख्याया विद्यमानत्वात् तावन्तं तावत्परिमाण मग्निम्, तावत्सङ्ख्याकैरश्वावयवैरेवान्विष्टवान् भवतीति उक्तम्। अथानड्वापुरुषाश्वरासभाजा एव चत्वारः पशवः, कथं तैरन्वेषणे सर्वैरन्वेषणं कृत मित्याशङ्क्य, तेषां चतुर्णा मेव पञ्चसम्पत्ति माह— "ते पञ्चसम्पदा भवन्तीति। रासभः खलु गवाविप्रतिनिधिरिति तौ गवावी द्वौ, पुरुषादयस्त्रय इति पञ्चसम्पत्त्या पञ्च भवन्ती-

---

* उपरिष्टात् (६. ३. ३. ४.) द्रष्टव्यम्।

† का० श्रौ० सूत्रे च १६. २. १३।

‡ पुरस्तात् ४३ पृ० २ पं० द्रष्टव्यम्।

त्यर्थः । ता मेव पञ्चसङ्ख्या मन्त्यात्मना स्तौति— "पञ्चचितिकोऽग्निरिति ॥ २५ ॥

तेषां त्रयाणां पशूनां मौञ्जीबन्धनं विधत्ते— "ते मौञ्जीभिरभिधानीभिरिति । मुञ्जानाम च सुषिरस्तृणविशेषः, तेन निर्मिताभिरभिधानीभीरशनाभिरभिहिता बद्धा भवन्ति । अभिपूर्वो दधातिर्बन्धने वर्त्तते । अभिधीयन्ते बध्यन्ते अभिधान्यो रशनाः । करणे ल्युट् प्रत्ययः * । मुञ्जेनैव रशनाकरण माख्यायिकामुखेनाह— "अग्निर्देवेभ्य इति । 'तस्मात्' अन्तरग्निप्रवेशात् 'सः' मुञ्जः 'सुषिरः' अन्तश्छिद्रवान् । वाक्यान्तर माह— "तस्माद्वेति । 'उ', 'एव' इति पदद्वयम् । 'तस्मात्' अग्निप्रवेशादेव कारणात् स मुञ्जः 'अन्तरतः' मध्ये 'धूमरक्तः' धूमेन युक्तो रक्तवर्ण इव दृश्यते । अत एव 'मुञ्जः अग्नेः योनिः', 'अग्निरिमे पशवः' पशवश्चाग्निरिति प्रागुक्तम् । तस्मात् पशुरूपस्य गर्भभूतस्याग्नेरहिंसायै अन्तरग्निरूपमुञ्जवेष्टनं युक्तम् । यथा लोके 'योनिर्गर्भं न हिनस्ति', 'योनेः' खलु सर्वः 'जायमानः' जनः 'जायते', एव मग्निश्च 'योनेः' 'जायाते इति' पशूनो मुञ्जरशनाभिधानम् । 'जायाते' -इति, "जनी प्रादुर्भावे" †, पञ्चमे लकारे, "लेटोऽडाटौ" -इति ‡ तिप्प्रत्ययस्याडागमः, "वैतोऽन्यत्र"-इति § प्रत्ययस्यैकारस्य ऐकारादेशश्च ॥ २६ ॥

---

* पा० सू० ३. ३. ११७ ।

† दि० आ० ४२ धा० ।

‡ पा० सू० ३. ४. ९४ ।

§ पा० सू० ३. ४. ९६ ।

रथमात्रिवृत्त्वं विधत्ते— "त्रिवृतो भवन्तीति। त्रिगुणिता इत्यर्थः। "अश्वाभिधानीकृता इति। अश्वाभिधानीवत् कृताः यथाश्वाभिधानी कविका मुखं सर्वतो वेष्टयति, एव मेता-स्तिस्रः कार्या इत्यर्थः। अत्र कात्यायनः— "आहवनीयं दक्षि-णेन त्रिवृत्सु अपचाणीवदास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः"—इति *। अस्यार्थः— दक्षिणाशब्दात् "एनबन्यतरस्यामदूरे पञ्चम्याः"—इति † एनप् प्रत्ययः। "एनपा द्वितीया"—इति ‡ 'दक्षिणेन' शब्दप्रयोगे आहवनीयस्य द्वितीया विभक्तिः। आहवनीयस्य दक्षिणप्रदेशे त्रिवृत्सु रशनासु बद्धाः अश्वगर्दभाजाः पशवः अश्वपूर्वाः पङ्क्त्यां पूर्वापराः सन्तः प्राञ्चः प्राङ्मुखाः तिष्ठन्तीति ॥ १७ ॥

तदिदं विधत्ते — "ते प्राञ्चस्तिष्ठन्तीत्यादिना। अश्वादीनां यदानुपूर्व्यम्, 'अश्वः प्रथमः', मध्ये 'रासभः', अन्ते 'अजः' इति। पूर्वोक्तं सृष्टिक्रमं प्रमाणयति — "यद्वै तदश्रु संक्षरित मासीदित्यादिना। एवं हि तत्र प्रथमाध्याये समाम्नातम्— "अथ यदश्रु संक्षरित मासीत्, सोऽश्रुरभवत्; अश्रुर्ह वै त मश्व इत्याचक्षते परोक्षम्, परोक्षकामा हि देवाः। अथ यद-रसदिव, स रासभोऽभवत्। अथ यः कपाले रसो लिप्त आसीत्, सोऽजोऽभवत्। अथ यत् कपाल मासीत्, सा पृथिव्यभवत्" —इति §। तत्र यत् कपाल मासीत्, सा पृथिवी मृच्छब्दे-

* का० श्रौ० सू० १६. २. ४।

† पा० सू० ५. ३. ३५।

‡ पा० सू० २. ३. ३१।

§ पुरस्तादिहैव (पृ० ५ पं० ३) द्रष्टव्यम्।

गोप्ता 'एतत्' इदानीम् 'याम्' मृत्तिकाम् 'आहरिष्यन्तो भवन्ति' इति। अध्वर्यवो मृत्तिकाहरणेन किं करिष्यन्तीति, तत्राह— "एतेभ्यो वा एष रूपेभ्य इति। 'रूपेभ्यः' अश्वगर्दभाजेभ्यः 'अग्रे' पुरा 'एषः' अग्निः 'असृज्यत', 'एतत्' इदानी मपि 'तेभ्यः' पुरा 'एनम्' अग्निं 'जनयति'। मृत्तिकाहरणेन तम् अग्रे सृष्ट मेवाग्निं जनितवन्तो भवन्तीत्यृत्विज इत्यर्थः। अश्वादिभ्यः पूर्व मग्नि-सृष्टिरेव माम्नायते— "अथ यो गर्भोऽन्तरासीत्, सोऽग्निरसृ-ज्यत। स यदस्य सर्वस्याग्र मसृज्यत, तस्मादग्रिर्ह वै त मग्नि-रित्याचक्षते परोक्षम्"-इति * ॥ २८ ॥

तेषां पशूना माहवनीयस्य दक्षिणतोऽवस्थानं विधत्ते— "ते दक्षिणतस्तिष्ठन्तीति। दक्षिणदेशेऽवस्थानं प्रशंसितु माह— "एतद्वै देवा अबिभयुरिति। 'एतद्' सप्तम्या लुक् †, एत-स्मिन्नवकाशे 'देवाः' भीतवन्तः। 'यत्' यस्मात् 'नः' अस्मदीयं 'दक्षिणतः' प्रदेशे 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'न हन्युः' न बाधेरन् 'इति'। अथवा 'यत्' यथा 'न हन्युरिति' हननाभावं देवाः चिन्तितवन्त इत्यर्थः। 'ते एते' देवाः 'यज्ञ'' वज्ररूपम् 'अमु मादित्यम् अपश्यन्'। अत्रादित्यस्य कः प्रसङ्ग इत्यत आह— "असौ वा आदित्य एषोऽश्व इति। योऽय मश्वोऽत्र त्रिवृ-न्मुञ्जरशनाबद्धः, स हि आदित्यः। तथाच तैत्तिरीयकम्— "अमु मादित्य मश्वं श्वेतं भूतं दक्षिणा मनयन्"-इति। तत-स्तेन वज्ररूपादित्यात्मना अश्वेन सर्वाणि यज्ञविघातीनि रक्षांसि अपहत्य भयरहिते नाशकरहिते स्थाने 'एतम्' अग्न्याख्यं यज्ञं

* पुरस्तादिहैव ( पृ० ४ पं० १४ ) द्रष्टव्यम्।

† पा० सू० ७. १, ३६ द्रष्टव्यम्।

ज्ञातवन्तः पूर्वदेवाः । तथैव 'एतत्' इदानीं यजमानः 'दक्षिणतः' स्थितेन पक्षेण 'यज्ञं' निर्बाध मनुतिष्ठतीति । अत्र कात्यायनः—
"उत्तरत आहवनीयस्यारत्निमात्र उभयतस्तीक्ष्णा वैणवी सुषिराभ्रिः कल्माष्यभावेऽकल्माषी प्रादेशमात्रारत्निमात्री वा"—इति * । पूर्वोक्तात्राहवनीयस्य अरत्निमात्रे उत्तरतः प्रादेशमात्री अरत्निमात्री वा उभयतः पार्श्वयोस्तीक्ष्णाया कल्माषलक्षण-वेणुनिर्मिता अन्तः-सुषिरा, अग्निखननसाधनस्थानीयकल्माष-लक्षितत्वासम्भवे 'अकल्माषी' कल्माषलक्षणरहिता सुषिरा कार्येति तस्यार्थः ॥ २९ ॥

तदिदं सार्थवादं विधत्ते— "दक्षिणत आहवनीयो भवतीत्यादिना । "ता मादत्ते"—इत्यतः † प्राक्तनेन वाक्यसन्दर्भेण 'एषा' वक्ष्यमाणा 'अभ्रिः' 'उपशेते' तिष्ठते । आहवनीयाभ्र्योः पुंस्त्रीलिङ्गसाम्यात् स्त्रीपुंसात्मना प्रशंसति— "वृषा वा आहवनीय इति । 'वृषा' पुरुषः, 'योषा' स्त्रियम्, 'दक्षिणतः' स्त्रियाः दक्षिणप्रदेशे 'उपशेते' । आहवनीयाभ्र्योर्मध्यप्रदेशस्य व्यवधानस्वरूपता माह— "अरत्निमात्र इति । एतदपि स्त्रीपुंसयो र्योजयति— "अरत्निमात्रादिति । स्त्रीपुंसयोर्मध्ये ग्रासादि-सञ्चाराय, सम्बाधपरिहाराय च अरत्निमात्रोऽवकाशो युक्त इत्यर्थः ॥ ३० ॥

"सा वैणवीति । वेणुनैव कार्येति । अत्रेतिहास माह— "अग्निर्देवेभ्य इति । यतो वेणुं प्रविष्टवान् अतः 'सुषिरः' । प्रविष्टः 'सः' अग्निः 'अननुप्रज्ञानाय' यथान्ये मां न जानीयुः,

---

* का० श्रौ० सू० १६. २. ५ ।

† एतस्मिन्नेव ब्राह्मणे ३८ कण्डिकारम्भे ( १४१पृ० १५पं० ) द्रष्टव्यम् ।

तथा स्वाच्छादनाय यानि 'वर्माणि' पार्श्वयोरकरोत्, तानि 'पर्वाणि' सन्धयः वेणोः प्रवेशकाले 'यत्र-यत्र' प्रदेशे अग्निः 'ददाह', 'तानि' 'कल्माषाणि' कृष्णविन्दुचिह्नानि 'अभवन्' ॥ ११ ॥

"सा कल्माषीत्यादि । अतः 'सा' अभ्रिः 'कल्माषी' कल्माष-कलितवेणुमयी कर्त्तव्या । अतः कल्माषो वेणुराग्नेयः । "यदि कल्माषीति । कल्माषासम्भवे अन्यरूपो वेणुः कार्य इत्यर्थत उक्तः । तत्र कल्माषाकल्माषयोः सुषिरत्वं तु सर्वथा सम्पाद्य मित्याह— "सुषिरा तु स्यादिति । यस्मात् सुषिरो वेणुरग्नेर्योनिः "सैषा योनिरग्नेर्यद् वेणुः"–इति वेणोरग्निरूपत्वं प्रागुक्तम् *, अतोऽग्निरूपमृत्तिकाखनने अग्नियोनिरूपाभ्रिकरणम् स्याद् 'योनेः' सकाशादेव अग्निः 'आयातै इति' एव मर्थं मित्यर्थः ॥ १२ ॥

अभ्रेः प्रादेशप्रमाणत्व मरत्निप्रमाणत्वञ्च कल्पितम्, तत्रारत्निमात्रत्व मभिमत मिति दर्शयितुं प्रादेशमात्रपक्ष मनुवदति— "प्रादेशमात्रीति । 'हि' यस्मात् इदानीं वागिन्द्रियम् प्रादेश-प्रमाण मभिलक्ष्यते ; प्रथमं ताल्वोष्ठपुटव्यापारेण प्रादेशपर्यन्तं वाच मुच्चार्य ततो देशसंयोगविभागाभ्यां परश्रोत्रं गच्छाति । अथवा, वाक्पदेन जिह्वोच्यते ; सा हि प्रादेशमात्री सती वाक् वदति । यद्वा, वाक्पदेन प्राणवायुर्लक्ष्यते ; स हि नासापुटा-न्निस्सरन् प्रादेशपर्यन्तं गच्छतीत्यागमसिद्धम् । स्वाभिमतं पक्ष माह— "अरत्निमात्री त्वेवेति । 'तु'-शब्दः पूर्वपक्षव्यावृत्त्यर्थः । बाह्वेकदेशत्वादरत्नेः समुदायभूतो बाहुरेकदेशेनापि व्यवह्रियते, तत्प्रमाणकरणे अभ्रिरपि बाहुकृतवीर्यसम्मितैव भवति । अन्यच्च

---

* अत्रैव कण्डिका मनुपदम् ( १४० पृ० ६ पं० ) द्रष्टव्यम् ।

ऽम्नेरेकतस्तीक्ष्णत्व मुभयतस्तीक्ष्णत्वञ्चोक्तम् । यदाह्यापस्तम्बः— "उभयतःक्ष्णूं मन्यतरःक्ष्णूं वा"-इति * ॥ ३३ ॥

तत्र यग्रमूलयोरुभयत्र तीक्ष्णत्वं सिद्धान्तयितुं पूर्वपक्ष मनु-वदति— "अन्यतःक्ष्णुत् स्यादिति । "क्ष्णु तेजने" †, तेजनं नाम निशितत्वम् । "अन्यतरतो ह्येदं वाच इति । वाचो निशितत्व मन्यतरतो वचनापेक्षया । वाक्पदेन जिह्वोच्यते, तस्यास्तु एकत एव तैक्ष्ण्यम् ; अग्राद्धि वचनव्यापार इति । "उभ-यतः क्ष्णुस्त्वेवेति । 'तु'-शब्दः पूर्वपक्षनिवृत्त्यर्थः । निशित-पार्श्वद्वया कार्येत्यर्थः । 'यद्' यस्मात् 'एनया' वाचा जिह्वया 'दैवं' देवसम्बन्धि वाक्यं संस्कृतम् , 'मानुषं च' मनुष्यसम्बन्धि भाषामयञ्च वाक्यं 'वदति' ; अथवा एकयैव वाचा 'सत्यम्', 'अनृतं' मिथ्या च वदति, अत उभयतःक्ष्णुस्त्वम् ॥ ३४ ॥

उभयतःक्ष्णुत्वं प्रकारान्तरेण स्तोतु मनुवदति-- "यद्दे-वोभयःक्ष्णुदिति । 'अस्यै' षष्ठ्यर्थे चतुर्थी । 'यतः' यस्मिन् प्रदेशे 'क्ष्णुत्व' निशितत्वम् , तस्मादेव प्रदेशात् 'अग्नेः वीर्यम्', 'अतः' उभयतस्तैक्ष्ण्यकरणेन वीर्यं नैव निहितवान् भवति ॥ ३५ ॥

"यद्देवोभयत इति । 'एतत्' एतया अभ्र्या निशिता-ग्रया 'एनम्' मृद्रूप मग्निम् 'अनुविद्य' ज्ञात्वा 'एभ्यो लोकेभ्यः' सकाशात् 'अखनन्' अवदारितवन्तः । 'तथैव' 'अयं' यष्टा 'एतया' अभ्र्या लोकत्रयसकाशात् 'खनति' मृदात्मक मग्नि मित्यर्थः ॥ ३६ ॥

---

* आप० श्रौ० सू० १६. १. ७ ।

† अदा० प० २६ धा० ।

कथं यजमानेनैकया अभ्र्या लोकत्रयादग्नेः खनन मित्या-शङ्क्य तदुपपादयति— "स यदिति खनतीति । 'इति'-शब्दो-ऽभिनेयप्रदर्शने, मृदः खननव्यापार मभिनयेन दर्शयतीत्यर्थः । अभ्रेः खननव्यापारे तावत् प्रथम मवक्षेपण मुत्क्षेपणम् मध्ये सञ्चारक्रिया चेति व्यापारत्रय मस्ति, तस्मादभ्रेर्व्यापारत्रयेण पृथिव्यादिलोकत्रयादग्नेः खनन मिति तात्पर्यार्थः ॥ १७ ॥

अभ्रेरादानं विधत्ते-- "ता मादत्त इति । उत्तरत्र "त्रिभि-रादत्ते"-इति * आदाने त्रित्वसङ्ख्याविशिष्टानां मन्त्राणां विधा-नम्, अभ्रिं त्रिभिर्मन्त्रैराददीतेत्यर्थः । तत्र प्रथममन्त्रं विधत्ते-- "देवस्य त्वा सवितुरिति † । मन्त्रस्याय मर्थः-- देवेन सवित्रा अनुज्ञात एवाह मध्वर्युः 'अश्विनोः बाहुभ्यां', 'पूष्णो हस्ता-भ्याम्', 'अङ्गिरस्वत्' अङ्गिराः अग्निः स इव; अङ्गिरःपदात् उत्तरस्य वतुनः सञ्ज्ञाविधानात् पदसञ्ज्ञानिबन्धनं रुत्वं न भवति, अग्निवत् । 'गायत्रेण छन्दसा' अभ्रिं 'त्वाम् आददे' ‡ ॥

मन्त्रस्य तात्पर्यार्थ माह-- "सवितृप्रसूत एवैना मित्यादि ॥

द्वितीयं विधत्ते-- "पृथिव्या इति § । अग्निः त्वम् 'पृथिव्याः' 'सधस्थात्' उपस्थात् सहस्थानात् । पुरीष्यमिति, पुरीषपदेन पशवोऽभिधीयन्ते; पशुहितम् । "तस्मै हितम्"-इति ‖ यत्

* इहैवानुपदम् ( १४२ पृ० १६ प०—४० क० ) द्रष्टव्यम् ।

† का० श्रौ० सू० १६. २. ८क ।

‡ "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या माददे । गायत्रेण च्छन्दसाङ्गिरस्वत्"—इति वा० सं० ११. ६ क ।

§ "पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वदाभर ।
त्रैष्टुभेनच्छन्दसाङ्गिरस्वत्"—इति वा० सं० ११. ६ ख ।

‖ पा० सू० ५. १. ५ ।

प्रत्ययः । अग्निम्, 'अङ्गिरस्वत्' 'आभर' । "हृग्रहोर्भः"–इति हकारस्य भकारः * । किञ्च, 'त्रैष्टुभेन छन्दसा' अग्निवदाभरेति ॥

मन्त्रं व्याचष्टे– "पशवो वै पुरीष मिति ॥ ३८ ॥

तृतीयं विधत्ते– "अभ्रिरसीति † । 'अभ्रिः' वज्रः 'असि', हननसाधनत्वादुभयोः; अभ्रिनामासि । 'नारी' स्त्री च 'असि'; स्त्रीत्वारोपस्तस्यास्तत्कर्तृकहिंसोपशमनार्थः । किञ्च, त्वया अभ्रा 'वयम्' 'सधस्थे' पृथिव्याम्, अस्मिन् सहस्थाने 'अग्निम्' मृद्रूपं 'खनितुं' 'शकेम' शक्ता भूयाः स्म । "शक्लृ शक्तौ" ‡, आशीर्लिङि रूपम् ॥

मन्त्रं व्याचष्टे– "अभ्रिर्ग्रेपेति । अभ्रिरसीत्यनेन 'सत्येन' स ह खनकः 'एनां' गृहीतवान् भवति । "नार्यसीति । अस्य तात्पर्य माह– "वज्रो वा अभ्रिरिति । यथा योषा स्त्री न कञ्चन पुरुषं हिनस्ति, एव मभ्रेः स्त्रीत्वेन सा न कस्यापि हन्त्रीत्यर्थः सिद्धो भवति । सधस्थपदस्य विवरणम्– "इदं वै सधस्थ मिति ॥ ३९ ॥

अभ्र्यादाने विनियुक्तानां मन्त्राणां त्रित्वसङ्ख्यां प्रशंसितु मनुवदति– "त्रिभिरादत्ते त्रिवृदग्निरिति । त्रिभिरादत्ताया अभ्रेश्चतुर्थेन मन्त्रेणाभिमन्त्रणं विधत्ते– "त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयत इति § । 'अथ'-शब्दो व्यवधानाभावं सूच-

---

* पा० ८. २. ३२ सू० १ वा० ।

† "अभ्रिरसि नार्यसि त्वया वय मग्निं शकेम खनितुं सधस्थ आ । जागतेनच्छन्दसाङ्गिरस्वत्"—इति वा० सं० ११. १० ।

‡ स्वा० प० १४ धा० ।

§ का० श्रौ० सू० १६. २. ८ स्व द्रष्टव्यम् ।

यति। इद मेवोत्तरत्र "चतुर्भिरादत्ते"-इत्यस्य * वाक्यस्य बीजम्। आदानसमये एवाभिमन्त्रणात् चत्वारोऽप्यादाने विनियुक्ता इति पक्षस्य बीज मस्ति; खननादिवत् स्पष्टव्यापाराभावात्, अश्वाद्यभिमन्त्रणवत् पृथगवस्थिताया अभ्रेरभिमन्त्रणत्वाच्च। अत एव त्रिभिरादाय चतुर्थेनैतत्पूर्वमन्त्रसङ्ख्यानुवादपुरस्सरं चतुर्थत्वोक्तिरभिमन्त्रणमन्त्रस्येति तात्पर्यम्। अभिमन्त्रणं नाम वीर्याधान मिति प्रशंसति-- "अथास्यां चतुर्थेन वीर्य मदधुरिति ॥ ४० ॥

मन्त्रं विधत्ते-- "हस्त आधाय सवितेति। 'सविता' देवः 'हस्ते' 'आधाय' अवस्थाप्य 'हिरण्ययीं' हितरमणीयाम्; अथवा हिरण्यपदेन,अमृतं छन्दयोच्यते, अमृतमयीम्; प्रागुक्तगायत्रत्रैष्टुभजागतानुष्टुभच्छन्दोरूपां वा 'एताम्' अभ्रिं 'बिभ्रत्' सर्वदा अधारयन्, 'अग्नेर्ज्योतिः' 'निचाय्य' दृष्ट्वा 'पृथिव्या अधि' ततः सकाशात् 'आभरत्' आहृतवान्। 'आनुष्टुभेन छन्दसा' अङ्गिवदाहृतवानिति †।

मन्त्रं व्याचष्टे— "हस्ते ह्यस्याहितेति। 'हिरण्ययी'-पदव्याख्याने "हिरण्मयी ह्येषा या छन्दोमयीत्युक्तम्। तदुपपादयति— "तान्येतान्येवेति। 'आरम्भाय' आलम्भनाय ॥ ४१ ॥

अत्र केचिन्मन्त्रगतहिरण्ययीपदबलेन अभ्रि मपि हिरण्यनिर्मिता मिच्छन्तीति तत्पक्ष मनुवदति— "तां हैके हिर-

---

* इहैवानुपदं (१४३ पृ० १७ पं०—४५ क०) द्रष्टव्यम्।

† "हस्त आधाय सविता बिभ्रदभ्रिᳪ हिरण्ययीम्।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्।
आनुष्टुभेनच्छन्दसाङ्गिरस्वत्"—इति वा० सं० ११. ११।

ण्मयीं कुर्वन्तीति। अतएव कात्यायनः-- "हिरण्मयी मेके"-इति * पक्षान्तरं सूत्रितवान्। "अभ्युक्तेति। "हस्त आधाय सविता बिभ्रदभ्रिं हिरण्मयीम्"-इति मन्त्रे समाम्ने इत्यर्थः॥

तद् दूषयति— "न तथा कुर्यादिति। अत्र पूर्वोक्त मेव छन्दोमयत्व मिहोपदिशति— "यद्वा एषा छन्दांसीति॥ ४२॥

आदानाभिमन्त्रणविनियुक्तानां मन्त्राणां सङ्ख्यां प्रशंसितु माह— "तां चतुर्भिरादत्त इति। 'चतुर्भिः' अभिमन्त्रणमन्त्र-सहितैः पूर्वैस्त्रिभिर्मन्त्रैः 'ताम्' अभ्रिम् 'आदत्ते'। आदाने मन्त्रचतुष्कप्रकार उपपादितः। अत एव मीमांसायां द्वादशाध्यायगे इद मेव विषयवाक्य मुदाहृतम्। तदर्थः स गृहीत-तत्त्वविद्भिराचार्यैः—

"चतुर्भिरभ्रि मित्यत्र विकल्पो वा समुच्चयः।

विकल्पः पूर्ववन्मैवं समूहे करणत्वतः॥"-इति †॥

यतश्चतुर्भिरादत्ते, 'सर्वा वाक्' 'चतुरक्षरा' अक्षरचतुष्टयवती। कथं वाचश्चतुरक्षरत्वम्? तदाह— "वागित्येक मिति। अत्र एकाक्षरवाग्रूपत्वेन त्र्यक्षरात्मकेन च स्तूयमानाम् मन्त्राम् विभज्य दर्शयति— "यैवैषानुष्टुबुक्तमेति। प्रथमेन 'सा'-इति-पदेन वागुच्यते; द्वितीयेन अभिमन्त्रणे विनियुक्ता चतुर्थी ऋक् अनुष्टुप् 'त्र्यक्षरं' पदम्। 'अक्षर मिति' यदुक्तम्, 'तानि' आदाने विनियुक्तानि "देवस्य त्वा"-इत्यादीनि 'यजूंषि'। 'तस्मात्' 'चतुर्भिः' अभ्र्यादानं नाम, 'सर्वया वाचा' खनन मेवेत्यर्थः॥ ४३॥

---

* का० श्रौ० सू० १६. २. ७।

† मी० जै० न्या० १२ अ० ३ पा० (३० सू०) १४ अधिकरणं द्रष्टव्यम्।

मन्त्रगतचतुष्ट्वसङ्ख्यां चतुर्दिगात्मना च स्तौति— "यद्वेव चतुर्भिश्चतस्रो वै दिश इति । अत्र मन्त्रगत-गायत्र-त्रैष्टुभ-जागता-नुष्टुभैः छन्दोभिः सह पूर्वां चतुःसङ्ख्यां महादिगवान्तर-दिगात्मना स्तौति— "छन्दोभिश्च यजुर्भिश्चादत्ते तदष्टा-विति * ॥ ४४ ॥ ३ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये प्रथमं ब्राह्मणम् ॥

———

( अथ द्वितीयं ब्राह्मणम् . )

हस्त ऽएषाभिर्भवत्यथ पशूनभिमन्त्रयते । एतद्वा ऽएषु देवा अन्वेषिष्यन्तः पुरस्ताद्वीर्यं मदधुस्तथै-वैष्वय मेतदन्वेषिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सोऽश्व मभिमन्त्रयते । प्रतूर्त्तं व्वाजिन्नाद्र-वेति यद्वै क्षिप्रं तत्तूर्त मथ यत् क्षिप्रात् क्षेपीय-

* गायत्रम्, त्रैष्टुभम्, जागतम्, आनुष्टुभम्, इति चत्वारि छन्दांसि; देवस्य त्वा पृथिव्याः, अभ्रिरसि, हस्त आधाय (वा० सं० ११. ९क, ९ख, १०, ११.) इति चत्वारि यजंषीत्येषां सङ्कलनया अष्टाविति सिद्धम् ॥

स्तत् प्रतूर्त्तं व्वरिष्ठा मनु संव्वत मितीयं वै व्वरिष्ठा संव्वदिमा मनु संव्वत मित्येतद्दिवि ते जन्म परम मन्तरिक्षे तव नाभिः पृथिव्या मधि योनिरिदिति तदेन मेता देवताः करोत्यग्निं व्वायु मादित्यं तदश्वे व्वीर्यं दधाति * ॥ २ ॥

अथ रासभम् । युञ्जाथाᳩ रासभं युव मित्य-ध्वर्युं चैतद्यजमानं चाहास्मिन्यामे व्वृषण्वस्ॄ ऽइ-त्यस्मिन् कर्मणि व्वृषण्वसू ऽइत्येतदग्निं भरन्त मस्मयु मित्यग्निं भरन्त मस्मत्प्रेषित मित्येतत्तद्रा-सभे व्वीर्यं दधाति † ॥ ३ ॥

अथाजम् ‡ । योगे-योगे तवस्तरं व्वाजे-व्वाजे हवामह ऽइत्यन्नं वै व्वाजः कर्मणि-कर्मणि तव-स्तर मन्नेऽन्ने हवामह ऽइत्येतत् सखाय इन्द्र मूत-य ऽइतीन्द्रियवन्त मूतय ऽइत्येतत्तदजे व्वीर्यं दधाति § ॥ ४ ॥

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्नि-

---

*, †, § 'दधाति'—इति क, ङ ।

‡ 'अथाजम्'—इति ग, घ ।

यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति * ॥ ५ ॥

अथैनान् प्राच उत्क्रमयति। तदेन मेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत् पशवो नेन्माय मग्निर्हिनसदिति ॥ ६ ॥

सोऽश्व मुत्क्रमयति। प्रतूर्व्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वा ऽअशस्तिस्त्वरमाण एह्यवक्रामन् पाप्मान मित्येतद्रुद्रस्य गाणपत्यं मयोभूरेहीति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेन मश्वेनान्विच्छति † ॥ ७ ॥

अथ रासभम्। उर्व्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्निति यथैव यजुस्तथा बन्धुः पूष्णा सयुजा सहेतीयं वै पूषानया सयुजा सहेत्येतत्तदेनꣳ रासभेनान्विच्छति ‡ ॥ ८ ॥

अथाजम्। पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वदाभरेति पृथिव्या उपस्थादग्निं पशव्य मङ्गिरस्वदाभरेत्येतत्तदेन मजेनान्विच्छति § ॥ ९ ॥

---

* 'दधाति'—इति क, ख।

†, ‡, § '०नान्विच्छति'—इति क, ख।

त्रिभिरन्विच्छति । त्रिवृदग्निर्यावानग्निर्याव-त्यस्य मात्रा तावतैवैन मेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् षड्ऋतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १० ॥ ४ ॥

## ॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [३. २.] ॥

पूर्व माहवनीयस्य दक्षिणप्रदेशे तिष्ठन्मुत्तरशनावद्धाः प्राङ्मुखा येऽश्वगर्दभाजास्तिष्ठन्ति, तेषा मिदानीं यथाक्रम मभिमन्त्रणं समन्त्रकं विधित्सुरादावभिमन्त्रणं वीर्यात्मना प्रशंसति— "हस्त एषाभ्रिर्भवतीति । अभ्रिं हस्ते गृहीत्वैव पशूनभिमन्त्रयते * ॥१॥

प्रथम मश्वाभिमन्त्रणं समन्त्रं विधत्ते— "सोऽश्व मिति † । मन्त्रस्याय मर्थः,— हे 'वाजिन्' अश्व ! 'वरिष्ठाम्' अतिशयेनोर्वीम्, 'अनुसंवतं' सम्पूर्वात् वनतेः क्विपि "अनुदात्तोपदेशवनति०"-इति ‡ न-लोपे, "ह्रस्वस्य पिति०"-इति § तुक् । अस्माभिः क्रियमाणं सम्भजनम् 'अनु'-लक्ष्य भूमिं, 'प्रतूर्त्तं' त्वरतेः

---

* "देवस्य त्वेत्यभ्रि मादाय, हस्त आधायेत्येना मभिमन्त्रयते"—इति का० श्रौ० सू० १६. २. ८। मन्त्रत्रयम्— वा० सं० ११. ६, ११ ।

† का० श्रौ० सू० १६. २. ६ ।

‡ पा० सू० ६. ४. ३७ ।

§ पा० सू० ५. १. ७१ ।

"त्वरत्वर०"-इत्युठि * क्वते "नसत्त-निषत्तानुत्त-प्रतूर्त्त-सूर्त्त-गूर्त्तानि छन्दसि"-इति † निष्ठा-तस्य नत्वाभावेन निपातनम्। अतिक्षिप्रम् 'आद्रव' आगच्छ। हे अग्ने! 'ते' तव 'परमं जन्म दिवि' आदित्यरूपेण, 'अन्तरिक्षं' तव 'नाभिः' वायुरूपेण, 'पृथिव्यां' तव 'योनिः' उत्पत्तिस्थानम् अग्न्यात्मकत्वेनेति, अग्नस्य लोकत्रयाभिमानिदेवतात्वेन स्तुतिः कृतेति तात्पर्यम् ‡।

अथ प्रतूर्त्तपदं व्याचष्टे— "यद्वै क्षिप्रं तत् प्रतूर्त्त मिति। 'क्षिप्रं=तूर्त्तम्', 'अथ' 'यत् क्षिप्रात्' अपि 'क्षेपीयः' क्षिप्रतरम्, 'तत् प्रतूर्त्तम्' इत्युच्यते। क्षिप्रशब्दादीयसुनि "स्थूलदूरयुवह्रस्वक्षिप्र०"-इति § यणादिपरस्य लोपः, पूर्वस्येकारस्य गुणः। उत्तरार्द्धस्य तात्पर्य माह— "तदेन मेता देवता इति। अभिमन्त्रणेनाश्वस्य किं मायातम्? तदाह— "तदश्वे वीर्यं दधातीति ॥ २ ॥

रासभाभिमन्त्रणं समन्त्रं विधत्ते— "अथ रासभ मिति ‖। अभिमन्त्रयत इत्यनुषङ्गः। 'युवम्' इति द्विवचनेन अध्वर्युयजमानावुच्येते। 'वृषण्वसू' वृषा सेक्ता गर्द्दभः, स ययोर्वसु धनम्, तौ। 'युवं' युवाम्। 'अस्मिन्' 'यामे' यायते गम्यते प्राप्यते देवैरिति, यान्ति सङ्गच्छन्ते यत्र परस्परं देवा इति वा, यामं कर्म, तस्मिन् रासभं 'युञ्जाथाम्'। तं विशिनष्टि— "अग्निं

---

* पा० सू० ६. ४. २०।

† पा० सू० ८. २. ६१।

‡ मन्त्रद्वयम्— वा० सं० ११. १२।

§ पा० सू० ६. ४. १५६।

‖ का० श्रौ० सू० १६. २. ८।

भरन्त मिति। "इयङ्शोर्भः" *। 'षश्वयुः' अश्वार्थं फलं कामयमानम्; यद्वा, यातेः रूपम्, अश्वान्वेषित मिति। मन्त्रं † व्याचष्टे— "अध्वर्यु चैतदिति ॥ ३ ॥

अजाभिमन्त्रणं विधत्ते— "अयाजं योगे योग इति ‡। अभिमन्त्रयत इति शेषः। अस्यार्थः,— हे 'सखायः' समान-ख्याना ऋत्विजः! 'तवस्तरं' तव इति बलनाम §, बलिनम् 'इन्द्रम्' इरां भूमिं दृणन्तम्। "इन्द्र इन्द्रं दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वा" -इति ‖ यास्का-चार्यः। इन्द्रियवन्तं बलवन्तं वा तम्, अजम्। 'योगे' युञ्जन्ति देवा अत्रेति योगः कर्म, वीप्सायां कर्मणि कर्त्तव्ये। 'वाजे वाजे' मनुष्याणाम् अन्ने अन्ने दातव्ये स्थिते सति 'ऊतये' तर्पणाय 'हवामहे' वय मध्वर्यव इति ¶।

मन्त्रगतयोगवाजेन्द्रपदानि व्याचष्टे— "अन्नं वै वाजः कर्मणि-कर्मणीति ॥ ४ ॥

अभिमन्त्रणमन्त्रत्रित्वसङ्ख्यां त्रिवृदग्न्यात्मना स्तौति— "त्रि-भिरिति। अत्र सूत्रम्— "अनुपस्पृशन्नुत्क्रमयत्येनान् प्राचः प्रति-मन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्याः सधस्थादिति"—इति ** ॥ ५ ॥

---

* पा० ८. २. ३२ सू० १ वा०।

† वा० सं० ११. १३।

‡ का० श्रौ० सू० १६. २. ६।

§ निघ० २. ६. ५।

‖ निरु० १०. १. ८।

¶ मन्त्रत्रयम्— वा० सं० ११. १४।

** का० श्रौ० सू० १६. २. १०।

तदिदं विधत्ते— "अधीनान् प्राच इति। 'एनान्' पशून् प्राङ्मुखाननुक्रमयेत्। उक्रमितैः पशुभिः 'एनम्' मृद्रूप मग्निम् अन्विष्टवान् भवति। "नोपस्पृशतीति। 'यत्' यतः 'पशवोऽग्निः' स्पर्शनेन हिंसा स्यात्, सा माभूदिति। 'हिनसत्'-इति हिंसेः पञ्चमलकारे रूपम् ॥ ६ ॥

उत्क्रमणमनूद्य मन्त्रं विधत्ते— "सोऽश्व मुत्क्रामयतीति। "प्रतूर्वन्नेहीति *। अस्याय मर्थः,— 'अशस्तीः' पाप्मनः 'अवक्रामन्' अभिगमयन् 'प्रतूर्वन्' प्रकर्षेण त्वरमाणः 'एहि' आगच्छ। 'मयोभूः' सुखस्य भावयिता 'रुद्रस्य' पशुपतेः 'गाणपत्यं' गणपतित्वम् 'एहि' गच्छ। अशस्तिपदं व्याचष्टे— "पाप्मा वा अशस्तिरिति। अश्वस्य रुद्रगणपतित्वं प्रतिपादयति— "रौद्रा वै पशव इति। पशुरूपस्याग्नेः देवता रुद्रः, तस्य गणपतित्व मेहीत्यर्थः। अश्वोत्क्रमणेन नः किं जात मिति, तद् दर्शयति— "तदेन मश्वेनान्विच्छतीति ॥ ७ ॥

रासभोत्क्रमणं विधत्ते— "अथ रासभ मुर्वन्तरिक्ष मिति †। 'उरु' विस्तीर्णम् अन्तरिक्षं 'वीहि' प्राप्नुहि। किं कुर्वन्? 'गव्यूतिः' गोसञ्चारभूमिं 'स्वस्ति' क्षेमेण कुर्वन्, 'अभयानि' कृण्वन्, 'पूष्णा' पृथिव्या यागभूम्या 'सयुजा' सहायेन सह वीहीति ‡। मन्त्रस्य पूर्वार्द्धं निगदव्याख्यात मित्याह— "यथैव यजुस्तथा बन्धुरिति। न व्याख्यातु मर्हतीत्यर्थः। उत्तरार्द्ध-पूषपदं विवृणोति— "इयं वै पूषेति ॥ ८ ॥

---

* वा० सं० ११. १५ क।

† का० श्रौ० सू० १६. २. १०।

‡ वा० सं ११. १५ ख।

अजोत्क्रमणं विधत्ते— "अधाजम् पृथिव्या इति *। व्याख्यातोऽयं मन्त्रः † ॥ ८ ॥

उत्क्रमणमन्त्रगतत्रित्वसङ्ख्या मन्त्यात्मना स्तौति— "त्रिभिरन्विच्छति विहृदग्निरिति। पूर्वं मेतेषा मश्वरासभाजाना मभिमन्त्रणे त्रयो मन्त्रा विनियुक्ताः, इदानी मुत्क्रमणे त्रय इति तां सङ्ख्यां सम्भूय ऋतुसंवत्सराग्निरूपत्वेन प्रशंसितु मुक्त मनुवादयति— "त्रिभिः पुरस्तादभिमन्त्रयते तत् षडिति। स्पष्टोऽर्थः ॥ १० ॥ ४ [ ३. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

षष्ठकाण्डे तृतीयेऽध्याये द्वितीयं ब्राह्मणम् ॥

## इति षष्ठकाण्डे द्वितीयः प्रपाठकः समाप्तः ‡ ॥

---

* का० श्रौ० सू० १६. २. १०।

† १६४ पृ० १६ पं० (वा० सं० ११. ८ क) द्रष्टव्यम्।

‡ "कण्डीसङ्ख्या १०४"—इति क, ख; "कण्डिकासङ्ख्या १०४"—इति ग, घ। तत्र, १ ब्रा० ४० क०, २ ब्रा० १० क०, ३ ब्रा० ४४ क०, ४ ब्रा० १० क०; सङ्कलनया १०४ इति सिद्धम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

तृतीयाध्याये तृतीयं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

प्रदीप्ता एतेऽग्नयो भवन्ति *। अथ मृद मच्छ-यन्तीमे वै लोका एतेऽग्नयस्ते यदा प्रदीप्ता अथैत ऽइमे लोकाः पुरो वा ऽएतदेभ्यो लोकेभ्यो ऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य मृद माहरति तदेनं पुरेभ्यो लोकेभ्योऽन्विच्छति ॥ १ ॥

प्राञ्चो यन्ति। प्राची हि दिगग्नेः स्वाया मेवैन मेतद्दिश्यन्विच्छति स्वायां दिशि विन्दति ॥२॥

ते प्रयन्ति। अग्निं पुरीष्य मङ्गिरस्वदच्छेम इत्यग्निं पशव्य मग्निवदच्छेम इत्येतत् † ॥ ३ ॥

---

* 'भवन्ति'—इति ग, घ।

† 'इत्येतत्'—इति ग, घ।

अथानद्धापुरुष मीक्षते। अग्निं पुरीष्य मङ्गिरस्वद्भरिष्याम इत्यग्निं पशव्य मग्निवद्भरिष्याम इत्येतत्तदेन मनद्धापुरुषेणान्विच्छति * ॥ ४ ॥

अथ व्वल्मीकवपा सुषिरा व्यध्वे निहिता भवति। ता मन्वीक्षत ऽइयं वै व्वल्मीकवपेय मु वा ऽइमे लोका एतद्वा ऽएनं देवा एषु लोकेषु व्विग्राह मैच्छंस्तथैवैन मय मेतदेषु लोकेषु व्विग्राह मिच्छति † ॥ ५ ॥

अन्वग्निरुषसा मग्र मख्यदिति। तदेन मुषः-स्वैच्छन्नन्वहानि प्रथमो जातवेदा इति तदेन महःस्वैच्छन्ननु सूर्यस्य पुरुत्रा च रश्मीनिति तदेनꣳ सूर्यस्य रश्मिष्वैच्छन्ननु द्यावापृथिवी ऽआततन्थेति तदेनं द्यावापृथिव्योरैच्छंस्त मविन्दंस्तथैवैन मय मेतद्विन्दति तं यदा परा पश्यत्यथ ता मवास्यत्यागच्छन्ति मृदम् ॥ ६ ॥

अथाश्व मभिमन्त्रयते। एतद्वै देवा अब्रुवन्

---

* 'न्विच्छति'—इति क, ख।

† 'मिच्छति'—इति क, ख।

पाप्मान मस्यापहनामेति श्रमो वै पाप्मा श्रम मस्य
पाप्मान मपहनामेति तस्य श्रमं पाप्मान मपाघ्नं-
स्तथैवास्याय मेतच्छ्रमं पाप्मान मपहन्ति ॥ ७ ॥

आगत्य वाज्यध्वान मिति*। आगतो ह्यस्याध्वा
भवति सर्वा मृधो विधूनुत इति पाप्मा वै
मृधः सर्वान् पाप्मनो विधूनुत इत्येतत्तस्मादु
हैतदश्वः स्त्वा † विधूनुतेऽग्निं सधस्थे महति
चक्षुषा निचिकीष इतीदं वै महत् सधस्थ
मग्नि मस्मिन् महति सधस्थे चक्षुषा दिदृक्षत
इत्येतत् ‡ ॥ ८ ॥

अथैन माक्रमयति। एतद्वा एष एतं देवेभ्यो
ऽनुविद्य प्राब्रवीद्यथाय मिहैवेत्येवम् § ॥ ९ ॥

यद्वेवाक्रमयति। एतद्वै देवा अबिभयुर्यद्वै न
इम मिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा
एतं वज्र मुपरिष्टादभिगोप्तार मकुर्वन्नमु मेवा-

---

* 'मिति'—इति क। 'मिति'—इति ग, घ।

† 'स्यन्त्वा'—इति ग', घ; का०-वेबरेया च दृष्टम्।

‡ 'इत्येतत्'—इति ग, घ।

§ 'मिहैवेत्येवम्'—इति ग, घ।

दित्य मसौ वा ऽआदित्य एषो ऽश्वस्तथैवास्मा ऽअस्य मेतं व्वज्र मुपरिष्टादभिगोप्तारं करोति ॥ १० ॥

आक्रम्य व्वाजिन् । पृथिवी मग्नि मिच्छ रुचा त्व मिति चक्षुर्व्वै रुगाक्रम्य त्वं व्वाजिन् पृथिवी मग्नि मिच्छ चक्षुषेत्येतद् भूम्या व्वृत्त्वाय* नो ब्रूहि यतः खनेम तं व्वय मिति भूमेस्तत् स्पाशयित्वाय नो ब्रूहि यत एनं खनेमेत्येतत् † ॥ ११ ॥

अथैन मुन्मृशति । एतद्वा ऽएनं देवाः प्रोषिवाꣳसं व्वीर्य्येण समार्द्धयंस्तथैवैन मय मेतत् प्रोषिवाꣳसं व्वीर्य्येण समर्द्धयति द्यौस्ते पृष्ठं पृथिवी सधस्थ मात्मान्तरिक्षꣳ समुद्रो योनिरितीत्य मसीत्य मसीत्येवैतदाह व्विख्याय चक्षुषा त्व मभितिष्ठ पृतन्यत इति व्विख्याय चक्षुषा त्व मभितिष्ठ सर्व्वान् पाप्मन इत्येतत्तेनोपस्पृशति व्वज्रो वा ऽअश्वो नेन्मायं व्वज्रो हिनसदिति ‡ ॥ १२ ॥

अथैन मुत्क्रमयति । एतद्वै देवा ऽअब्रुवन्

---

* 'वृत्वाय'—इति च दृष्टं डा०-वेवरमहोदयेन ।

† '०मेत्येतत्'—इति ग, घ ।

‡ 'हिनसदिति'—इति क, ख, ङ; 'हिनसदिति'—इति ग, घ ।

क्रिमिम मभ्युत्क्रमिष्याम इति मइत् सौभग मिति तं मइत् सौभग मभ्युदक्रमयंस्तथैवैन मय मेतन् मइत् सौभग मभ्युत्क्रमयत्युत्क्राम मइते सौभगायेत्युत्क्राम मइत्ते सौभग मित्येतत्तस्माद् हैतदश्वः पशूनां भगितमो ऽस्मादास्थानादिति यचैतत्तिष्ठसीत्येतद्द्रविणोदा इति द्रविणꣳ ह्येभ्यो ददाति व्वाजिन्निति व्वाजी ह्येष व्वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे ऽअस्या इति व्वय मस्यै पृथिव्यै सुमतौ स्यामाग्नि मस्या उपस्थे खनन्त इत्येतत् * ॥ १३ ॥

अथैन मुत्क्रान्त मभिमन्त्रयते । एतद्वा ऽएनं देवाः प्रोचिवाꣳसं यथा ददिवाꣳसं व्वन्देतैव मुपास्तुवन्नुपा मइयंस्तथैवैन मय मेतदुपस्तौत्युप मइयत्युदक्रमीदित्युद्ध्याक्रमीद् द्रविणोदा इति द्रविणꣳ ह्येभ्यो ददाति व्वाज्यर्व्वेति व्वाजी च ह्येषो ऽर्व्वा चाकः सुलोकꣳ सुकृतं पृथिव्या मित्यकरः सुलोकꣳ सुकृतं पृथिव्या मित्येतत्ततः खनेम सुप्र-

* 'इत्येतत्'—इति ग, घ।

तीक मग्नि मिति तत एनं खनेमेत्येतत् सुप्रतीक
मिति सर्व्वतो वा ऽअग्निः सुप्रतीकः स्वो रुहाणा
अधि नाक मुत्तम मिति स्वर्गो वै लोको नाकः
स्वर्गं लोकᳬ रोहन्तोऽधि नाक मुत्तम मित्येतत्तं
दक्षिणोपसङ्क्रमयति * यद्येतरौ पशू भवतस्ते दक्षि-
णतः प्राञ्चस्तिष्ठन्ति स य एवामुत्र, दक्षिणत †
स्थानस्य बन्धुः सोऽत्र ‡ ॥ १४ ॥

अथोपविश्य मृद मभिजुहोति । एतद्वै देवा
अब्रुवंश्चेतयध्व मिति चितिं मिच्छतेति व्वाव तद-
ब्रुवंस्ते चेतयमाना एत माहुति मपश्यंस्ता मजुहवु-
स्ताᳬ हुत्वेमांल्लोकानुखा मपश्यन् ॥ १५ ॥

ते ऽब्रुवन् । चेतयध्व मेवेति चितिं मिच्छ-
तेति व्वाव तदब्रुवंस्ते चेतयमाना एतां द्वितीया
माहुति मपश्यंस्ता मजुहवुस्ताᳬ हुत्वा व्विश्व-
ज्योतिषोऽपश्यन्नेता देवता अग्निं व्वायु मादित्य-

---

* 'दक्षिणतोपसंक्रमयति'—इति घ ।

† 'दक्षिणत'—इति क, ख ।

‡ 'सोऽत्रा'—इति क, 'सोऽत्रा'—इति ख, 'सोऽत्रा'—इति ङ ।

§ 'मपश्यन्'- इति ग, घ ।

मेता ह्येव देवता विश्वं ज्योतिस्तथैवैतद्यजमान ऽएते आहुती हुत्वेमांश्च लोकानुख्यां पश्यत्येताश्च देवता विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोतीमांश्च तल्लोकानेताश्च देवता व्यतिषजति ॥ १६ ॥

यद्वेवैते ऽआहुती जुहोति। मृदं च तदपश्च प्रीणाति ते ऽइष्टा प्रीत्वाथैनं सम्भरति व्यतिषक्ताभ्यां जुहोति * मृदं च तदपश्च व्यतिषजति † ॥ १७ ॥

आज्येन जुहोति। वज्रो वा ऽआज्यं वज्रमेवास्मा ऽएतदभिगोप्तारं करोत्यथो रेतो वा ऽआज्यꣳ रेत एवैतत् सिञ्चति स्रुवेण वृषा वै स्रुवो वृषा वै रेतः सिञ्चति स्वाहाकारेण वृषा वै स्वाहाकारो वृषा वै रेतः सिञ्चति ‡ ॥ १८ ॥

आ त्वा जिघर्म्मि मनसा घृतेनेति §। आ त्वा जुहोमि मनसा च घृतेन चेत्येतत् प्रतिक्षियन्तं

---

* ग-घ-पुस्तकयोरत्र (।) छेदोऽस्ति।

† 'व्यतिषजति'—इति क।

‡ 'सिञ्चति'—इति क।

§ 'घृतेनेति'—इति ग, घ; 'घृतेनेति'—इति क, ख।

भुवनानि व्विश्वेति प्रत्यङ् ह्येष सर्व्वाणि भुवनानि क्षियति पृथुं तिरश्चा व्वयसा बृहन्त मिति पृथ्वी ऽएष तिर्यङ् वयसो बृहन्भूमेन व्यचिष्ठ मन्नं रभसं दृशान मित्यत्रकाशवन्त मग्नेरन्नाद दीप्यमान मित्येतत् * ॥ १९ ॥

पा व्विश्वतः प्रत्यञ्चं जिघर्म्मीति † । पा सर्व्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसा मनसा तज्जुषेतेत्यह्रीडमानेन मनसा तज्जोषयेतेत्येतन्मर्यश्री स्पृहयद्वर्णो ऽअग्निरिति मर्यश्रीर्ह्येष स्पृहयद्वर्णो ऽग्निर्नाभिमृशे तन्वा जर्भुराण इति न ह्येषो ऽभिमृशे तन्वा दीप्यमानो भवति ॥ २० ॥

द्वाभ्या मभिजुहोति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतꣳ सिञ्चत्याग्नेयीभ्या मग्नि मेवैतद्रेतोभूतꣳ सिञ्चति ते यदाग्नेय्यौ तेनाग्निरथ यत् त्रिष्टुभौ तेनेन्द्र ऐन्द्राग्नो ऽग्निर्यावानग्निर्यावत्यस्य

* मित्येतत्'—इति ग, घ ।

† 'जिघर्मीति'—इति ग, घ । 'जिघर्मीमि'—इति ख, क ।

मात्रा तावतैवैन मेतद् रेतोभूतᳪं सिञ्चतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्यो ऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैन मेतद् रेतोभूतᳪं सिञ्चति * ॥ २१ ॥

अश्वस्य पदे जुहोति। अग्निरेष यदश्वस्तथो हास्यैते ऽग्निमत्येवाहुती हुते भवतः ॥ २२ ॥

अथैनं परिलिखति। मात्रा मेवास्मा ऽएतत् करोति यथैतावानसीत्येवम् † ॥ २३ ॥

यद्वेवैनं परिलिखति। एतद्वै देवा अबिभयु-र्यद्वै न इम मिह रक्षाᳪंसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्यश्रयंस्तथैवास्मा ऽअय मेतां पुरं परि-श्रयत्यभ्रि‍र्व्वज्रो वा ऽअभ्रिर्व्वज्र मेवास्मा ऽएतदभि-गोप्तारं करोति सर्व्वतः परिलिखति सर्व्वत एवास्मा ऽएतं व्वज्र मभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृत मेवास्मा ऽएतं व्वज्र मभिगोप्तारं करोति ॥ २४ ॥

---

* 'सिञ्चति'—इति ख।

† 'भवतः'—इति क, ख।

‡ •'सीत्येवम्'—इति ग, घ।

परि व्वाजपतिः कविः * । परि त्वाग्ने पुरं व्वयं त्व मग्ने द्युभिरित्यग्नि मेवास्मा ऽएतदुपस्तुत्य व्वर्म करोति परिवतीभिः परीव हि पुर माग्नेयीभिरग्निपुरा मेवास्मा ऽएतत् करोति सा हैषाग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुर मेवास्मा ऽएतत् करोति तस्माद् हैतत् पुरां परमꣳ रूपं यत्त्रिपुरꣳ स वै व्वर्षीयसा-वर्षीयसा छन्दसा परां-परां लेखां व्वरीयसीं करोति तस्मात् पुरां परा-परा व्वरीयसी लेखा भवन्ति लेखा हि पुरः † ॥ २५ ॥

अथैन मस्यां खनति । एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽइमा मेवात्मान मकुर्व्वन् गुप्त्या ऽआत्मात्मानं गोप्स्यतीति सा समम्बिला स्यात्तदस्येय मात्मा भवति यद्वेव समम्बिला योनिर्व्वा ऽइयꣳ रेत इदं यद्वै रेतसो योनि मतिरिच्यते ऽमुया तद्

---

* 'कवि'—इति ग, घ ।

† 'पुरः'—इति ख, 'पुरः'—इति ग, घ, 'पुरः'—इति ङ ।

भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्रेतसः समृद्धं यत् समम्बिलं चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य एवैन मेतद्दिग्भ्यः खनति॥ २६ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ३.] ॥

कात्यायनः— "अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निम्पुरीष्य मिति"-इति *। गार्हपत्यादिषु त्रिष्वग्निषु दीप्यमानेषु "अग्निम्पुरीष्य मिति मन्त्रेण मृत्पिण्ड मभिलक्ष्य गच्छेयुरित्यर्थः। तद्विधत्ते— "प्रदीप्ता एतेऽग्नय इति। "अच्छयन्तीति। अभिगच्छन्तीति। ब्रह्माध्वर्य्युयजमानाः। 'अच्छ'-शब्दस्य "अच्छ गत्यर्थवदेषु"-इति † गतिसंज्ञा। अग्निसान्निध्यं प्रशंसति— "इमे वै लोका इति। 'अग्रे' पूर्वं 'देवाः' 'एभ्यो लोकेभ्यः' 'पुरः' पूर्वस्मिन् प्रदेशे, लोकानां पुरःप्रदेशे कर्मचयन मन्विष्टवन्तः। 'तत्' तस्मात् 'एतान्' लोकत्रयात्मकान् 'अग्नीन्' ('अतीत्य') 'आदीप्य' प्रज्वाल्य 'मृदम्' आहरेयुः। अग्निषु ज्वलत्सु मृदानयनल्लोकानां पुरोदेशे मृद्रूप मग्निं कृतवन्तो भवन्ति ॥ १ ॥

तत्र गच्छता मध्वर्य्युप्रभृतीनां प्राङ्मुखत्वं विधत्ते— "प्राञ्चो यन्तीति ॥ २ ॥

अभिगमन मनूद्य मन्त्रं विधत्ते— "ते प्रयन्त्यग्निम्पुरीष्य मङ्गिरस्वदच्छेम इतीति ‡। 'पुरीष्यं' पशुहितं मृद्रूपम्, 'अङ्गिरस्वत्' अग्निवत् 'अच्छेम' अभिगच्छामः ॥ ३ ॥

---

* का० श्रौ० सू० १६. २. ११।

† पा० सू० १. ४. ६९।

‡ वा० सं० ११. १६।

पूर्वं पुरुषपशोः प्रतिनिधित्वेन अनड्वापुरुष उक्तः *, तस्ये-दानीं विनियोग माह— "अथानड्वापुरुष मीक्षत इति †। देव-पितृमनुष्यानर्थकः स इति प्रागुक्तः ‡। 'भरिष्यामः' आह-रिष्याम इत्यर्थः। अनड्वापुरुषनिरीक्षणं तेनाग्नेरन्वेषण मित्येतत् ॥ ४ ॥

अत्र सूत्रम्— "पिण्ड मपरेण व्यध्वे वल्मीकवपां छिद्रां निद-धाति"–इति §। अश्वादिपशूनां त्रिष्टुम्मुख्याभिधानीबन्धनात् पूर्वं मृत्पिण्डस्य पश्चिमदेशे 'व्यध्वे' पिण्डाहवनीययोर्मध्ये सच्छिद्रा वल्मीकवपा निधेयेत्युक्तम्; इदानीं "वल्मीकवपा मादाय छिद्रेण पिण्ड मीक्षतेऽन्वग्निरिति"–इति ‖; तदिदं विधिद्वयं दर्शयति— "अथ वल्मीकेति। पूर्व मेव व्यध्वे सुषिराया वल्मीक-वपायाः स्थापनं सूचयितुं 'निहिता'–इति भूतकालवाचि क्तान्तं पदम्, 'ता मनु' हितां वपा मनुलक्ष्य ईक्षेत, मृदं वपाच्छिद्रेण पिण्डं पश्येदित्यर्थः। "इयं वै वल्मीकवपेत्यादेरय मर्थः,—वल्मीक-वपा नाम 'इयं' भूमिः; तत्कार्यत्वात्। भूमिर्हि सर्वे लोकाः तत्प्रमुखत्वात् इतरेषां कर्मभूमित्वेन विशिष्टत्वाच्च। पूर्वं 'देवाः' 'एनम्' अग्निम् 'एषु' सर्वलोकेषु 'विप्राहम्' ऐच्छत्, विष्टव्या-त्वासीति सर्वत्रान्विष्टवन्तः, इदानीं तच्छिद्रेण पिण्डनिरीक्षणं सर्वलोकेषु मृद्रूपस्याग्नेर्विष्टव्यान्वेषण मिति ॥ ५ ॥

---

* १३७ पृ० १६ पं० द्रष्टव्यम्।

† का० श्रौ० सू० १६. २. १३।

‡ १५७ पृ० ४ पं० भाष्यं द्रष्टव्यम्।

§ का० श्रौ० सू० १६. २. ३।

‖ का० श्रौ० सू० १६. २. १४।

गिरीयचि मन्त्रं विधत्ते--"अन्वग्निरिति *। प्रजापति-रूपेणाग्निः स्तूयते--"अन्वग्निरिति। 'उषसाम् अग्रम्' आदि-त्यम् 'अनु'-लक्ष्य अग्निम् 'अन्वख्यत्' अनुदीप्यते। 'प्रथमः' आद्यः 'जातवेदाः' जातप्रज्ञः। जातानि भूतानि वेत्तीति वा, जाते जाते विद्यते जायत इति वा जातवेदाः †। अहानि 'अनु'-लक्ष्य दीप्यते। 'पुरुत्रा' बहुषु देशेषु 'सूर्य्यस्य रश्मीन्' 'अनु'-लक्ष्य दीप्यते। एवं पारोक्ष्येणोक्त्वा चतुर्थपादेनाग्निं सम्बोध्याह-- स त्वं मग्ने! 'द्यावापृथिवी' 'अनु'-लक्ष्य 'आततन्थ' स्वतेज आते-निथ। "बभूथाततन्थजगृभ्मववर्थ०"-इति ‡ निगम इडभावेन निपातितः॥

मन्त्रस्य तात्पर्य्य माह-- "तदेन मुषःस्वेच्छन्नित्यादिना। "परा पश्यतीति। यदा पिण्ड' छिद्रे ण पश्येत्, तदा 'मृदम्' 'अवस्यति' चिनोति, जानाति। 'अथ' 'ताम्' स्थद मभि-लक्ष्य गच्छेदिति॥ ६॥

"अथाश्व मिति §। "एत है देवा इति। पूर्वं 'देवाः' पथि श्रान्तस्य अश्वस्य श्रमलक्षणं पाप्मान मपहतवन्तः, एव मभिमन्त्रणेन पथि श्रान्तस्य श्रमापनयनं भवति॥ ७॥

मन्त्रं विधत्ते— "आगत्य वाजीति ‖। 'वाजी' वेजनवान् बलवान् अश्वः 'अध्वानं' मार्गम् 'आगत्य' 'सर्वाः' 'मृधः' सङ्ग्रा-

---

* वा० सं० ११. १७।

‖ निरु० ७. ५. १ द्रष्टव्यम्।

‡ पा० सू० ७. २. ६४।

§ का० श्रौ० सू० १६. २. १६।

‖ वा० सं ११. १८।

माम् 'विधुनुते' कम्पयति। 'मइति सधस्थे' पृथिव्यां वर्त्तमानम् 'अग्निम्' 'चक्षुषा' 'निचिकीषते' द्रष्टु मिच्छति।

द्वितीयं पादं व्याचष्टे— "पाप्मा वै मृध इति। कथ मश्व-विधूनन मिति, तदुपपादयति— "तस्मादु हैतदिति। 'अश्वः' 'स्यत्वा' स्यन्दतेः क्त्वा-प्रत्यये इडभावे नलोपे च कृते रूपम्। अध्वानं गत्वा स्वशरीरं 'विधूनते' कम्पयति ॥ ८ ॥

तत्र सूत्रम्— "आक्रम्येत्येनेन पिण्ड मधिष्ठापयति"-इति *। एनेनेत्यश्वोऽभिधीयते। "आक्रम्य वाजिन्"-इति मन्त्रेण † पिण्ड मेनेनाश्वेनाधिष्ठापयति आक्रमयतीत्यर्थः। तद् विधत्ते— "अथैन माक्रमयतीति। 'एनं' मृत्पिण्ड मश्वेनाक्रमयेदित्यर्थः। "एतद्वा इति। पूर्वं 'यथा' 'एतम्' अश्वम् अग्निस्थानम् 'अनु-विद्य' लब्ध्वा 'देवेभ्यः' 'अयम्' अग्निः 'इह' देशे तिष्ठतीति पादाक्रमेण 'प्राब्रवीत्', 'एवम्' अश्वेन पिण्डाधिष्ठापनं नाम, तस्मादग्नेर्वेदन मित्यर्थः ॥ ९ ॥

आक्रमणं प्रकारान्तरेण स्तोतु मनुवदति— "यद्वेवेति। 'देवाः' रक्षोभ्यो भीतवन्तः 'एतं' 'वज्रम्' वज्ररूप मश्वम् आदि-त्यम् 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकम् 'अकुर्वन्'। आदित्यस्याश्वरूपता प्रागुक्ता ‡। 'तथैव' तेन प्रकारेण 'अस्मै' पिण्डपायाग्नये 'अयम्' अनुष्ठाता अश्वाक्रमणेन 'एतं' वज्ररूप

---

* का० श्रौ० सू० १६. २. १७।

† वा० सं० ११. १६।

‡ २. ६. ३. ३ (२ भा० ४०७ पृ० १ पं०)। ३. ५. १. १६, २० (३ भा० २७५, २७६ पृ०)। "असौ वा आदित्य एषोऽश्वः"—इति चान्योत्तरत्र (७. ३. २. १८)। "सूरादश्वं वसवो निरतष्ट" इति च ऋ० सं १. १६३. २।

मश्व आदित्यम् 'उपरिष्टात्' उपरि भागे 'अभिगोप्तारं' रक्षकं 'करोति' कृतवान् भवतीति ॥ १० ॥

मन्त्रं विधत्ते-- "आक्रम्य वाजिन्निति *। हे 'वाजिन्' अश्व! 'त्वं' 'पृथिवीम्' 'आक्रम्य', 'रुचा' "रुच दीप्तौ" †, क्विबन्तात् तृतीयैकवचनम्, अनेन 'चक्षुषा' 'अग्निम्' 'इच्छ', कुत्र तिष्ठतीत्यन्वेषणं कुरु। 'हस्त्वाय' हर्णातिर्वर्त्तमाने क्त्वा, हस्त्वायेति क्त्वो यक्। अत्र हृ-धातुः स्पर्शनार्थे; धातूनामनेकार्थत्वात्। 'भूम्याः'-इति कर्मणि षष्ठी, भूमिम्, 'हस्त्वाय' स्पृष्ट्वा, भूप्रदेशं स्पर्शयित्वा 'नः ब्रूहि', 'यतः' यस्मात् प्रदेशात् 'तम्' मद्रूप मग्निं 'खनेम' इति ॥

अत्र मन्त्रे 'रुचा'-इति, 'हस्त्वाय'-इति पदं व्याचष्टे— "चक्षुर्वै रुगिति, "भूमेस्तात् पाशयित्वायेति। "स्पश बाधनस्पर्शनयोः ‡"-इत्यस्य रूपम्, "स्पाशयित्वायेति, पूर्ववत् क्त्वो यक् ॥ ११ ॥

अश्वाभिमन्त्रणं विधत्ते— "अथैन मुन्मृशतीति §। 'प्रोचिवांसम्' यत्राग्निस्तिष्ठतीति चोक्तवन्तम्। उन्मर्शनं नाम अश्वपृष्ठस्योपरि पाणिधारणम्। मन्त्रं विधत्ते— "द्यौस्त इति ‖। हे अश्व! 'ते' तव 'द्यौः' द्युलोकः 'पृष्ठम्' उपरि भागः, 'पृथिवी' 'सधस्थम्' सहस्थानम्, पादावित्यर्थः; 'आत्मा'

---

* वा० सं० ११. १६।

† भ्वा० व्या० ७४५ धा०।

‡ भ्वा० उ० ८८७ धा०।

§ का० श्रौ० सू० १६. २. १८ क।

‖ वा० सं० ११. २०।

शरीरम् 'अन्तरिक्षम्', 'समुद्रः' उदकं 'योनिः' उत्पत्ति-स्थानम्। तादृशः 'त्वम्' 'चक्षुषा' 'विख्याय' निरीक्ष्य, 'पृत-न्यतः' सङ्ग्रामेच्छून् पुरुषान् 'पाप्मनः इति' 'एतत्' 'अभि-तिष्ठ' सहस्व। 'पृतना'-शब्दात् क्यचि "कव्यध्वरपृतनस्यर्चि लोपः"-इति * अवर्णस्य लोपः॥

पूर्वार्द्धस्य तात्पर्य माह— "इत्य मसीत्य मसीति। 'द्युलो-कात्मासि, पृथिव्यात्मासि'-इत्याद्यर्थो वीप्साकृतः। उत्तरार्द्धगतं पृतन्यत्पदं व्याचष्टे— "सर्वान् पाप्मन इत्येतदिति। अत्र सूत्रम्— "अनुपस्पृशन्नुत्क्रामेत्युत्क्रमयति"-इति †। अश्व मस्पृशन्नेवोत्क्रा-मेतिमन्त्रेणाश्वस्योत्क्रामणं कारयेदित्यर्थः। तद् विधत्ते— "नोपस्पृशतीत्यादि॥ १२॥

"अथैन मुत्क्रमयतीति। अत्रोत्क्रमणस्य प्रयोजनं वक्तुं देवानां प्रश्न माह— "कि मिम मभ्युत्क्रमिष्याम इतीति। किम्प्रयोजन मुद्दिश्येति तस्यार्थः। प्रयोजन माह— "महत्सौ-भग मितीति। मन्त्रं विधत्ते— "उत्क्रामेति ‡। हे 'वाजिन्!' हे 'द्रविणोदः!' धनस्य दातः!, त्वम् 'अस्मात् स्थानात्' पूर्व मवस्थिताद् देशात् 'उत्क्राम' उद्गच्छ 'महते' 'सौभगाय' ऐश्व-र्यायेति तदर्थः। 'अस्याः' पृथिव्याः 'उपस्थे' उपस्थाने 'अग्निम्' उद्दिश्य मृत्पिण्डं 'खनन्तः' वयम् 'अस्याः' पृथिव्याः 'सुमतौ' शोभनदानादियुक्तमतौ 'स्याम' भवेमेति॥

अश्वस्य सौभाग्य माह— "तस्माद्ध हैतदश्वः पशूना मिति।

---

* पा० सू० ७. ४. ३६।

† का० श्रौ० सू० १६. २. १८।

‡ वा० सं० ११. २१।

ये अश्वा: व्यापनशीला: शीघ्रगामिन: तेषां मध्ये असावश्वो 'भगितम:' अतिशयेन भाग्यवान्, 'राजवाहनत्वात् । 'अस्मादाख्यानात्' -इति पदं व्याचष्टे—"यवैतत् तिष्ठतीति ॥ १३ ॥

पुनरप्यश्वस्याभिमन्त्रणं विधत्ते—"अथैन मुत्क्रान्त मभिमन्त्रयत इति *। पूर्वं 'देवा:' यथा 'एनम्' अग्निम् 'प्रोषिवांसं' उषितवन्तं 'ददिवांसं' धनं दत्तवन्तं लोको 'वन्देत' स्तुवीत, 'एवं' वय मपीति अश्वम् 'अस्तुवम्', 'अमहयम्' अपूजयंश्च ; 'तथा' अनुष्ठातापि अभिमन्त्रणेन स्तुतवान् पूजितवान् भवति ॥

मन्त्रं विधत्ते—"उदक्रमीदितीति †। 'द्रविणोदा:' धनस्य दाता, 'अर्वा' अरणशीलो 'वाजी' वेजनवान् अश्व: 'उदक्रमीत्' ऊर्ध्वं पादविक्षेपम्, पृथिव्यां 'सुकृतं' सुष्ठु निष्पादितम् 'सुलोकं' शोभनं लोकम् 'अक:' कृतवान् । स्वकार्यकारणयोरपि साधुत्वं द्योतयितु मुभयत्र सुशब्दप्रयोग: । अकरिति, करोतेर्लुङि "मन्त्रे घसह्वरणशेति ‡ च्लेर्लुकि, गुणे, सिलोपे रूपम् । यद्यपि प्रथमपुरुषैकवचने तिलोपे च रूपं समानम्, तथापि 'अकर: सुलोकम्'—इति ब्राह्मणव्याख्यानानुसारेण मध्यम:, तद् व्याख्यात मकरिति । तत्र करोतेर्लुङि च्ले: "कृमृदृरुहिभ्यश्छन्दसि"- -इति § अङादेशे, गुणे, मध्यमसकारस्य रुत्वविसर्गयो: कृतयो: रूपम् । 'तत:' तस्मात् प्रदेशात् 'सुप्रतीकं' शोभनावयवम् 'अग्निम्' अश्वरूपम् । 'स्वनेम' । किं कुर्वन्त: ? 'नाकं' क मिति सुखनाम,

---

* का० श्रौ० सू० १६. २. १८ ।

† वा० सं० ११. २२ ।

‡ पा० सू० २. ४. ८० ।

§ पा० सू० ३. १. ५६ ।

न कम् अकम् असुखम् दुःखम्, तद् यत्र गतानां नास्ति, सर्वदा सुखमयम्; अत एव 'उत्तमम्' उत्कृष्टं 'स्वः' स्वर्गं लोकम् 'अधिरुहाणाः' आरोहन्तः; स्वर्गारोहणाय गमेमेति। 'अकः सुलोकम्'-इति व्याचष्टे— 'स्वर्गो वै लोको नाक इति॥

आमन्त्रितस्याश्वस्य रासभाभ्यां सह्यावस्थापनं विधत्ते— "तं दक्षिणतोपसङ्क्रमयन्तीति *। दक्षिणशब्दादाचि प्रत्यये कृते रूपं दक्षिणेति। "स य एवामुत्र दक्षिणत इति॥

पूर्वं मश्वरासभाजपशुविधानं प्रस्तुत्य त्रिरुत्क्रमेण यथाः "ते प्राञ्चस्तिष्ठन्ति"-इत्युपक्रम्य, "ते दक्षिणतस्तिष्ठन्त्येतद्वै देवा अभिभयुरिति यद् ब्राह्मणमुक्तम् †, 'सोऽत्र' 'बन्धुः' ब्राह्मणमिति ब्राह्मणातिदेशः॥ १४॥

अत्र कात्यायनः— "उपविश्य पदभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्यां मृग्भ्यां माहुती स्रुवेणाश्वपदे"-इति ‡। 'व्यतिषक्ताभ्याम्' व्यतिषङ्गश्च एकस्याः पूर्वार्धः इतरस्या उत्तरार्धं इत्येका ऋक्; एवमितरावप्यर्धर्चौ संयोजनीयौ। तथा ऋक् द्वितीया। एवं व्यतिषक्ताभ्याम् "आ त्वा जिघर्मि"-इति § ताभ्यां मृग्भ्यां मश्वस्य पदे द्वे आहुती जुहुयात्।

तदिदं सार्थवादं विधत्ते— "अथोपविश्य पद मभिजुहोतीत्यादि, "अश्वस्य पदे जुहोतीत्यन्तेन। 'उपविश्य'-इति

---

* का० श्रौ० सू० १६. २. २०।

† १३६ पृ० १ पङ्क्तिमः, ८ पङ्क्तितश्च द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. २. २१।

§ वा० सं० ११. २३, २४।

मूर्धसंस्कारत्वादुपदेशः *। "तां हुत्वेति। प्रथमाहुतिं हुत्वा लोकत्रयाभिमाम् 'उखाम्' 'अपश्यन्' ॥ १५ ॥

"तेऽब्रुवन्निति। द्वितीयाहुतिं हुत्वा विश्वज्योतिर्नामिष्टकां दृष्टवन्तः। विश्वज्योतिस्संज्ञकानां तिसृणा मिष्टकानां देवतासम्बन्ध माह— "अग्निं वायु मादित्य मिति। "व्यतिषक्ताभ्यां जुहोति"–इति व्यतिषङ्गप्रकारः पूर्व मुक्तः †, तादृग्भ्या मृग्भ्यां हवनेन त्रीनिमांल्लोकान् 'एताः' अग्निवाय्वादित्यस्वरूपा देवताश्च व्यतिषक्तवान् भवति; पृथिवीलोकस्याग्निम्, अन्तरिक्षलोकस्य वायुम्, द्युलोकस्यादित्य मिति ॥ १६ ॥

प्रकारान्तरेणाहुतिद्वयं स्तोतु मनुवदति— "यद्वेवैते आहुती इति। आहुतिद्वयेन मृद मपश्च प्रीणितवान् भवति। यतो व्यतिषक्ताभ्या मृग्भ्यां होमः, अतो मृद मपश्चोखार्थं संयोजयति ॥ १७ ॥

होम्यं द्रव्यं विधत्ते— "आज्येन जुहोतीति। आज्यस्य वज्रत्वं प्रागुक्तम् ‡। होमकरणं विधत्ते—"स्रुवेणेति। मन्त्रान्ते 'स्वाहा'-शब्दः प्रयोक्तव्य इत्याह— "स्वाहाकारेणेति। जुहोतीत्यनुषङ्गः ॥ १८ ॥

मन्त्रं विधत्ते— "आ त्वा जिघर्मीति §। मन्त्रस्याय मर्थः,– 'मनसा' 'घृतेन' आज्येन च त्वाम् 'आजिघर्मि'। "इ त्यन्य-

---

* का० श्रौ० १६. २. २१ सूत्रीयं व्याख्यानं द्रष्टव्यम्।

† एतत्पूर्वकण्डिकोपक्रमे ( १४० पृ० ६ पं० ) द्रष्टव्यम्।

‡ का० १. ४. ४. ४ ( १ भा० ३६२ पृ० ) द्रष्टव्यम्।

§ वा० सं० ११. २३।

दीप्योः" * । आ जुहोमि, आसिञ्चामि, आज्यं सिञ्चामीत्यर्थः । अग्निं विशिनष्टि पादत्रयेण— 'विश्वा सर्वाणि भुवनानि प्रति क्षियन्तम्' सर्वत्र भूतजातेषु निवसन्त मित्यर्थः । 'तिरश्चा' –इति भावपरो निर्देशः, 'पृथुं' विस्तृतम् । यद्वा, 'तिरश्चा' –इति धूमविशेषणम्; 'वयसा' धूमेन 'बृहन्तम्' । अत एव 'व्यचिष्ठं' व्यापनवन्तम्, अवकाशवन्तम् । 'अन्नैः' स्वस्मिन् हुतैर्घृतादिभिः, 'रभसम्' उत्साहवन्तम् । अत एव 'दृशानं' दर्शनीयं, दीप्यमानम् । अग्निं त्वा माजिघर्मीति सम्बन्धः ॥

मन्त्रं प्रतिपाद मनूद्य व्याचष्टे — "आ त्वा जुहोमीति । व्यचिष्ठ-रभस-पदयोर्व्याख्यानम्--"अवकाशवन्त मन्नाद मिति ॥ १८ ॥

द्वितीयं मन्त्रं विधत्ते—'आ विश्वत इति † । अय मर्थः,— 'विश्वतः' सर्वतः 'प्रत्यञ्चं' प्रत्यगात्मतया प्रतीयमान मग्निम्, 'अरक्षसा' रक्षोदोषरहितेन 'मनसा' युक्तः अहम् 'आजिघर्मि' आसिञ्चामि । 'तत्' हुतं 'जुषेत' सेवेत इति परोक्षनिर्देशः, युष्मच्छब्दसमानार्थो भवच्छब्दाध्याहारो वा । 'मर्यश्रीः' म्रियतेः कर्मणि क्विप्, मर्यैर्मनुष्यैराश्रयणीयः । 'स्पृहयद्वर्णः' स्पृहयन् परेषां रुचि मुत्पादयन् वर्णो यस्य, शुक्लभास्वररूपत्वात् । 'तन्वा' शरीरेण 'जर्भुराणः' दीप्यमानो 'अग्निः' 'नाभिमृशे' तुमर्थे केन्प्रत्ययः ‡, अभिमर्शनीयो न भवति ॥

* जु० प० १४ धा० ।

† वा० सं० ११. २४ ।

‡ पा० सू० ३. ४. ६ द्रष्टव्यम् ।

तमर्थं व्याचष्टे — "या वर्धन इति । 'वर्धया'-इति पदं व्याख्यातम्— "ईडमानेनेति ॥ २० ॥

मन्त्रगतसंख्यां प्रशंसति— "द्वाभ्या मभिष्टुणोति द्विपाद्विति । 'यजमानोऽग्निः'-इति विराड्रूपस्याग्नेर्यजमानभाविशरीरात्मकतया च तद्रूपत्वम् । मन्त्रदेवतां प्रशंसति— "आग्नेयीभ्या मिति । "अग्नेर्ढक्" * । अनयोर्मन्त्रयोरग्निसम्बन्धं त्रिष्टुप्छन्दश्च मिलित्वा प्रशंसति — "यदाग्नेय्याविति । अग्निदेवत्येनाग्निरुच्यते ; मन्त्रगतत्रिष्टुप्छन्दसा इन्द्रः, त्रिष्टुबिन्द्रयोः सम्बन्धात् ; "त मिन्द्रो देवतान्वसृज्यत त्रिष्टुप् छन्दः"-इति † । अग्निरप्यैन्द्राग्नस्तदुपपादयति— "इन्द्राग्नी इति । इन्द्रः सर्वेषां देवानां परमः, अग्निर्देवाना मवमः, उभयोर्मध्यवर्तिन्यः सर्वा देवता इति इन्द्राग्नी सर्वदेवात्मकौ ‡ । अग्निरपि सर्वदेवत्यः ; तस्मिन्नेवाग्नौ सर्वदेवतोद्देशेन हविः प्रक्षेपात्, "अग्निर्वै सर्वा देवताः"-इति § श्रुतेश्च । अतः 'अग्निः' यत्परिमाणः, 'तावता' तत्परिमाणेन इन्द्राग्निरूपेण प्रकारान्तरेण 'एनम्' तत्संख्याकाभ्या मिन्द्राग्निरूपाभ्यां प्रीणितवान् भवति ॥ २१ ॥

आहुतिद्वयस्याधिकरणं विधत्ते— "अश्वपदे जुहोतीति ‖ । यद्यश्वपदे हवनम्, तर्हि कथ माग्निदेवत्यमन्त्रप्रयोगः ? तत्राह— "अग्निरेष यदश्व इति । अश्वस्याग्निरूपत्वं प्रागुक्तम्—

---

* पा० सू० ४. २. ३३ ।

† तै० सं० ७. १. १. ६—६ ।

‡ ऐ० ब्रा० १. १. १ द्रष्टव्यम् ।

§ १ का० ५. १. ८ (१भा० ४०७ पृ०) द्रष्टव्यम् ।

‖ का० श्रौ० सू० १६. २. २१ ।

"स एतान् पञ्च पशून् प्राविशत्, स एते"-इत्यादिना * ॥ २२ ॥

अत्र सूत्रम्— "अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति, वह्निर्वह्निरुत्तरयोत्तरयेति †। एतं मृत्पिण्डं "परि वाज पतिः"-इत्यादिभिस्तिसृभिः ‡ उत्तरोत्तराधिकच्छन्दस्काभिः त्रिवारं परिलिखेदिति। तदिदं विधत्ते— "अथैनं परिलिखतीत्यादि। परिलेखनेन 'अस्मै' मृद्रूपायाग्नये 'मात्रां' परिच्छेदम्, इयत्ताम् 'करोति' कृतवान् भवति। तदेव विवृणोति— "यथैतावानिति ॥ २३ ॥

"यद्वेवैनं परिलिखतीति। परिलेखनं प्रशंसितुं देवकृतत्वमाह— "एतद्ध देवा इति। 'एतां पुरं' रेखारूपां पुरं परिश्रितवन्तः। परिलेखने साधनं विधत्ते— "अभ्र्येति §। "सर्वतः परिलिखतीति। चतुर्दिशं समन्तमित्यर्थः। परिलेखनस्य त्रित्वं विधत्ते— "त्रिष्कृत्व इति। त्रिवारं परिलेखनेन 'त्रिवृतं' त्रिगुणितं 'वज्रम्' 'अस्मै' मृत्पिण्डाय 'अभिगोप्तारं' रक्षकं कृतवान् भवति ॥ २४ ॥

मन्त्रं विधत्ते— "परि वाजपतिरिति। आद्या गायत्री ‖, "परि त्वाग्ने पुरं वयम्"-इति द्वितीया अनुष्टुप् ¶, "त्वमग्ने द्युभिः"-इति तृतीया त्रिष्टुप् **; तिस्रोऽप्याग्नेय्यः। यतो-

---

* पुरस्तादिहैव (५३ पृ० ८ पं०) द्रष्टव्यम्।

† का० श्रौ० सू० १६. २. २२ क।

‡ वा० सं० ११. २५, २६, २७।

§ का० श्रौ० सू० १६. २. २२ ख।

‖ वा० सं० ११. २५।

¶ वा० सं० ११. २६। ** वा० सं० ११. २७।

ऽग्निर्देवत्यः, अत एताभिः परिलेखनेन अग्नि मेव 'वर्म' कवचं कृतवान् भवति ।

मन्त्रत्रयगतं परिशब्दं स्तौति— "परिवतीभिरिति । यतो रेखाः पुरात्मिकाः, अतस्तासां परिशब्दयुक्ताभिः ऋग्भिः करणेन प्राकारपरिवृतपुरात्मकत्व मुक्तम् । मन्त्रगतं त्रित्वं प्रशंसति— "तिसृभिस्त्रिपुर मेवेति । प्राकारत्रयपरिवृतत्वं पुरा मुत्कृष्टतमं रूपम् । "स वै वर्षीयसेत्यादि । अस्याय मर्थः,— 'सः' अध्वर्युः 'वर्षीयसा' वृद्धेन, ततोऽपि 'वर्षीयसा' वृद्धतरेण 'छन्दसा', उत्तरोत्तराधिकच्छन्दस्काभिः ऋग्भि रित्यर्थः । छन्दांसि इदानीं प्रदर्शितानि, ताभिर्ऋग्भिः रेखा मपि उत्तरोत्तरवरीयसीं महत्तरां करोति । तस्मादुत्तरोत्तराधिकरेखात्रयकरणेन तादृग्भूतप्रकारेण पुरेण मृत्पिण्डं रक्षितवान् भवतीति ॥ २५ ॥

अथ पिण्डखननं विधत्ते— "अथैन मस्यां खनतीति * । 'अस्यां' भूमौ 'एनम्' पिण्डं खनेदिति । आधेयाधिकरणभावेन भूमिमृत्पिण्डयोः प्रतीयमानं पार्थक्य मपाकरोति— "एतद्वै देवा इति । पूर्वं देवा रक्षोभीत्या 'तस्मै' पिण्डाय 'इमां' भूमि मेव 'आत्मानं' स्वरूपम् 'अकुर्वन्' । स्वरूपं स्वरूपरक्षकं भविष्यतीत्यतो हेतोः रक्षणाय 'सा' खन्यमाना भूमिः 'समन्विला' चतुर्दिशं समानविवरा कर्त्तव्या । अयमर्थः,— यावत्य उखाषाढादय इष्टकाः कर्त्तव्याः, तावत्परिमाण मेवेदं खनेत् । समन्विलत्वं स्तौति-- "यद्वेव समन्विलेति । 'इयं' भूमिः 'योनिः' अभ्युत्पत्तिस्थानम्, 'इदं रेतः' उखा-

* का० श्रौ० सू० १६. २. २१ ॥

पाठार्थं खन्यमानं मृत्स्वरूपं रेतः; अतः 'रेतसः' सम्बन्धी बिन्दुः, यावत् 'योनिम् अतिरिच्यते', तावत् उखादिपर्याप्तो मृत् खनितुं युक्तेत्यर्थः। “चतुःस्रक्तिरेष कूप इति *। मृदर्थं खन्यमानः कूपः चतुरस्रः कर्त्तव्यः। स्रक्तीश्चतुर्दिगात्मना स्तौति — “चतस्रो वै दिश इति † ॥ २६ ॥ १ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठे काण्डे तृतीयेऽध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजि द्विपसहितरथौ सायणः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्वजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

* “अथैष एवैतस्य स्रगाकारो रज्जुरिव हि सर्पाः, कूपा इव हि सर्पाणामायतनानि” — इति ह्येतत्पूर्वस्मिन् काण्डे श्रुतम् ४. ५. ३।
† “अग्निं खनन्त उपस्थे पृथिव्याः” — इति च (वा० सं ११. २१.)।

Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... Rs. 3 12
*Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... 5 0
*Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... 2 8
Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... 4 6
Nityacraāpradiph, Fasc. 1-8 @ /10/- ... ... ... 5 0
Nyāyabindutikā, Fasc 1 ... ... ... 0 10
Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 2-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... 5 0
Padumawati, Face. 1-5 @ 2/ ... ... ... ... 10 0
Pariciṣta Parvan, Fasc. 3-5 @ /10/ each ... ... ... 1 14
Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... 4 6
Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Part II Fasc 1, @ 1/- ... ... 1 0
Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... 1 8
Parācara Smriti, Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-6 ; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... 12 8
Parācara, Institutes of (English) @ 1/ ... ... ... 1 0
Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3 12
*Sāma Vēda Saṁhitā, Vols. I, Fasc. 7-10 ; II, 1-6 ; III, 1-7 ; IV, 1-6 ; V, 1-8 ; @ /10/ each ... ... ... 19 6
Sānkhya Sūtra V tti, Fasc. 1-4 @ /10/ ... ... 2 8
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3 0
*Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... 1 4
Shaddarsana-Samuccaya, Fasc. 1-2 @ /10/ ... ... ... 1 4
Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... 3 12
Sucruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- ... ... ... 1 0
Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... 2 8
*Taittereya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... 11 14
* Ditto Brāhman, Fasc. 6-25 @ /10/- ... ... 12 8
Ditto Prātisākhya, Fasc. I 3 @ /10/- ... ... 1 14
Tāṇdya Brāhmaṇ, (Text) Fasc. 6-19 @ /10/ each ... ... 6 14
Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... 7 8
Tattva Cintāmaṇi, Vol. I, Fasc. 1-9 : Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... 23 12
Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... 1 14
Trikāṇda-Mandanom, Fasc. 1-3 @ /10/ ... ... 1 14
Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... 3 2
Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each ... 6 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... ... 6 0
Vallāla Carita, Fasc. 1 ... ... ... ... 0 10
Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... 3 12
*Vāyu Purāṇa, Vol. I, Fasc. 3-6 ; Vol. II, Fasc. 1-7 , @ /10/ each 6 14
Vidhāno Pārigāt, Fasc 1-8 : Vol II Fasc 1 ... ... ... 5 10
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4 6
V hat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... 3 12
*Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... 1 14

*Tibetan Series.*

Pag-Sam Thi Śiṅ, Fasc. 1-4 @ 1/ each ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 2-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... 14 0
Rtogs *brjod dpag hkhari* Śiṅ ( *Tib.* & *Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... 11 0

*Arabic and Persian Series.*

Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... 8 2
Al-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... 3 0
Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... ... ... 34 0
Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... 55 8
Ditto (English) Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-4 @ 1/4/ ... 15 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 10
*Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... 11 14
Catalogue of Arabic Books and Manuscripts 1-2 ... ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... 3 0
Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... 5 10
Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- ... 31 8

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | Rs | |
|---|---|---|
| Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/8/ each ... | 21 | 0 |
| Fihrist-i-Ṭūsī, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... | 4 | 0 |
| Futūḥ-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Ditto of Āzādī, (Text) Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... | 7 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Iṣābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... | 51 | 0 |
| Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... | 35 | 0 |
| Maghāzi of Wāqidi, (Text) Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... | 9 | 6 |
| Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... | 15 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1-10 @ /10/ each ... | 11 | 14 |
| Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Nukhbatu-l-Fikr, Fasc. 1 ... | 0 | 10 |
| Niẓāmī's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... | 1 | 8 |
| Riyāẓu-s-Salāṭīn Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Ditto Ditto (English) Fasc. 1-5 @ 1/ ... | 5 | 0 |
| Tabaqāt-i-Nāṣirī, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Ditto (English) Fasc. 1-14 @ 1/ each ... | 14 | 0 |
| Ditto Index ... | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... | 4 | 6 |
| Tārīkh-i-Fīrūshāhi, of Shams-i-Siraj Afif, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... | 3 | 0 |
| Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... | 1 | 0 |
| Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Ẓafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vols. XIX and XX @ 10/ each ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1/8 per No. to members and Rs. 2/ per No. to Non members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... 4 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III with 8 colored plates, 4to. @ 6/ each ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... 10 0
11. Ditto Grammar ,, ... 8 0
12. Kacmīracabdāmṛta, parts I and II @ 1/8/ ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein. Ph.D., Jl. Extra No. 2 of 1899 ... 4 0
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāni and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... 34 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

***N. B.***—**All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.** 1-4-'08.

**BOOKS ARE SUPPLIED BY V.-P.-P.**

BIBLIOTHECA INDICA:
A
Collection of Oriental Works
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NO. 1189.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA
## OF THE WHITE YAJURVEDA,
WITH THE
## COMMENTARY OF SĀYAṆĀCĀRYA.




EDITED BY
ĀCĀRYA SATYAVRATA SĀMAS'RAMI.
*Lecturer of Sanskrit in the University of Calcutta.*

VOL. VI, FASCICULUS II.

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1908.

( अथ चतुर्थेऽध्याये प्रथमं ब्राह्मणम् . )

अथैन मतः खनत्येव* । एतद्वा ऽएनं देवा अनुविद्याखनंस्तथैवैन मय मेतदनुविद्य खनति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत् खनामीति सवितृप्रसूत एवैन मेतदेताभिर्द्देवताभिः पृथिव्या उपस्थादग्निं पशव्य मग्निवत् खनति ॥ १ ॥

ज्योतिष्मन्तं त्वाग्ने सुप्रतीक मिति । ज्योतिष्मान्वा ऽअग्निः † सुप्रतीको ऽजस्रेण भानुना दीद्यत मित्यजस्रेणार्चिषा दीप्यमान मित्येतच्छिवं प्रजाभ्यो ऽहिꣳसन्तं पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत् खनाम इति शिवं प्रजाभ्यो ऽहिꣳसन्तं पृथिव्या उपस्थादग्निं पशव्य मग्निवत् खनाम इत्येतत् ‡ ॥ २ ॥

* 'खनत्येव'—इति ग, घ ।

† 'ऽय मग्निः'—इति ग, घ ।

‡ 'इत्येतत्'—इति ग, घ ।

द्वाभ्यां खनति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् खनत्यथो द्वयॅं ह्येवैतद्रूपं मृच्चापश्च ॥ ३ ॥

स वै खनामि खनाम इति खनति। खनामीति वा ऽएतं प्रजापतिरखनत् खनाम इति देवास्तस्मात् खनामि खनाम इति * ॥ ४ ॥

स वा ऽअभ्र्या खनन्। व्वाचा खनामि खनाम इत्याह व्वाग्वा ऽअभ्रिरारम्भायैवेयं व्वैणवी क्रियते व्वाचा वा ऽएत मभ्र्या देवा अखनंस्तथैवैन मय मेतद्वाचैवाभ्र्या खनति † ॥ ५ ॥

अथैनं कृष्णाजिने सम्भरति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैन मेतत् सम्भरति लोमतश्छन्दाॅंसि वै लोमानि छन्दः स्वेवैन मेतत् सम्भरति तत्तूष्णी मुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्व्वै यज्ञो ऽनिरुक्तो वै प्रजापतिस्तस्मात्तस्योपरि बन्धुः प्राचीनग्रीवे तद्धि देवत्रा ‡ ॥ ६ ॥

---

* 'इति' इति ग, घ।

† 'खनति'—इति क।

‡ 'देवत्रा'—इति ग, घ।

अथैनं पुष्करपर्णे सम्भरति। योनिर्व्वै पुष्करपर्णं योनौ तद् रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत् प्रजनिष्णु भवति तन्मन्त्रेणोपस्तृणाति व्वाग्वै मन्त्रो व्वाक् पुष्करपर्णम् ॥ ७ ॥

अपां पृष्ठमसि योनिरग्नेरिति। अपाᳮ ह्येतत् पृष्ठं योनिर्ह्येतदग्नेः समुद्रमभितः पिन्वमानमिति समुद्रो ह्येतदभितः पिन्वते व्वर्द्धमानो महाᳫ२॥ऽआ च पुष्करऽइति व्वर्द्धमानो महीयस्व पुष्करऽइत्येतद्दिवो मात्रया व्वरिम्णा प्रथस्वेत्यनुविमार्ष्टयसौ वाऽआदित्य एषोऽग्निर्नो हैतमन्यो दिवो व्वरिमा यन्तु मर्हति द्यौर्भूत्वेनं यच्छेत्येवैतदाह ॥ ८ ॥

तदुत्तरं कृष्णाजिनादुपस्तृणाति। यज्ञो वै कृष्णाजिनमियं वै कृष्णाजिनमियमु वै यज्ञोऽस्याᳮ हि यज्ञस्तायते द्यौः पुष्करपर्णं* मापो वै द्यौरापः पुष्करपर्णमुत्तरा वाऽअसावस्यै ॥ ९ ॥

अथैनेऽअभिमृशति। सञ्ज्ञामेवाभ्यामेतत्

§ 'द्यौ पुष्कर०'—इति क, ङ; 'द्यौप्पुष्कर०'—इति ग।

करोति शर्म च स्थो वर्म च स्थ इति शर्म च ह्येते वर्म चाच्छिद्रे बहुले ऽउभे ऽइत्यच्छिद्रे ह्येते बहुले ऽउभे व्यचस्वती संव्वसाथा मित्यवकाशवती संव्वसाथा मित्येतद् भृत मग्निं पुरीष्य मिति बिभृत मग्निं पशव्य मित्येतत् * ॥ १० ॥

संव्वसाथाᳫं स्वर्व्विदा। समीची ऽउरसात्मनेति संव्वसाथा मेनᳫं स्वर्व्विदा समीची ऽउरसा चात्मना चेत्येतदग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्त मजस्र मिदित्यसौ वा ऽआदित्य एषोऽग्निः स एष ज्योतिष्मानजस्रस्त मेते ऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्त मजस्र मिदिति ॥ ११ ॥

द्वाभ्या मभिमृशति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवाभ्या मेतत् सञ्ज्ञां करोत्यथो द्वयᳫं ह्येवैतद्रूपं कृष्णाजिनं च पुष्करपर्णं च ॥ १२ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [४. १.] ॥

---

* 'मित्येतम्' – इति ग । 'मित्येतत्' – इति घ ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ खननविधिं सुवन् मन्त्रं विधत्ते— "अथैन मतः खनतीति *। 'अतः' चतुःस्रक्तेः कूपात् 'अनुविद्य' लब्ध्वा । देवस्य त्वेति मन्त्रस्य तात्पर्य माह— "सवितुः प्रसूता इति †" ॥ १ ॥

खनने द्वितीयमन्त्र माह— "ज्योतिष्मन्तं त्वाग्न इति ‡। अयमर्थः । हे 'अग्ने !' 'ज्योतिष्मन्तं' ज्योतिर्युक्तं 'सुप्रतीकं' सुमुखावयवम्, 'अजस्रेण' अनवच्छिन्नेन 'भानुना' तेजसा 'दीद्यतं', व्यत्ययेन शतृप्रत्ययः, दीप्यमानम्; 'शिवं' शान्तम्, 'प्रजाभ्यः' प्रजार्थं शिव मिति सम्बन्धः; 'अहिंसन्तं' प्राणिनां हिंसा मकुर्वाणम् । पृथिव्यादि व्याख्यातम् । तादृश मग्निं भूप्रदेशादग्निवतः खनामः अध्वर्यव इति ॥ २ ॥

खननमन्त्रगतां द्वित्वसङ्ख्यां यजमानरूपाभ्यात्मना प्रशंसति— "द्वाभ्यां खनति द्विपादिति । प्रकारान्तरेण स्तौति— "अथो द्वय मिति । मृत्तिका उदकानि चेति द्वय मित्यर्थः ॥ ३ ॥

* का० श्रौ० सू० १६. २. २२ ।

† "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । पृथिव्याः सधस्थादग्निम्पुरीष्य मङ्गिरस्वत् खनामि" वा० सं० ११. २८. १ ।

‡ "ज्योतिष्मन्तं त्वाग्ने सुप्रतीक मजस्रेण भानुना दीद्यतम् । शिवं प्रजाभ्यो हिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्य मङ्गिरस्वत् खनामः"—इति वा० सं० ११. २८. २ ।

यत् "देवस्य त्वा"–इति पूर्वमन्त्रः, तत्र खनामीत्येकवचनम् *, ज्योतिषमन्त मिति द्वितीयमन्त्रे खनाम इति बहुवचनम् †, तस्योभयस्य निर्वाह माह– "स वै खनामीति। प्रजापतिविवक्षया एकवचनम्, देवविवक्षया बहुवचनम्। ते च अग्निकर्माण्यत्यतिष्ठन् ॥ ४ ॥

प्रागुक्तं खननसाधनं विदधत् तस्य वाग्रूपता माह– "स वा अभ्रयाखनमिति। यदि वागभिस्तर्हि वाचैव खननं युक्तम्, किमभ्रिकरणेनेति, तत्राह– "आरम्भायेति। 'आरम्भाय' आलम्भनायैव इयं वेणुमयी अभ्रिः ‡ क्रियते ॥ ५ ॥

अत्र कात्यायनः– "कृष्णाजिन मास्तीर्योत्तरतस्तस्मिन् पुष्करपर्ण मपाम्पृष्ठ मिति, विमार्ष्टि नद्दिव इति, आलभत उभे शर्म च स्थ इति"–इति §। अय मर्थः। उत्तरतो देशे कृष्णाजिनं प्राग्ग्रीव मुत्तरलोमम् तूष्णी मास्तीर्य, तस्मिन् कृष्णाजिने अपाम्पृष्ठमितिमन्त्रेण ‖ पुष्करपर्ण मास्तृणाति। एतत् पुष्करपर्णं दिवो मात्रयेति ¶ चतुर्थपादेन विमार्ष्टि। ततः कृष्णाजिन पुष्करपर्णे "शर्म च स्थो वर्म च स्थः"–इति ** मन्त्राभ्या मालभेतेति।

---

*, † २०५ पृ० द्वितीयतृतीयटीप्पन्युद्धृतयोर्मन्त्रयोरन्त्ये पदे द्रष्टव्ये।

‡ वैणवी, कल्माषी, सुषिरा, प्रादेशमात्री, अन्यतःक्ष्णुत, उभयतःक्ष्णुत, तीक्ष्णा, औदुम्बरी, वैकङ्कती, अरत्निमात्री अभ्रिर्भवति। इहैव काण्डे पुरस्तात् (३. १. ३०.) द्रष्टव्यम्।

§ का० श्रौ० सू० १६. २. २३, २४, २५।

‖ वा० सं० ११. २६. १।

¶ वा० सं० ११. २६. २।

** वा० सं० ११. ३०, ३१।

तदिदं ब्राह्मणशेषेण विधीयते— "अथैनं कृष्णाजिन इति । यद्यपि कृष्णाजिनस्योपरि पुष्करपर्णे मृत्पिण्डसम्भरणम्, तथापि कृष्णाजिनसम्बन्धोऽप्यस्तीति मत्वा तस्मिन् सम्भरणोक्तिः । "लोमत इति । लोमवत्प्रदेशे ।

कृष्णाजिनास्तरणं समन्त्रक मित्याह— "तत् तूष्णी मिति । तूष्णी मुपस्तरण मुपपादयति— "यज्ञ इति । यज्ञस्य कृष्णाजिनत्वम्; "कृष्णो रूपं कृत्वोदक्रामत्"–इत्याम्नानात् * । यज्ञस्य प्रजापतित्वम्; प्रजापतिदेवत्यत्वात् । प्रजापतिर्हि सकलस्थूलसूक्ष्मप्रपञ्चात्मत्वेनाय मीदृगिति निर्वक्तु मनर्हत्वात् अनिरुक्तः । तस्मात् तद्रूपस्य कृष्णाजिनस्यापि आस्तरणम् 'अनिरुक्तम्', अमन्त्रक मित्यर्थः । तदास्तरणस्य प्रदेशं विधत्ते— "उत्तरत इति । आस्तरणस्तावकं ब्राह्मण मुत्तरत्र वक्ष्यत इत्याह— "तस्योपरि बन्धुरिति । "प्राचीनग्रीवेति । ग्रीवाप्रदेशः प्राचीनो यथा भवति तथा आस्तरणीयम् । 'देवत्रा' देवेषु भवति "देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्"–इति † देवशब्दात् 'त्रा'-प्रत्ययः ॥ ६ ॥

कृष्णाजिनस्योपरि विधातव्ये पुष्करपर्णे मृत्पिण्डसम्भरणं दर्शयति— "अथैन मिति । "योनिरिति । यतोऽग्निः पुष्करपर्णाद् जातः, तस्मात् तत् योनिरूपम्, अग्निश्च रेतोरूपः; इदानी मुत्पद्यमानत्वात् 'प्रजनिष्णु' प्रजननशीलम् । "वाक् पुष्करपर्ण मिति । अग्निवाचोरन्यत्र तादात्म्यश्रवणात् ‡—"अग्नि-

* ग्र० ब्रा० १. १. ४. १ (१ भा० ७१ पृ० ) ।

† पा० सू० ५. ४. ५६ ।

‡ तै० आर० २. ४. २ ।

वाग् भूत्वा मुखं प्राविशत्''–इति। पुष्करपर्णादग्निजननात् कार्यकारणयोरभेदोपचारेण वागेव पुष्करपर्ण मित्युक्तम् ॥ ७ ॥

तदास्तरणे मन्त्रं विधत्ते — ''अपाम्पृष्ठ मिति *। हे पुष्कर-पर्ण! 'अपाम्पृष्ठम्' उपरिस्थानम् 'असि', 'अग्नेः योनिः' च 'असि', 'समुद्रः' समुन्दनशील मुदकम् अभितः 'पिन्वमानं' वर्द्धमानं भवसि, किञ्च 'पुष्करे' 'वर्द्धमानः' जात एव 'आ' सर्वतः 'महान्' आस्तरणात् महत्त्वम्; अत एव 'आ महान्'–इति पद-द्वयस्य 'महीयस्व'–इति व्याख्यानम्।

अस्मिमपादेन विसर्जनं विधत्ते— ''दिव इति †। 'दिवः' द्युलोकस्य मात्रया परिमाणेन 'वरिम्णा' अतिशयेनोरुत्वा त्वं 'प्रथस्व' विस्तीर्णो भव। पादं व्याचष्टे— ''असौ वा आदित्य इति। यतः 'एषः अग्निः' 'आदित्यः', अतो लोकत्रय मस्य 'वरिमा' उरुत्वम्, 'एतम्' आदित्यात्मकं 'यन्तुं' परिच्छेत्तुं नार्हतीति। अतो 'द्यौः' द्युलोकात्मकं 'भूत्वा', 'एनं' सृत्पिण्डं 'यच्छ' परिच्छिन्नं कुर्विति पुष्करपर्णप्रार्थना ॥ ८ ॥

तदास्तरणस्य प्रदेश माह— ''तदुत्तरं कृष्णाजिनादिति। 'तत्' पुष्करपर्णं 'कृष्णाजिनात्' 'उत्तरं' तस्योपरि 'आस्तृणाति' एकस्योपरि अन्यस्यास्तरणं भूलोकद्युलोकात्मना प्रशंसति— ''इयं वा इति। कृष्णाजिनपुष्करपर्णयोः भूलोकद्युलोकात्म-त्वेन तयोर्यथा उत्तराधरभावः, एवं लोकयोरुत्तराधरभावो दृश्यत इत्याह— ''उत्तरो वा असावस्या इति। 'असौ' द्यौः। 'अस्याः' भूम्याः ॥ ९ ॥

* वा० सं० ११. २९. १।

† मन्त्रान्तर मिदम्; कर्मान्तरे विनियुक्तत्वात् (वा० सं० ११. २९. २.)।

अथैतयोः कृष्णाजिनपुष्करपर्णयोः युगपदभिमर्शनं विधत्ते— "अथैनेऽभिमृशतीति *। शक्यत्वादुभयोर्युगपदालम्भनम्। "सञ्ज्ञामिति। समानसञ्ज्ञम् 'एतत्' एतेन अभिमर्शनेन 'करोति' कृतवान् भवति। तत्र मन्त्रद्वयं विधत्ते— "शर्म च स्थ इति †। कृष्णाजिन पुष्करपर्णे सम्बोध्ये। 'शर्म' शरणं 'च' 'स्थः', युवयोरुपरि निधीयमानस्य मृत्पिण्डस्य 'शरणं' भवथः, 'वर्म' कवचं 'च' अस्य 'स्थः' भवथः। 'अच्छिद्रे' छिद्ररहिते 'बहुले' महाप्राणे 'उभे' युवां 'व्यचस्वती' आकाशवन्तौ भूत्वा 'संवसाथाम्' आच्छादयतां मृदम्। वसेराच्छादनार्थस्य ‡ रूपम्। 'पुरीष्यं पशव्यम् अग्निम्' 'बिभृतम्'। भृञो लोटि बहुलवचनाद् द्विर्वचनाभावः। एतयोः शरणत्वं कवचत्वम्। मृत्पिण्ड मुद्दिश्य व्याचष्टे— "शर्म च ह्यस्यै ते वर्म चेति ॥ १० ॥

"संवसाथा मिति §। 'समीची' समञ्चने, युवां कृष्णाजिनपुष्करपर्णे 'उरसा' हृदयेन विज्ञानेन, 'आत्मना' अवयवसंस्थानेन च 'संवसाथाम्' सञ्छादयताम् 'एनं' मृद्रूप मग्निम्। किमर्थम्? 'स्वर्विदा' स्वर्गलाभहेतोः 'अजस्रम्' अनुपक्षीणम् 'इत्' एव 'ज्योतिष्मन्तम्' तेजस्विनम् 'अग्निम्', 'अन्तर्' युवयोर्मध्यप्रदेशे 'भरिष्यन्ती' धारयमाणे भवेता मिति शेषः ॥

द्वितीयमन्त्रस्योत्तरार्द्धं ‖ व्याचष्टे— "असौ वा आदित्य इति ॥ ११ ॥

---

* "अथैन मभिमृशतीति"—इति सायणभाष्यधृतपाठः।

† वा० सं० ११. ३०, ३१।

‡ अष्टा० अ० १३ धा०।

§ वा० सं० ११. ३१ क। ‖ वा० सं० ११. ३२ ख।

अभिमर्शनमन्त्रगतां द्वित्वसङ्ख्यां यजमानाग्निरूपेण प्रदर्शयति— "द्वाभ्या मिति, व्याख्यातम् * ॥ १२ ॥ २ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

( अथ द्वितीयं ब्राह्मणम् . )

अथ मृत्पिण्ड मभिमृशति । पुरीष्यो ऽसीति पशव्यो ऽसीत्येतद्विश्वम्भरा इत्येष हीद॑ सर्व्वं बिभर्त्यथर्व्वा त्वा प्रथमो निरमन्थदग्न ऽइति प्राणो वा ऽअथर्वा प्राणो वा ऽएत मग्रे निरमन्थत्तद्यो-ऽसावग्रे ऽग्निरसृज्यत सोऽसीति तदाह त मेवैन मेतत् करोति † ॥ १ ॥

अथैनं परिगृह्णाति ‡ । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतस्त्वा मग्ने पुष्कराद्ध्य-

---

* १६६ पृ० ३ पं० द्रष्टव्यमिति ॥

† 'करोति'—इति ख । 'करोति'—इति क ।

‡ 'परिगृह्णाति'—इति क, ङ ।

थर्व्वा निरमन्थतेत्यापो वै पुष्करं प्राणो ऽथर्व्वा प्राणो वा ऽएत मद्भ्यो ऽग्रे निरमन्थन् मूर्ध्नो विश्वस्य वाघत इत्यस्य सर्व्वस्य मूर्ध्न इत्येतत् * ॥ २ ॥

तमु त्वा दध्यङ्ङृषिः । पुत्र ईधे ऽअथर्व्वण इति वाग्वै दध्यङ्ङाथर्व्वणः स एनं तत ऐन्द्ध वृत्रहणं पुरन्दर मिति पाप्मा वै वृत्रः पाप्महनं पुरन्दर मित्येतत् † ॥ ३ ॥

तमु त्वा पाथ्यो वृषा । समीधे दस्युहन्तम मिति मनो वै पाथ्यो वृषा स एनं तत ऐन्द्ध धनञ्जयꣳ रणेरण ऽइति यथैव यजुस्तथा बन्धुः ॥ ४ ॥

गायत्रीभिः । प्राणो गायत्री प्राण मेवास्मिन्नेतद्दधाति तिसृभिस्त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासां नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, घ ।

† 'मित्येतत्'—इति ग, घ ।

अथैते त्रिष्टुभाऽउत्तरे भवतः। आत्मा वै त्रिष्टुबात्मान मेवास्यैताभ्याꣳ संस्करोति सीद होतः स्व ऽउ लोके चिकित्वानित्यग्निर्वै होता तस्यैष स्वो लोको यत् कृष्णाजिनं चिकित्वानिति विद्वानित्येतत् सादया यज्ञꣳ सुकृतस्य योनाविति कृष्णाजिनं वै सुकृतस्य योनिर्देवावीर्देवान् हविषा यजासीति देवः सन् देवानवन् हविषा यजासीत्येतदग्ने बृहद्यजमाने व्वयो धा इति यजमानायाशिष माशास्ते ॥ ६ ॥

नि होता होतृषदने व्विदान इति। अग्निर्वै होता कृष्णाजिनꣳ होतृषदनं व्विदान इति व्विद्वानित्येतत्त्वेषो दीदिवाꣳ२॥ऽअसदत् सुदक्ष इति त्वेषो दीप्यमानोऽसदत् सुदक्ष इत्येतद‑दब्धव्रतप्रमतिर्व्वसिष्ठ इत्यदब्धव्रत प्रमतिर्ह्येष व्वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निरिति सर्व्वं वै सहस्रꣳ सर्व्वम्भरः शुचिजिह्वोऽग्निरित्येतद् द्वाभ्या माग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः ॥ ७ ॥

अथैषा बृहत्युत्तमा भवति। बृहतीं वा ऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः

सिच्यते तादृग् जायते तद्यदेता मत्र बृहतीं करोति तस्मादेष सञ्चितो बृहती मभिसम्पद्यते ॥ ८ ॥

सᳪसीदस्व महाᳪ२॥ ऽअसीति। इद मेवै-तद् रेतः सिक्तᳪ सᳪसादयति तस्माद्योनौ रेतः सिक्तᳪ सᳪसीदति शोचस्व देववीतम इति दीप्यस्व देववीतम इत्येतद्वि धूम मग्ने ऽअरुषं मियेध्य सृज प्रशस्त दर्शत मिति यदा वा ऽएष समिध्यते ऽथैष धूम मरुषं विसृजते दर्शत मिति ददृश ऽइव ह्येषः * ॥ ९ ॥

ताः षट् सम्पद्यन्ते। षड्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति यद्वेव संव्वत्सर मभिसम्पद्यते तद् बृहती मभिसम्पद्यते बृहती हि संव्वत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत् षट्-त्रिᳪशत् षट्त्रिᳪशदक्षरा बृहती तं दक्षिणत उदङ्ङ माहरति दक्षिणतो वा † ऽउदग्योनौ रेतः

* 'ह्येषः'—इति ग, 'ह्येषः'—इति घ।

† 'वा'—इति क।

सिच्यत ऽएषो ऽग्नेस्तर्हि योनिरविच्छेद माहरति रेतसोऽविच्छेदाय ॥ १० ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. २.] ॥

कात्यायनः— "पिण्डं पुरीष्योऽसीति, पाणिभ्यां परिगृह्णा-त्येनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वा मग्न इति षड्भिः सर्वां सकृद् हृत्वा, पुष्करपर्णे निदधाति"—इति *। "त्वा मग्ने"—इत्यादिभिः षड्भिः ऋग्भिः † यावदपेक्षितां मृदं 'सर्वां' 'सकृत्' एकवारमेव गृहीत्वा 'पुष्करपर्णे' निदध्यादिति। तदिदं द्वितीयम्। प्रथमतो 'मृत्पिण्ड' "पुरीष्योऽसि"—इति मन्त्रेण ‡ आलभते, 'अथ' दक्षिणोत्तराभ्यां 'पाणिभ्याम्' 'एनं' 'परिगृह्णा-ति'। तत्र 'दक्षिणः' हस्तः 'साभ्रिः' अभ्रिसहितः, वामस्तु केवलः। अथ तद् ब्राह्मणेन विधीयते— "अथ मृत्पिण्ड मिति।

मृत्पिण्डाभिमर्शनयजुषोऽय मर्थः।— हे 'अग्ने!' त्वम् 'पुरीष्यः' पशुहितः 'असि', 'विश्वभराः' भूलोकस्य सर्वस्य धारकश्च; चीयमानाग्नेर्विराड्रूपत्वात्। 'अथर्वा' अरणवान्, प्राणः 'प्रथमः' पूर्वः त्वां 'निरमन्थत्' निर्मथितवान्। पुरीष्यो-ऽसीति खिद्ववत्कथनेन यदुक्तम्, तदुपपादयति—"पशव्योऽसीति। "प्राणो वा अथर्वा"—इत्यर्थवादोऽस्य सिद्धवदर्थकथनम्। "तद्

---

* का० श्रौ० सू० १६. २. २६, २७ ; ३. १।

† वा० सं० ११. ३२. २—७।

‡ वा० सं० ११. ३२. १।

योऽसौ अग्रेऽग्निरसृज्यत, सोऽसीतीति। पूर्वं योऽग्निः सृष्टः, स मितं पुरीष्योऽसीत्यनेनोक्तवान् भवतीत्यर्थः ॥ १ ॥

"अथैन मिति। 'परिगृह्णाति' मृत्पिण्डं धारयन् प्राङ्-मुखस्याध्वर्योः 'दक्षिणतः' प्रदेशे वर्त्तमानः, दक्षिणो हस्तः साभ्रिः, उत्तरतः केवलः, ताभ्यां पाणिभ्यां धारयेत्।

ग्रहणमन्त्रान् विधत्ते— "त्वा मग्ने पुष्करादधि"-इत्यारभ्य *, "ताः षट् सम्पद्यन्ते"-इत्यन्तः † प्राक्तनेन। तत्राद्यास्तिस्रो गायत्र्यः, त्रिष्टुभौ द्वे, षष्ठी बृहती।

"त्वा मग्ने"-इत्यस्याय मर्थः। हे 'अग्ने!' 'त्वाम्' 'अथर्वा' अरणशीलः प्राणः, 'पुष्करात्' उदकात्, 'अधि'-शब्दः पञ्च-म्यर्थानुवादी, 'निरमन्थत'। अग्निं विशिनष्टि— "विश्वस्य वाघत इतीति। 'मूर्द्ध्नः' मूर्द्धानम्। कर्म्मणि षष्ठी ॥

पुष्करायर्वपदयोरर्थ माह—"आपो वै पुष्करं प्राणोऽथर्वेति ॥ २ ॥

द्वितीया मृचं विधत्ते— "त मु त्वा दध्यङ्ङिति ‡। 'अथ-र्वणः पुत्रः' 'दध्यङ्' नाम ऋषिः 'वृत्रहणं' वृत्रस्य पाप्मनः हन्तारम्, 'पुरन्दरं' असुरपुराणां दारयितारं 'त्वाम्' एव 'ईधे' दीपयति। "ञि इन्धी दीप्तौ" §, लिटि "इन्धिभवति-भ्याञ्च"-इति ‖ कित्वान्नलोपः। "दध्यङ्ङाथर्वण इति। मधु-प्रवचनात् वाक्त्वेन श्रुतिः ॥ ३ ॥

---

* वा० सं० ११. ३२. २।

† २१३ पृ० १० पंक्तिर्द्रष्टव्या।

‡ वा० सं० ११. ३३।

§ रु० आ० १० धा०।

‖ पा० सू० १. २. ६।

तृतीया मृचं विधत्ते— "त मु त्वा पाथ्य इति *। पाथो-ऽन्नम्, तत्कार्यत्वात् तत्र भवः 'पाथ्यः'। "पाथोनदीभ्यां ड्यण्" †। बलम्। सर्वेन्द्रियानुग्राहकः। 'पाथ्यो वृषा'–इति मन उच्यते; "मनो वै पाथ्यो वृषा"–इति श्रुतौ ‡ व्याख्यानात्। 'दस्युहन्तमम्' शत्रूणा मतिशयेन हन्तारम्, 'रणे' सङ्ग्रामे 'धनञ्जयं' धनस्य जेतारं 'त्वा' त्वां 'समीधे'। तृतीयपादो विस्पष्टार्थत्वात् व्याख्यातुं नार्हतीत्याह— "यथैव यजुः, तथैव बन्धुरिति ॥ ४ ॥

उक्तानां तिसृणा मृचां गायत्रीच्छन्दस्त्व मनूद्य प्रशंसति— "गायत्रीभिः प्राण इति। गायत्र्याः प्राणरूपत्व मुक्तम्। मन्त्रगतत्रित्वसङ्ख्यां प्राणोदानव्यानात्मना प्रशंसति— "तिसृभिस्त्रयो वै प्राणा इति। एकैकस्या गायत्र्या ऋचः त्रयस्त्रयः पादाः। तासां नव प्राणान् सम्भूय नवप्राणात्मना प्रशंसति— "तासां नव पदानि, नव वै प्राणा इति। एतेन मन्त्रत्रयेण मृत्पिण्डस्य परिग्रहे तस्यां मृदि प्राणानेव संहितवान् भवतीत्यर्थः ॥ ५ ॥

धारणमन्त्रेषु त्रिष्टुभावित्युक्तम्, तौ विधातुं तद्गतं छन्दः प्रशंसति— "अथैतत्त्रिष्टुभा ऽउत्तरे भवत इति। त्रिष्टुभ आत्मरूपत्वं प्रागुक्तम्, ताभ्यां मन्त्राभ्यां धारणेन मृत्पिण्डस्यात्मानं स्वरूप मेव संस्कृतवान् भवति ॥

---

* वा० सं ११. ३४।

† पा० सू० ४. ४. ११।

‡ इहैव २११ पृ० ६ पं० द्रष्टव्यम्।

त्रिष्टुभौ विधत्ते— "सीद होतरिति *। हे 'होतः' देवानां माह्वातः! मृद्रूपाग्ने! 'स्वे' स्वकीये कृष्णाजिने 'सीद' निषीद। 'चिकित्वान्' विद्वान्, अस्मदीयं कर्म जानन्, तथा 'सुकृतस्य' सुष्टु क्रियमाणस्य कर्मणो 'योनौ' स्थाने 'यज्ञं' 'सादय'। कृष्णाजिने विस्तीर्यमाणे व्रीह्या मवघातः पेषणं सोमनिधानादिकञ्च भवतीति 'देवावीः'। "अवितृस्तृतन्त्रिभ्य ईः" †। देवान् त्वं सपर्यन् 'हविषा' 'अवन्' 'यजासि' यजतेः पञ्चमे लकारे रूपम्। हे 'अग्ने!' 'यजमाने' 'बृहत्' प्रभूतं 'वयः' अन्नं 'धाः' देहि ॥ ६ ॥

"निहोतेति ‡। मन्त्रं प्रतिपाद मनूद्य व्याचष्टे— "अग्निर्वै होतेति। निहोतेति 'नि'-इत्युपसर्गः 'असदद्'-इति क्रियया सम्बध्यते, निषीदति। 'होता' आह्वाता योऽग्निः, 'होतृ-षदने' अग्नेः सदने कृष्णाजिने 'विदानः' कर्म जानन्, 'त्वेषः' "त्विष दीप्तौ" §, दीप्यमानः, 'दीदिवान्', 'सुदक्षः' सुबलः, साधु क्षिप्रकारी वा 'अदब्धव्रतप्रमतिः' अनुपहतकर्मविषय-प्रकृष्टमतिः, 'वसिष्ठः' वसुमत्तरः, 'सहस्रम्भरः' सर्वस्य भर्त्ता, यथा "हृग्रहोर्भः" ‖ सहस्रधा विक्रियमाणः। तथा चैतातान्रेयक (?) ब्राह्मणम्— "एष ह वा अस्य सहस्रं भरता यदेन मेकं सन्तं बहुधा विहरन्ति"-इति।

---

* वा० सं० ११. ३५।

† उ० ३ पा० १५८ सू०।

‡ वा० सं० ११. ३५।

§ भ्वा० उ० १००१ धा०।

‖ पा० ८. २. ३२ सू० १ वा०।

अनयोर्ऋचोर्द्वित्वसङ्ख्याऽऽग्नेयत्रिष्टुप्प्रस्तावकं ब्राह्मण मति-दिशति— "तस्योक्तो बन्धुरिति। "आ त्वा जिघर्मीत्येताभ्यां व्यतिषक्ताभ्या माहुतिद्वयं कार्य मित्यत्र प्रकरणे "द्विपाद् यजमान इत्यादिना * ॥ ७ ॥

षष्ठी मृचं विधातुं तद्गतं बृहतीच्छन्दः प्रशंसति— "अथैषा बृहतीति। 'एषा' वक्ष्यमाणा। "बृहतीं वा एष इति। 'सञ्चितः अग्निः बृहतीम् अभिसम्पद्यते' सम्पत्त्यक्षरसङ्ख्याको भवति; अथाप्युत्तरत्र बृहतीसम्पत्तिराम्नास्यते †। सामान्ये-नायं सम्पत्तिप्रकारः;— संवत्सररूपोऽग्निरिति प्रागुक्तम् *, तत्र संवत्सरे द्वादश पौर्णमास्यः, द्वादश कृष्णाष्टम्यः, द्वा-दशामावास्याः, ताः षट्त्रिंशत् संवत्सरे धार्यमाणेऽग्नौ सम्प-द्यन्ते, बृहत्यपि षट्त्रिंशदक्षरेति तत्साम्यम्।

एवन्तर्हि अग्निचयनकर्मान्ते सम्पत्तिर्वक्तव्येति चेत्, तत्राह— "यादृग्वै योनाविति। 'योनौ यादृग् रेतः सिच्यते', 'तादृग्' एवोभरं 'जायते'। अत इदानीं वीजभूतमृद्रूपाग्नेः बृहत्या धारणे बृहत्यात्मकत्व मेव तस्य सम्पादितवान् भवति ॥ ८ ॥

ता मृचं विधत्ते— "संसीदस्व महानिति। हे 'अग्ने!' मृद्रूप! 'संसीदस्व' सम्यग् वीजात्मनावतिष्ठस्व, यतो 'महान्' त्वम् 'असि'। 'देववीतमः' अतिशयेन हविषा देवानां तर्प-यितृतमः, त्वं 'शोचस्व' दीप्यस्व। हे 'मियेध्य' मेधो यज्ञ-

---

* पुरस्ताद् (३ पृ० १ ब्रा० १६—२१ क०) द्रष्टव्यम्।

† अनुपदमेव दशमकण्डिकायां (२१३, २१६ पृ०) द्रष्टव्यम्।

‡ वा० सं० ११. ३७।

स्तादर्हतीति हे 'प्रशस्त' प्रकर्षेण स्तुत ! अग्ने ! 'दर्शतम्' दर्शनीयम्, 'अरुषम्' आरोचमानं धूमं 'विसृज' ॥

मन्त्रं व्याचष्टे— "इद मेवैतदिति। उत्पत्स्यमानाग्ने रेतोरूपत्वात् मृत्पिण्डस्य बाहुभ्यां धारणं नाम; योनौ सिक्तस्य रेतसः संसादन मित्यर्थः। 'धूमं विसृज'–इति यदुक्तम्, तदुपपादयति— "यदा वा एष समिध्यत इति ॥ ९ ॥

परिग्रहणे विनियुक्तानां मन्त्राणां सङ्ख्यां सम्भूय संवत्सरात्मनात्मना प्रशंसति— "ताः षट् सम्पद्यन्त इति। प्रकारान्तरेण स्तोतु मनुवदति— "यद्वेव संवत्सर मिति। संवत्सरे तावद् द्वादश पौर्णमास्यः, द्वादशाष्टकाः, द्वादशामावास्याः; षट्त्रिंशत्सङ्ख्या सम्पद्यते, बृहत्या अपि षट्त्रिंशदक्षरत्वात् संवत्सरसञ्चितोऽग्निः बृहत्यात्मना सम्पद्यत इत्यर्थः।

विधत्ते— "तं दक्षिणत उदञ्च मिति। 'तं' मृत्पिण्डं 'दक्षिणतः' प्रदेशात् 'उदञ्चं' उदङ्मुखम् आहरेत्। तत् प्रशंसति— "दक्षिणतो वा इति। यतो लोके दक्षिणतः स्थितेन पुरुषेण, वामविभागे स्थितया स्त्रिया "योनौ रेतः सिच्यते'; 'एतर्हि' इदानीं मध्ये धार्यमाणस्याग्नेः एषः मृत्पिण्डो 'योनिः' 'अविच्छेदं' विच्छेदराहित्येन मृत्पिण्डाहरणं कर्त्तव्यम्; 'रेतसः' रेतोभूतस्याग्नेः 'अविच्छेदाय' इति ॥ १० ॥ २ [ ४. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

———

( अथ तृतीयं ब्राह्मणम् . )

अथ तत्राप उपनिनयति । यद्वा ऽअस्यै शतं यद्विलिष्ट मद्भिर्व्वै तत् सन्धीयते ऽद्भिरेवास्या ऽएतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ १ ॥

अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य इति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य इत्येतत्तासा मास्थानादुज्जिहता मोषधयः सुपिप्पला इत्यपां वा ऽआस्थानादुज्जिहत ऽओषधयः सुपिप्पलाः * ॥ २ ॥

अथैनां व्वायुना सन्दधाति । यद्वा ऽअस्यै क्षतं यद्विलिष्टं व्वायुना वै तत् सन्धीयते व्वायुनैवास्या एतत् क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥ ३ ॥

सन्ते व्वायुर्मातरिश्वा दधात्विति । अयं वै व्वायुर्मातरिश्वा योऽयं पवत ऽउत्तानाया हृदयं यद्विकस्त मित्युत्तानाया ह्यस्या एतद्धृदयं व्विकस्तं यो देवानां चरसि प्राणथेनेत्येष हि सर्व्वेषां देवानां चरति प्राणथेन कस्मै देव व्वषडस्तु तुभ्य

* 'सुपिप्पलाः'—इति ग, घ ।

मिति प्रजापतिर्व्वै कस्तस्मा ऽएवैतदिमां व्वषट्
करोति नो हैतावत्यन्याहुतिरस्ति यथैषा * ॥ ४ ॥

अथैनां दिग्भिः सन्दधाति । यद्वा ऽअस्यै
यतं यद्विलिष्टं दिग्भिर्व्वै तत् सन्धीयते दिग्भि-
रेवास्या एतत् यतं व्विलिष्टꣳ सन्तनोति सन्द-
धाति स इमां चेमां च दिशौ सन्दधाति तस्मा-
देते दिशौ सꣳहिते ऽअथेमां चेमां च तस्माद्वैवैते
सꣳहिते ऽइत्यग्रे ऽथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि
देवत्रानयानया वै भेषजं क्रियते ऽनयैवैना मेतद्
भिषज्यति † ॥ ५ ॥

अथ कृष्णाजिनं च पुष्करपर्णं च समुद्गृह्णाति ।
योनिर्व्वै पुष्करपर्णं योन्या तद् रेतः सिक्तꣳ समुद्-
गृह्णाति तस्माद्योन्या रेतः सिक्तꣳ समुद्गृह्यते
सुजातो ज्योतिषा सह शर्म्म व्वरूथ मासदत्
स्वरिति सुजातो ह्येष ज्योतिषा सह शर्म्म चैतद्वरूथं
च स्वरासीदति ‡ ॥ ६ ॥

---

* 'यथैषा' — इति ग, 'यथैषा' — इति घ ।

† 'भिषज्यति' — इति ख, ग, घ ।

‡ '०सीदति' — इति क, ख ।

अथैन मुपनह्यति। योनौ तद्रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते योक्त्रेण योक्त्रेण हि योग्यं युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः ॥ ७ ॥

तत्पर्य्यस्यति। व्वासो ऽग्ने व्विश्वरूपᳪ संव्ययस्व व्विभावसविति व्वरुण्या वै यज्ञे रज्जु-र्व्वरुण्य मेवैनदेतत् कृत्वा यथा व्वासः परिधापये-देवं परिधापयति * ॥ ८ ॥

अथैन मादायोत्तिष्ठति। असौ वा ऽआदित्य एषो ऽग्निरमुं तदादित्य मुत्थापयत्युदु तिष्ठ स्वध्व-रेत्यध्वरो वै यज्ञ उदु तिष्ठ सुयज्ञियेत्येतदवा नो देव्या धियेति या ते दैवी धीस्तया नो ऽवेत्ये-तद् दृशे च भासा बृहता सुशुक्वनिरिति दर्श-नाय च भासा बृहता सुशुक्वनिरित्येतदाग्ने याहि सुशस्तिभिरिति ये व्वोढारस्ते सुशस्तय आग्ने याहि व्वोढृभिरित्येतत् † ॥ ९ ॥

---

* 'परिधापयति'—इति ख।

† 'व्वोढृभिरित्येतत्'—इति ग, घ।

अथैन मित ऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वा ऽआदित्य एषो ऽग्निरमुं तदादित्य मित ऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्ध्वः प्राङ् धीयत ऽऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति यथैव यजुस्तथा बन्धुरूर्ध्वो वाजस्य सनितेत्यूर्ध्वो वा ऽएष तिष्ठन्वाज मन्नꣳ सनोति यदञ्जिभिर्व्वाघद्भिर्व्विह्वयामह ऽइति रश्मयो वा ऽएतस्याञ्जयो व्वाघतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येष इतो ऽथैन मुपावहरति त मुपावहृत्योपरि नाभि धारयति तस्योपरि बन्धुः ॥ १० ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [४. ३.] ॥

कात्यायनः— "अप खन्येऽपनयत्यपो देवीरिति, सन्त इति वा त मपक्षिपति"–इति * । उदकं निनयेत् । तद्विधत्ते— "अथ तत्राप उपनिनयतीति । 'अथ' अनन्तरं 'तत्र' 'आपः' 'निनयेत्' आसिञ्चेत् । तत् प्रशंसति— "यद्वा अस्यै क्षत मिति । 'अस्यै' षष्ठ्यर्थः । पृथिव्याः यत् 'क्षतं' खण्डितम्, 'यत्' च 'विलिष्टम्', "लिश अल्पी भावे" † अल्पं स्खलम्, 'तत्'

---

* का० श्रौ० सू० १६. ३. २, ३ ।

† दि० आ० ७३ धा० ।

सर्वं खातम् 'अद्भिः' 'सन्धीयते' जलसन्धाने हि विषमं खातं समं भवति। तस्मादापः कुण्डे निधेयाः ॥ १ ॥

मन्त्रं विधत्ते—"अपो देवीरिति *। अत्राग्निः सम्बोध्यते। 'प्रजाभ्यः' प्रजानाम् 'अयक्ष्माय' यक्ष्माव्याधिः तदभावाय, 'मधुमतीः' रसवतीः 'देवीः' द्योतमानाः 'अपः' 'उदसृजम्' आसिञ्चत। आसां भूमिगताना मपाम् 'आस्थानात्' उदकसंसृष्टभूदेशात् 'सुपिप्पलाः' पिप्पलं पक्वं फलम्, सुफलाः, 'ओषधयः' फलपाकान्ताः शस्यादयः 'उज्जिहत' उद्गच्छन्तु, रोहन्तु। "ओ हाङ् गतौ" †।

'अयक्ष्माय'-इति पदं भावत्वेन व्याचष्टे— "अयक्ष्मत्वायेति ॥ २ ॥

अत्र सूत्रम्— "सन्ते इति वा त मवक्षिपतीति ‡। "सन्ते-वायुर्मातरिश्वा"-इति मन्त्रेण § वायु मवक्षिपेत्, मन्त्रपाठेनावटे वायुं पूरयेत्। तदिदं विधत्ते— "अथैनां वायुना सन्दधातीति। 'एनां' खननभूमिम्। इदानी मुक्तः ( ? ) यद्वा अस्ये अत मिति। यथा लोके खतं श्वभ्रं निम्नस्थलं वायुना सन्धीयते। वायुसञ्चालितैः पर्णादि कण्टकादिकं पूर्यते, एव मत्रापीति मन्तव्यम् ॥ ३ ॥

मन्त्रं विधत्ते— "सन्ते वायुरिति। पूर्वोऽर्द्धर्चः, पृथिवीदैवत्यः, उत्तरो वायव्यः। 'उत्तानायाः' ऊर्ध्वमुखतया विस्तृ-

---

* वा० सं० ११. ३८. १।

† जु० आ० ६ धा०।

‡ का० श्री० सू० १६. ३. ३।

§ वा० सं० ११. ३९।

स्थाया: 'ते' तव पृथिव्या: 'यत्' 'हृदयं' 'विकस्तम्' अवट-करणेन खातम्, तत् 'मातरिश्वा' मातरि अन्तरिक्षे श्वसिति पवते इति 'मातरिश्वा' वायु:, 'सन्दधातु' सम्पूरयतु। उत्तरार्द्धे वायुं सम्बोध्योच्यते। 'य:' च त्वं 'देवानाम्' अग्न्यादीनां वागादिदेवानां वा 'प्राणथेन' प्राणत्वेन 'चरसि'। वायौ सति वागादीन्द्रियाणि चेष्टन्ते। हे 'देव' द्योतमान वायो! 'कस्मै' क: प्रजापति:, तद्रूपाय 'तुभ्यं' 'वषट् अस्तु'। इयं पृथिवी वषड्भूता भवतु। 'क'-पदस्यार्थ माह— "प्रजापतिर्वै क:"-इति। वषट्करणेनाहुति: कार्येति कृत्वा प्रशंसति— "नो हैता-वत्यन्याहुतिरिति। 'यथा' 'एषा' आहुति: सन्धानकरी, एव मन्या नास्तीत्यर्थ: ॥ ४ ॥

कात्यायन:— "अनामिकया संवपति पुरस्तात् पश्चाद् दक्षिणत उत्तरतश्च"-इति *। अनामिकाङ्गुल्या अवटस्य पुरस्तात् प्राच्या दिश: सकाशात् 'पांसु' अवटे संवपेत्। एवं प्रत्यगा-दिभ्य: सकाशात् तद् विधत्ते— "अथैनां दिग्भि: सन्दधा-तीति। तत्र क्रमं विधत्ते— "स इमां चेमां च दिशौ सन्द-धातीति। 'इमा मिमाम्' इत्यभिनयेन प्राक्प्रतीच्यौ दिशौ विवक्ष्येते। एतयोर्विवक्षायां कारण माह— 'एते दिशौ' 'सं-हिते'। इम मिति लोकप्रसिद्धे प्राक्प्रतीच्याविति युज्येते, पुन: इमाञ्च'-इत्यनेन दक्षिणोदीच्यौ दिशौ विवक्ष्येते। अत्रापि संहितत्व मेव कारणम्। अथ चतुर्दिग्यं सन्धानप्रकार मभि-नयेन दर्शयति-- "इत्यग्रेऽथेति। 'इति' एवम् 'अग्रे' प्रथमं प्राचीं दिश मित्यर्थ:। इतरदिक्क्रियापेक्षया 'अथेति'-पदद्वयम्।

* का० श्रौ० सू० १६. ३. ४।

उत्तरतः समापनं प्रशंसति— "तद् दक्षिणावृदिति। 'तत्' कर्म दक्षिण मावृदावर्त्तनं समापनं यस्य तद् भवति। 'तद्' दक्षिणावर्त्तनं कर्म 'देवत्रा' देवेषु भवतीत्यर्थः। तां चात्र-करणभूता मङ्गुलि मभिनयेन दर्शयति-- "अनयेति। 'अनया' अनामिकाङ्गुल्या ; भेषज्यक्रियासाधनत्व मस्याः अङ्गुलेः प्रसिद्ध मिति शब्दार्थः ॥ ५ ॥

अथास्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः अन्तोद्ग्रहणं विधत्ते— "अथ कृष्णाजिनस्येति *। 'उद्ग्रहणम्' ऊर्ध्वकरणम्। पुष्करपर्णस्य योनित्वं प्रागुक्तम् †, तद् विधत्ते— "सुजात इति ‡। 'ज्योतिषा' 'सह' संयुक्तः, सुजातोऽय मग्निः 'वरूथं' वरणीयं, 'स्वः' स्वर्गाख्यं, 'शर्म' शरणं गृहम् 'आसदत्' आसीददिति। सदेर्लुङि च्लेरङि रूपम् ॥ ६ ॥

अथ कृष्णाजिनपुष्करपर्णयोरुद्गृहीतत्वात् विहृता मुञ्ज-योक्त्रेण बध्नीयादिति विधत्ते— "अथैन मुपनह्यतीति §। "णह बन्धने" ‖। "न विष्यत इति। विष्यतीत्यर्थः। 'योक्त्रेण' दाम्ना 'योग्यं' योजनीयम्, अश्वाननादिवन्धनं च मौञ्जेन कर-णीयम्। "तत्र विहृत्"-इत्यत्र पूर्वं मुक्तं ¶ ब्राह्मण मति-दिशति— "तस्यो बन्धुरिति ॥ ७ ॥

---

* का० श्रौ० सू० १६. ३. ५।

† अस्या मेव कण्डिकायां ( २२१ पृ० १२ पं ) द्रष्टव्यम्।

‡ वा० सं० ११. ४०, १।

§ का० श्रौ० सू० १६. ३. ६ क।

‖ दि० उ० ६० धा०।

¶ २ प्र० ३ ब्रा० २७ क० ( १३८ पृ० ) द्रष्टव्यम्।

पूर्वं मञ्जरासभाजान् पशून् प्रस्तुत्य, ते मौञ्जीभिरभिधानीभिरभिहिता भवन्तीत्यादिना, विहृतो भवन्तीत्यनेन च रशनाविधान मुक्तम् *, अथ योक्त्रस्य समन्त्रं वेष्टनं विधत्ते— "तत् पर्यस्यति वास इति †। 'तत्' योक्त्रं 'पर्यस्यति' परिवेष्टयति। हे 'विभावसो' दीप्तिभिर्वासयितः!, दीप्तिधन! वा, हे 'अग्ने!' 'विश्वरूपं' विचित्ररूपं 'वासः' 'संव्ययस्व'। "व्येञ् संवरणे" ‡, परिधत्स्व। योक्त्रमन्त्रने वासः संव्ययस्वेति वस्त्रपरिधापनोक्तेस्तात्पर्य माह— "वरुण्या वै यम्न इति। 'यम्ने' हि रज्जुः': 'वरुण्या' वरुणदेवत्या भवति §। यथा— योक्त्रपरित्यागे "प्रत्वा मुञ्चामि वरुणस्य पाशात्"-इति ‖ मन्त्रः, नैवम्; इह तु 'एतद्' योक्त्रम् 'अवरुण्यं कृत्वा' 'यथा वासः परिधापयेत्' 'एवं' तदित्यभिप्रायेण "वासः •—• संव्ययस्वेत्युक्तम् ¶। पाशस्यैव हि वरुणो देवता, न वाससं इत्यर्थः ॥ ८ ॥

विधत्ते— "अथैन मादायोत्तिष्ठतीति **। 'एनं' मृत्पिण्ड मादाय ऊर्ध्वस्तिष्ठेत्। तत् प्रशंसति— "असौ वा आदित्य इति। "त्रेधात्मानं विकरोति,— अग्निं तृतीयं, वायुं तृतीयम्, आदित्यं तृतीयम्"-इति श्रुतेः ††। मृत्पिण्डोऽग्निरिति चोक्तम्। मृदमादायोत्थानेन अमु मादित्य मेवोत्थापितवान् भवतीति ॥

---

* २ प्र० ३ ब्रा० २६, २७ कं० (१३८ पृ०) द्रष्टव्यम्।

† का० श्रौ० सू० १६, ३. ६ ख।

‡ भ्वा० उ० १००७ धा०।

§ १ भा० २ प्र० ४ ब्रा० १२ कण्डीतो द्रष्टव्यम्।

‖ ऋ० सं० ८ अष्ट० ३ अ० २४ व० द्रष्टव्यम्।

¶ वा० सं० ११. ४०. २।

** का० श्रौ० सू० १६. ३. ७। †† तै० ब्रा० १. ७, १. ९ ।

मन्त्रं विधत्ते— "उदु तिष्ठ स्वध्वरेतीति *। हे 'स्वध्वर' सुयज्ञ ! 'उत्तिष्ठ'। 'उ'-शब्दोऽप्यर्थः। अपि च 'देव्या' देवसम्बन्धिन्या 'धिया' बुद्ध्या 'नः' अस्मान् 'अव' पालय। 'दृशे' दर्शनाय 'बृहता भासा' प्रौढेन तेजसा 'सुशुक्वनिः' अत्यन्तं दीप्यमानः 'सुशस्तिभिः' शोभनशिक्षितैः 'वोढृभिः' अश्वैः 'आयाहि' आगच्छ 'अग्ने' मद्रूपः इति। सुशस्तिभिरितिपदस्यार्थ माह—‡"ये वोढारस्ते सुशस्तय इति ॥ ८ ॥

अत्र सूत्रम्,— "ऊर्द्ध्वबाहुः प्राञ्चं प्रगृह्णाति, ऊर्द्ध्व ऊ षु ण इति, अवहृत्योपरि नाभिधारयन्निति *। तदूर्द्ध्वधारणं विधत्ते— "अथैन मित ऊर्द्ध्व मिति। 'इतः' भूमेः सकाशात् 'ऊर्द्ध्व'" प्राङ्मुखं प्रगृह्णीयात्। "असौ वा आदित्य इत्यादि पूर्ववद् व्याख्येयम् †।

मन्त्रं विधत्ते— "इत ऊर्द्ध मिति। 'नः' अस्माकम् 'ऊतये' तर्पणाय सुष्ठु 'ऊर्द्धः' 'तिष्ठ'। तत्रोपमा माह— "देव इति। 'न'-शब्द उपमार्थः। यथा सविता देवः 'वाजस्य' अन्नस्य 'सनिता' सम्भक्ता 'ऊर्द्ध्वः' तिष्ठति। 'यद्' यस्मात् 'अञ्जिभिः' अभिव्यञ्जकैः 'वाघद्भिः' रश्मिभिः उपलक्षितं त्वां 'विह्वयामहे' बहुविध माह्वयामः।

अत्र मन्त्रे ‡ पूर्वार्द्धं निगदव्याख्यात मिति दर्शयति— "यथैव यजुः, तथा बन्धुरिति। उत्तरार्द्धे 'वाजस्य'-इत्यादे-

---

* वा० सं० ११. ४१।

† का० श्रौ० सू० १६. ३. ८, ६क।

‡ पूर्वत्र (२२७ पृ० १४ पं०) द्रष्टव्यम्।

§ वा० सं० ११. ४२।

रथं माह— "ऊर्द्धो वा एष तिष्ठन्नित्यादिना। पूर्वं मित्त ऊर्द्ध मिति सामान्येनोक्तम्, तद् विशिनष्टि— "परोबाहु प्रगृह्णातीति। बाह्वोः परस्तात् अनूर्द्धो बाहुः, प्राञ्च मित्युद्गृह्णीत।

कृत्पिण्डस्याधो नयनं विधत्ते— "अथैन मुपावहरतीति। उपावहरणस्य अवधिं दर्शयति— "त मुपावहृत्येति। उपरि-नाभिधारणस्य स्तावकं ब्राह्मण मित्यतिदिशति— "तस्योपरि बभ्रुरिति। रुक्मधारणप्रस्तावे "यद्देवोपरि नाभि अवाग् वै नाभे रेतः प्रजातिरिति * •—• एतद्दै पशोर्मेध्यतरं यदुपरि-नाभि"-इति † ॥ १० ॥ ४ [ ४. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम् . )

हस्त ऽएष भवत्यथ पशूनभिमन्त्रयते। एतद्वा ऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्य मदधुस्तथैवैष्वय मेतत् सम्भरिष्यन् पुरस्ताद्वीर्यं दधाति ॥ १ ॥

सो ऽश्व मभिमन्त्रयते। स जातो गर्भो ऽअसि

---

*, † उपरिष्टात् ( ५ प्र० १ ब्रा० ६, १० कं० ) द्रष्टव्यम्।

रोदस्योरितीमे वै द्यावापृथिवी रोदसी तयो-रेष जातो गर्भोऽग्ने चारुर्विभृत ओषधीष्विति सर्व्वासु ह्येष चारुर्विभृत ओषधिषु चित्रः शिशुः परि तमाᳪस्यक्तूनिति चित्रो वा ऽएष शिशुः परेण तमाᳪस्यक्तूनतिरोचते प्र मातृभ्यो ऽअधि कनिक्रदद्गा इत्योषधयो वा ऽएतस्य मातरस्ताभ्य एष कनिक्रदद्गैति तदश्वे वीर्यं दधाति * ॥ २ ॥

अथ रासभᳪ । स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्व्वन्निति स्थिरश्च भव वीड्वङ्गश्चाशुश्च भव वाजी चार्व्वन्नित्येतत् पृथुर्भव सुषदस्त्व मग्नेः पुरीषवाहण इति पृथुर्भव सुशीमस्त्व मग्नेः पशव्य-वाहन इत्येतत्तद्रासभे वीर्यं दधाति ॥ ३ ॥

अथाजᳪ । शिवो भव प्रजाभ्यो मानुषीभ्यस्त्व मङ्गिर इत्यङ्गिरा वा ऽअग्निराग्नेयोऽजः शमय-त्येवैन मेतदहिᳪसायै मा द्यावापृथिवी ऽअभि-शोचीर्मान्तरिक्षं मा वनस्पतीनित्येतत् सर्व्वं मा हिᳪसीरित्येतत्तदजे वीर्यं दधाति ॥ ४ ॥

* 'दधाति'—इति क, ख ।

त्रिभिरभिमन्त्रयते । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति ॥ ५ ॥

अथैन मेतेषां पशूना मुपरिष्टात् प्रगृह्णाति । तदेन मेतैः पशुभिः सम्भरति नोपस्पृशति वज्रो वै पशवो रेत इदं मेदिदᳪ रेतो वज्रेण हिनसानीत्यथो ऽअग्निरयं पशव इमे नेदय मग्निरिमान् पशून् हिनसदिति ॥ ६ ॥

त मश्वस्योपरिष्टात् प्रगृह्णाति । प्रैतु वाजी कनिक्रददिति प्रैतु वाजी कनिक्रद्यमान इत्येतन्नानदद्रासभः पत्वेति तदश्वस्य यजुषि रासभं निराह तद्रासभे शुचं दधाति भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरेति भरन्नग्निं पशव्यं मो ऽअस्मात् कर्मणः पुरा पादीत्येतत्तदेन मश्वेन सम्भरति ॥ ७ ॥

अथ रासभस्य । वृषाग्निं वृषणं भरन्निति वृषा वा ऽअग्निर्वृषा रासभः स वृषा वृषाणं भवत्यपाङ्गर्भᳪ समुद्रिय मित्यपाᳪ ह्येष गर्भः समुद्रियस्तदेनᳪ रासभेन सम्भरति ॥ ८ ॥

अथापादत्ते *। अग्न ऽआयाहि व्वीतय ऽइ-त्यवितव ऽइत्येतत्तदेनं ब्रह्मणा यजुषैतस्माच्छौद्रा-द्वर्णादिपादत्ते † ॥ ९ ॥

अथाजस्य। ऋतꣳ सत्यमृतꣳ सत्य मित्ययं वा ऽअग्निर्ऋत मसावादित्यः सत्यं यदि वासावृत-मयꣳ सत्य मुभयम्वेतदय मग्निस्तस्मादाहऽर्तꣳ सत्य-मृतꣳ सत्य मिति तदेन मजेन सम्भरति ॥ १० ॥

त्रिभिः सम्भरति। त्रिवृदग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैन मेतत् सम्भरति त्रिभिः पुरस्तादभिमन्त्रयते तत् षट् तस्योक्तो बन्धुः ॥ ११ ॥

अथैतान् पशूनावर्त्तयन्ति। तेषा मजः प्रथम एत्यथ रासभो ऽथाश्वो ऽथैतो यता मश्वः प्रथम एत्यथ रासभो ऽथाजः क्षत्रं वा ऽअन्वश्वो व्वैश्यं च शूद्रं चानु रासभो ब्राह्मण मजः ‡ ॥ १२ ॥

तद्यदितो यताम् §। अश्वः प्रथम एति तस्मात्

---

* 'अथापादत्ते'—इति क, ख।

† '०दपादत्ते'—इति ग, घ।

‡ 'मजः'—इति ग, घ।

§ 'यताम्'—इति ग, घ।

क्षत्रियं प्रथमं यन्त मितरे त्रयो वर्णाः पश्चादनु-
यन्त्यथ यदमुत आयता मजः प्रथम एति तस्माद्
ब्राह्मणं प्रथमं यन्त मितरे त्रयो वर्णाः पश्चादनु-
यन्त्यथ यच्छ्वेतो यन्नामुतो रासभः प्रथम
एति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च वैश्यं
च शूद्रं च पश्चादन्वितस्तस्मादेवं यन्त्यपापवस्य-
सायाथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ वर्णा-
वभितः परिगृह्णीते ऽनपक्रमिणौ कुरुते * ॥ १३ ॥

अथानड्वापुरुष मीक्षते । अग्निं पुरीष्य मङ्गि-
रस्वद्भराम इत्यग्निं पशव्य मग्निवद्भराम इत्येतत्त-
देन मनड्वापुरुषेण सम्भरति ॥ १४ ॥

त मजश्चोपरिष्टात् प्रगृह्णन्नेति । आग्नेयो
वा ऽअजः स्वेनैवैन मेतदात्मना स्वया देवतया
सम्भरत्यथो ब्रह्म वा ऽअजो ब्रह्मणैवैन मेतत्
सम्भरति ॥ १५ ॥

अथैन मुपावहरति । ओषधयः प्रतिमोदध्व
मग्नि मेतꣳ शिव मायन्त मभ्यत्र युष्मा इत्येतद्वेत-

* 'कुरुते'—इति क, ख ।

स्मादायत ओषधयो बिभ्यति यद्वै नो ऽयं न हिꣳ-
स्यादिति ताभ्य एवैन मेतच्छमयति प्रस्थेनं मोद-
ध्वꣳ शिवो वो ऽस्त्वेति न वो हिꣳसिष्यतीति
व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो ऽअप
दुर्म्मतिं जहीति व्यस्यन्विश्वा अनिराश्चामीवाश्च
निषीदन्नो ऽप सर्व्वं पाप्मानं जहीत्येतत् * ॥ १६ ॥

ओषधयः प्रतिगृह्णीत । पुष्पवतीः सुपिप्पला
इत्येतद्वैतासाꣳ समृद्धꣳ रूपं यत् पुष्पवत्यः सुपि-
प्पलाः समृद्धा एनं प्रतिगृह्णीतेत्येतदयं वो गर्भ
ऋत्वियः प्रत्नꣳ सधस्थ मासददित्ययं वो गर्भ ऋत-
व्यः सनातनꣳ सधस्थ मासददित्येतत् † ॥ १७ ॥

द्वाभ्या मुपावहरति । द्विपाद्यजमानो यजमानो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपा-
वहरति तं दक्षिणत उदञ्च मुपावहरति तस्योक्तो
बन्धुरुद्धत मवोक्षितं भवति यच्चैन मुपावहरत्युद्धते वा
ऽअवोक्षितेऽग्नि मादधति सिकता उपकीर्णा भवन्ति
तासा मुपरि बन्धुः ॥ १८ ॥

---

* 'जहीत्येतत्'—इति ग, घ ।

† 'सधस्थ मासददित्येतत्'—इति ग, घ ।

परिश्रितं भवति। एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतां पुरं पर्यश्रयंस्तथैवास्मा ऽअय मेतां पुरं परिश्रयत्यथो योनिर्व्वा ऽइयꣳ रेत इदं तिर इव वै योनौ रेतः सिच्यते योनिरूप मेतत् क्रियते तस्मादपि स्वया जायया तिर इवैव चिचरिषति * ॥ १९ ॥

अथैनं व्विष्यति। तद्यदेवास्यात्रोपनद्धस्य सꣳशुच्यति ता मेवास्मादेतच्छुचं बहिर्धा दधात्यथो ऽएतस्या एवैन मेतद्योनेः प्रजनयति ॥ २० ॥

वि पाजसा पृथुना शोशुचान इति। वि पाजसा पृथुना दीप्यमान इत्येतद्बाधस्व द्विषो रक्षसो ऽअमीवा इति बाधस्व सर्व्वान् पाप्मन इत्येतत् सुशर्म्मणो बृहतः शर्मणि स्या मग्नेरहꣳसुहवस्य प्रणीतावित्याशिष माशास्ते † ॥ २१ ॥

अथाजलोमान्याच्छिद्य ‡। उदीचः प्राचः

---

* 'चिचरिष्यति'—इति क।

† 'माशास्ते'—इति क, ख।

‡ 'अथाजलोमान्याच्छिद्य'—इति क, ग, घ।

पशून् प्रसूनत्येषा ह्येभयेषां देवमनुष्याणां दिग्य-
दुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये
देवमनुष्याः पशूनुपजीवन्ति ॥ २२ ॥ ५ ॥

॥ इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् [४. ४.] ॥

अथ मृत्पिण्डसाहित्येन पश्वभिमन्त्रणं विधत्ते— "हस्त एष भवतीति। 'एषः' मृत्पिण्डः। "एतद्वा इत्यादेरय मर्थः— 'एतद्' इदानीं पिण्डसम्भरणकाले पश्वभिमन्त्रणेन एषु 'वीर्यं' 'देवाः' इव 'अयं' यजमानोऽपि 'दधाति' निहितवान् भवतीति ॥ १ ॥

पूर्व मश्वाभिमन्त्रणं विधत्ते— "सोऽग्ने मिति *। अश्वो-ऽग्न्यात्मना स्तूयते— 'सः' त्वं 'रोदस्योः' द्यावापृथिव्योः 'गर्भः' इति जातः असि', तथा 'ओषधीषु' ओषधिवनस्पत्यादिषु विष-येषु 'चारुः' 'विभृतः' विशेषेण सम्भृतोऽसि, 'चित्रः' चित्र-वर्णः, 'शिशुः', 'अक्तून्' अक्तुशब्दो रात्रिवचनः, तत्रत्यानि 'तमांसि' 'परि' योग्यक्रियाध्याहारः, परीत्य, अतिरोचत इति। 'मातृभ्यः'-इति चतुर्थी। ओषधयोऽत्र मातृशब्दवाच्याः, तदर्थम्, तद्रक्षणार्थं 'कनिक्रदत्' अत्यर्थं हेषितशब्दं कुर्वन् 'प्रगाः' प्रगच्छसि †। "इणो गा लुङि"-इति गादेशः ‡।

मन्त्रं प्रतिपद मनूद्य व्याचष्टे— "इमे वै द्यावापृथिवी रोदसी इति ॥ २ ॥

* का० श्रौ० सू० १६. ३. ६।

† वा० सं० ११. ४३।

‡ पा० सू० २. ४. ४५।

रासभाभिमन्त्रणं विधत्ते— "अव रासभं स्थिरो भवेति *। हे 'अर्वन्' अरण्यवन्! रासभ! 'स्थिरः' निश्चलः 'भव'। 'वीड्वङ्गः' दृढाङ्गः, 'आशुः' शीघ्रगतिः, 'वाजी' वेगवांश्च 'भव' इति। 'पृथुः' स्थूलः भव। 'सुषदः' शोभनसदनवान् भव। 'अग्नेः पुरीषवाहनः' गोमयस्य सैकतस्य वा वाहकत्वात् रासभस्य पुरीषवोढृत्वं प्रसिद्धम् ॥ ३ ॥

अजाभिमन्त्रणं विधत्ते— "अथाजं शिवो भवेति †। अङ्गिरःपदेन अग्निरुच्यते; तद्देवत्यत्वात्। हे 'अङ्गिरः' अग्निरूप! अज! त्वं 'मानुषीभ्यः प्रजाभ्यः' 'शिवो भव'। 'द्यावापृथिवी' 'मा अभिशोचीः' मा हिंसीः। तथा 'अन्तरिक्षं', 'वनस्पतीन्'। सर्वत्र 'मा अभिशोचीः'-इति क्रियापदं सम्बद्धुमिति पदं प्रयुक्तम्। मन्त्रस्यार्द्धयोस्तात्पर्य्यमाह— "अङ्गिरा वा अग्निरित्यादिना ॥ ४ ॥

अश्वादिपशुत्रयाभिमन्त्रणगतसङ्ख्यां प्रशंसति— "त्रिभिरभिमन्त्रयते इति। अग्नेस्त्रिवृत्त्वं पुरस्तादुक्तम् ॥ ५ ॥

अत्र सूत्रम्— "धारयत्येषा मुपरि पिण्ड मनुपस्पृशन्निति ‡। 'एषां' त्रयाणां पशूना मुपरितनान् पशून् अनुपस्पृशन् पिण्डं धारयेदित्यर्थः। तदिदं विधत्ते— "अथैन मेतेषां पशूना मिति। उपस्पर्शनाभावं प्रशंसति— "वज्रो वै पशव इति। यतो वज्ररूपाः पशवः, मृत्पिण्डश्च रेतोरूपः, अतो वज्रेण रेतः विच्छिन्नं न करोमीति बुद्धा न स्पृशे पशून्। अथवा 'अयं' मृत्पिण्डो

---

* वा० सं० ११. ४४।

† वा० सं० ११. ४५।

‡ का० श्रौ० सू० १६. ३. १०

हि 'अग्निः', अग्निः पशून् मा हिंसीदिति बुद्ध्या न स्पृशेत्। 'हिनसानि'—इति लोटि रूपम्, 'हिनसत्'—इति पञ्चमलकारे रूपम् ॥ ६ ॥

अथाश्वस्योपरि धारणं समन्त्रं विधत्ते—"त मश्वस्योपरिष्टा-दिति *। 'वाजी' अन्नवान् अश्वः 'प्रैतु' आगच्छतु। तं विशिनष्टि— 'क्रनिक्रदत्' अत्यर्थशब्दं कुर्वन्, 'नानदत्' सर्वा दिशो नादयन् 'रासभः' उपमाशब्दलोपः गर्द्दभ इव 'पत्वा' पतनशीलः। पतेः क्वनिपि रूपम्। 'पुरीष्यं' पशुहितम् 'अग्निम्' धारयन्, 'आयुषः' कर्मणोऽस्मात् 'पुरा' 'मा पादि' मा विनश्यतु †। पदेर्व्विणि रूपम्।

अश्वस्योपरि धारणमन्त्रे रासभः पत्वेति गर्द्दभवचनस्य प्रयोजन माह— "तदश्वस्य यजुषि रासभं निराहेति। अश्व-मन्त्रे रासभवचने तस्माद्रासभः अश्वस्यातिशयितत्वोक्तेः तस्मिन् गर्द्दभे शोकबलराहित्य मेव निहितं भवतीति। 'आयुषः'—इति-पदस्यार्थ माह 'कर्मणः' इति ॥ ७ ॥

अथोत्तरा ऋक्, संहिताया मेव माम्नायते ‡—

"वृषाग्निं वृषणं भरन्नपाङ्गर्भꣳ समुद्रियम्

अग्न आयाहि वीतये ऋतꣳ सत्य मृतꣳ सत्य

मग्निम्पुरीष्य मङ्गिरस्वद् भरामः"—इति §।

---

* का० श्रौ० सू० १६. ३. १०।

† वा० सं० ११. ४६. १।

‡ अस्मद्दृष्टसंहितायान्तु "वृषाग्निम्"—इत्यादिः "समुद्रियम्"—इत्य-न्तश्च पाठः ४६ कण्डिकापरांशः।

§ वा० सं० ११. ४७।

महाबृहतीयम्; "चत्वारोऽष्टकाः पादा जागतश्च महाबृहती" -इति। तस्य विभज्य विनियोगो विधीयते। तत्र तस्याः पूर्वार्द्धे तु रासभस्योपरि धारणम्, तृतीयपादेनाजस्योपरि धारणाय रासभ-मृत्पिण्डहरणम्, चतुर्थेनाजस्योपरि धारणम्, पञ्चमेनानड्वापुरुषेक्षणम्। तदाह सूत्रकृत्— "प्रैतु वाजी वृषाग्नि मित्यश्वखरयोः अग्न आयाहीत्याहृत्य खराच्छागमन्यस्तं सत्य मित्याभिधानात्, आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये, स्वस्थानस्थितामा मेवावृत्तिः, अनड्वापुरुष मीक्षते पूर्ववदग्निं पुरीष्य मिति"-इति *। तदिदं सर्वं विधत्ते— "अथ रासभस्य वृषाग्निं वृषण मित्यादिना।

मन्त्रस्याय मर्थः †,— 'वृषणं' वर्षकं मृद्रूपम् 'अग्निं' 'भरन्' 'अपाङ्गर्भं' गर्भभूतं, समुद्रे अन्तरिक्षे भवं 'समुद्रियं' 'भरन्' 'अग्निं' मृद्रूपं 'वृष' सिञ्च। वृषतेर्लोटि रूपम्। अत्रार्द्धे रासभः सम्बोध्यः।

ब्राह्मणे, वृषेति कन्प्रत्ययान्तं पद मिति व्याख्यातं— "वृषा वा अग्निरिति। तत्राय मर्थः,— 'वृषा' रेतसः सेक्ता 'रासभः' 'वृषणम् अग्निं भरन्', तिष्ठतीति क्रियाध्याहारः। तृतीयपादे अग्निः सम्बोध्यः। हे 'अग्ने' मृद्रूप! 'वीतये' तर्पणाय 'आयाहि' रासभादागच्छ। 'ऋतम्' अग्निः, 'सत्यम्' आदित्यः; यद्वा, 'ऋतम्' आदित्यः, 'सत्यम्' अग्निः; उभयरूप मग्निम्, आहरिष्यामीति शेषः। 'पुरीष्यं' पशुहित मग्निम्, 'अङ्गिरस्वद्' अग्निवत् 'भरामः' सम्भरामः इति।

---

* का० श्रौ० सू० १६. ३. ११, १२, १३।

† पाठस्तस्य वा० सं० ११. ४६ ख, ४७ क।

मन्त्रगतानि पदानि व्याचष्टे— "वृषा वा अग्निरिति। "तदेनं रासभेनेति। मन्त्रस्य पूर्वार्द्धेन रासभस्योपरि मृत्पिण्डधारणेन तस्मिन् इदं सम्भृतवान् भवति ॥ ८ ॥

खरात् सकाशात् मृदाहरणं समन्त्रं विधत्ते— "अथा-पादत्त इति। "अग्न आयाहीति तृतीयः पादः *। 'वीतये' -इत्यस्यार्थं माह— "अशितय इतीति। तर्पणार्थादू वेतेः † "मन्त्रे वृषेष०"-इति ‡ क्तिन्, स चोदात्तः। अपादानं प्रशं-सति— "तदेनं ब्रह्मणेति। 'एनं' मृत्पिण्डं 'ब्रह्मणा' ब्रह्म-रूपेण 'यजुषा' "अग्न आयाहि"-इति पादेन 'एतस्मात्' 'शौद्रात्' वर्णात् अपादत्तवान् भवति। रासभस्य वैश्यशूद्रजातिसम्बन्धो वक्ष्यते— "वैश्यं च शूद्रं चानु रासभ इति § ॥ ९ ॥

अजस्योपरि धारणमन्त्रं विधत्ते— "अथाजस्य ऋत मिति। ऋतं सत्य मिति द्विवारं पठ्यते, तत्र प्रथमर्त्तसत्यपदयोरर्थं माह— "अयं वा अग्निर्ऋत मिति। "यदि वेति, द्वितीयर्त्त-सत्यपदयोरर्थवचनम्। 'असौ' विप्रकृष्टः 'आदित्यः' 'ऋतम्', 'अथ मतिः सत्यम्'; उभयरूपोऽय मग्निर्मृद्रूपः ॥ १० ॥

अग्निम्पुरीष्य मिति मन्त्रशेषस्य विनियोग उत्तरत्र वक्ष्यते ‖, इदानीं मश्वादीना मुपरि धारणे विनियुक्तमन्त्रगतसङ्ख्यां विद्व-द्वक्यात्मना स्तौति— "त्रिभिरिति। "प्रैतु वाजी"-इति

---

* ३३८ पृ० १८ पं० द्रष्टव्यः।

† अदा० प० ३७ धा०।

‡ पा० सू० ३. ३. ९६।

§ इहैव द्वादशकण्डिकायां ( २३२ पृ० ) द्रष्टव्यम्।

‖ इहैवोपरिष्टात् चतुर्दशकण्डिकायां ( २४१ ) द्रष्टव्यम्

एको मन्त्रः, “वृषाग्निः”–इति महापङ्क्त्या मपरः; रासभाजयोरुपरि धारणे विनियुक्तौ द्वौ मन्त्रौ *। मन्त्रस्य लक्षणं याज्ञिकसमाख्यान मिति; मत एकस्या ऋचि विभज्य विनियोगात् मन्त्रा बहवः सम्पाद्यन्त इत्यविरोधः †।

पूर्वं मश्वाद्यभिमन्त्रणे विनियुक्तमन्त्रसङ्ख्याम् मिलित्वा प्रशंसति– “त्रिभिः पुरस्तादिति। अभिमन्त्रणमन्त्रास्त्रयः, धारणमन्त्रास्त्रयः, ते षट् सम्पद्यन्ते; तस्य स्तावकं ब्राह्मण मतिदिशति–“तस्योक्तो बन्धुरिति। पिण्डपरिग्रहमन्त्रसङ्ख्याप्रस्तावे– “ताः षट् सम्पद्यन्ते, षड् ऋतवः”–इत्यादिना ‡ ॥ ११ ॥

अथैतेषां पशूना मावर्त्तनं विधत्ते– “अथैनान् पशूनिति। स्वस्थानावस्थिताना मेवावर्त्तनम्। तत्रागन्तॄणां पशूनां क्रमं विधत्ते –“तेषा मजः प्रथम इति §। पूर्वम् ‘इतः’ मुदाहरणार्थं ‘यतां’ गन्तॄणां ‘पशूनां’ मध्ये ‘अश्वः’ प्रथमो गतः, ‘रासभः’ मध्ये, पश्चात् ‘अजः’; अधुना ‘अजः’ प्रथमः, ‘रासभः’ मध्ये, पश्चात् ‘अश्वः’। गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम्। “क्षत्रं वा अन्वश्वः”–

---

* वा० सं० ११. ४६. १, ४६. २, ३, ४७. १। अत्राह महीधरः– “का० धारयत्येषा मुपरि पिण्ड मनुपस्पृशन् प्रैतु वाजी इति वृषाग्नि मित्यश्वखरयोरिति। अश्वादीना मुपरि पिण्डं धारयति तानस्पृशन् प्रैतु वाजीत्यश्वोपरि वृषाग्नि मिति खरोपरीति सूत्रार्थः। महापङ्क्तिस्त्र्यवसाना अष्टार्णषट्पादा महापंक्तिः। आद्यावर्द्धर्चावश्वदेवत्यौ, तृतीयोऽर्द्धर्चो रासभदेवत्यः, तृतीयचतुर्थपादौ वृहत्यौ”–इति।

† पुरस्तात् २३८ पृ० ४ पङ्क्तितः २३६ पृ० १० पङ्क्तिपर्यन्तं द्रष्टव्यम्।

‡ पुरस्तात् ३ प्र० ३ ब्रा० १० क० (२१३ पृ०) द्रष्टव्या।

§ का० श्रौ० सू० १६. ३. १२।

इत्यादेरय मर्थः— अश्वादिपशुत्रयस्य क्षत्रियजातिसम्बन्धः, क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्तात् गमनं लोके दृष्ट मिति। तत्र यथा गमनसमये अश्वस्य प्राथम्यम्, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम्, वैश्यशूद्रयोः क्षत्रियाद् ब्राह्मणाद्वा पुरस्ताद् गमनं नास्तीति मृदाहरणसमये पुनरागमनसमये च रासभस्य न प्राथम्यम्। तस्मात् कारणादेवम्— यान्ति अश्वपूर्वाः प्रथमे, अधुनाजपूर्वा आगच्छन्ति 'अपापवस्यसाय' पापपरिहाराय। ब्राह्मणेन क्षत्रियेण च 'एतौ' वैश्यशूद्रौ 'अभितः' मध्ये 'परिगृह्णीतौ', 'अनपक्रमिणौ' अनपक्रान्तौ 'कुरुते' ॥ १२, १३ ॥

विधत्ते— "अथानद्धापुरुष मिति *। तत्र पुरुष मिति पञ्चमम्। "अग्निं पुरीष्य मिति †। तदीक्षणेन तेनापि 'अनद्धापुरुषेण' पुरुषपशुप्रतिनिधिना मृदं सम्भृतवान् भवति ॥ १४ ॥

विधत्ते— "त मजस्योपरिष्टादिति। अजस्योपरि मृत्पिण्डं धारयन्नेव 'एति' आगच्छेदध्वर्युः। तथाविधं गमन मुभयथा प्रशंसति— "आग्नेयो वा अज इति। 'अजः' अग्निदेवत्यः, मृदप्यग्निः; अतोऽजस्योपरि धारणात् स्वेन रूपेण स्वदेवत्यं च सम्भृतवान् भवति। अपि अजो ब्राह्मणजातीयः; ततो ब्राह्मणेनाप्येनं मृत्पिण्डं सम्भृतवान् भवति ॥ १५ ॥

अथाजसकाशात् मृत्पिण्डस्यावरोहणं समन्त्रं विधत्ते ‡—

---

* का० श्रौ० सू० १६. ३. १३।

† वा० सं० ११. ४७. २।

‡ का० श्रौ० सू० १६. ३. १४।

"अथैन मुपावहरतीति। हे 'ओषधयः !' 'युष्माः' अत्र जसः सकारस्य "तस्माच्छसो नः"-इति * नत्वं रुत्वं विसर्जनीयः, युष्मानभिलक्ष्य 'आयन्तम्' आगच्छन्तं 'शिवम्' 'एतं' पुरोवर्त्तिनम् 'अग्निं' 'प्रति मोदध्वम्' प्रतिमोदस्व भयराहित्यार्थम्।

उत्तरार्द्धे † मृद्रूपोऽग्निः सम्बोध्यः। 'विश्वाः' 'अनिराः' 'इरा' -इत्यन्ननाम ‡। अन्नप्रतिबन्धहेतून् अनावृष्ट्यादीन्, 'अमीवाः' रोगांश्च 'व्यस्यन्' विक्षिपन्, हेतौ शतृप्रत्ययः। रोगादिविक्षेपाद्धेतोः 'निषीदन्' उपविशन्, 'नः' अस्माकं 'दुर्मतिं' दुष्टुतिमयीं मतिम् 'अपजहि' अपनयेति।

प्रतिमोदध्व मिति यदोषधीः प्रत्युक्तम्, तस्याभिप्राय माह— "एतद्वैतस्मादायत ओषधय इति। 'आयतः' अग्नेः सकाशात् 'ओषधयो बिभ्यति' स्वस्यात्मानं भक्षयिष्यति किलेति। तत्परिहाराय प्रतिमोदध्व मिति। यतोऽग्निः शान्तः, ओषधयो यूयमेनं प्रतिमोदध्वम्, 'शिवः' सुखकर एव स्वरूपः 'वः' युष्मान् 'अभ्येति' अभिगच्छति; न वो हिंसिष्यतीति तात्पर्यार्थः। उत्तरार्द्धगतं दुर्मतिपदं व्याचष्टे— "सर्वं पाप्मानं जहीति ॥ १६ ॥

द्वितीयं मन्त्रं विधत्ते— "ओषधयः प्रतिगृह्णीतेति § । हे 'ओषधयः'! 'एनम्' अग्निम् 'प्रतिगृह्णीत'। तं विशिनष्टि— 'पुष्पवतीः' पुष्पवत्यः, पुष्पसम्पन्नाः, 'सुपिप्पलाः'

---

* पा० सू० ६. १. १०३।

† वा० सं० ११. ४७. २ द्रष्टव्यम्।

‡ निघ० २ अ० ७ ख० १३ प०।

§ वा० सं० ११. ४८।

शोभनफलवत्यः, 'अयम्' अग्निर्वै युष्माक मोषधीनां 'गर्भः' 'ऋत्वियः' ऋतुषु भवः प्राप्तकालः 'प्रत्नं' पुरातनम्, 'सधस्थं' सहस्थानम् 'आसदत्' आगमत्। सदेर्लुङि च्लेरङि रूपम् ॥

मन्त्रं व्याचष्टे— "एतद्वै तासां समृद्ध मिति। पुष्पफलवत्त्व मेव समृद्धं रूप मित्यर्थः ॥ १७ ॥

उपावहरणमन्त्रगतसङ्ख्यां प्रशंसति— "द्वाभ्या मुपावहरति द्विपाद् यजमान इति। उक्तोऽर्थः *। पिण्डनिधानप्रदेशं कात्यायनः सूत्रयामास— "उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिश्रिते गार्हपत्ये पिण्डं निदधात्योषधय इति" —इति †। तदिदं विधत्ते— "तं दक्षिणत उदञ्च मित्यादि, "तिर इवैव चिचरिषतीत्यन्तेन ‡। 'तं' पिण्डं 'दक्षिणतः' प्रदेशात् 'उदञ्चम्' आहरति उदङ्मुखम् 'उपावहरेत्' निदध्यात्। दक्षिणत उदगागमनस्य स्तावकं ब्राह्मण मतिदिशति— "तस्योक्तो बन्धुरिति। पिण्डहरणसमये "तं दक्षिणत उदञ्च माहरति दक्षिणतो वा उदग् योनौ रेतः सिच्यत इति §।

'यत्र' स्थाने 'एनं' पिण्डं निदध्यात्, तत् स्थानम् 'उद्धतम्' उद्धननसंस्कृतम्, 'अवोक्षितम्' उदकसिक्तं भवेत्। पिण्डस्याग्नित्वात् तत्समानप्रदेशकरणं युक्त मित्याह— "उद्धते वा अवोक्षितेऽग्नि मिति। गार्हपत्यादिधिष्ण्या इत्यर्थः। तस्मिन् प्रदेशे सिकताश्च विकीर्णा भवन्ति। तत्स्तावकं ब्राह्मण मुत्तरत्र

---

* पुरस्तात् १६६ पृ० ३ पङ्क्तितो द्रष्टव्यम्।

† का० श्रौ० सू० १६. ३. १४।

‡ पुरस्तात् (२३४ पृ० १४ पं०—२३५ पृ० ७ पं) द्रष्टव्यम्।

§ पुरस्तात् २१३ पृ० १५ पं० १०क० द्रष्टव्या।

सप्तमकाण्डादौ गार्हपत्यचयनप्रस्तावे वक्ष्यत इत्याह— "तासा मुपरि बध्नुरिति * ॥ १८ ॥

"परिश्रितं भवतीति। तासां विकीर्णानां परिश्रित मिव परिवृतं भवेत्। परिश्रित्करणं नाम रक्षोभीत्या पुरस्य करण मित्यर्थः। प्रकारान्तरेण स्तौति— "अथो योनिर्वा इय मिति। इदं परिश्रितं स्थानं योनिरूपम्, 'इदं' पिण्डरूपं 'रेतः' इतश्च योनौ 'तिरः' तिरोहितम् अप्रकाशं 'सिच्यते'। उक्त मर्थं लोकप्रसिद्धया द्रढयति— "तस्मादिति। 'तस्मात्' खलु लोके 'स्वया जायया अपि' परिवृतस्थाने 'तिर इवैव' 'विच-रिषति' चरितु मिच्छति ॥ १९ ॥

"अथैनं विष्यतीति †। 'विष्यति' प्रमुञ्चेत्। पूर्वं कृष्णा-जिनपुष्करपर्णयोर्मध्ये पिण्डं निधाय, अन्तान् उद्गृह्य, योक्त्रेण बन्धनं कृतम्; तद् योक्त्र मन्तोद्ग्रहणञ्च मुञ्चेदित्यर्थः। "तस्य-दैवास्येति। पूर्वमन्तोपनद्धस्य बद्धस्य पिण्डस्य शोको जातः, 'तां' बन्धनजातां 'शुचं' 'बहिर्धा' तद्विमोकेन निहितवान् भवति। किञ्च पुष्करपर्णं च योनिरूप मित्युक्तम् ‡, अतो बन्धनरूपयोक्त्रविमोकात् 'योनेरेव' पिण्ड मुखाद्यात्मना जायता मित्यभिप्रायेण तद्विमोक इत्यर्थः ॥ २० ॥

मन्त्रं विधत्ते— "विपाजसा पृथुनेति §। पाज इति बल-नाम ‖। 'पृथुना' बलेन 'शोशुचानः' दीप्यमानोऽग्निस्त्वं

---

* उपरिष्टात् (७ का० ५ प्र० १ ब्रा० ८, १० क०) द्रष्टव्ये।

† का० श्रौ० सू० १६. ३. १५ क।

‡ पुरस्तात् २०३ पृ० ७ क० द्रष्टव्या।

§ वा० सं० ११. ५६।

‖ निघ० २ अ० ६ ख० २ प०।

'द्विषः' द्वेष्यान् 'रक्षसः' राक्षसांश्च 'अमीवाः' रोगांश्च 'वि बाधस्व'। एवं प्रत्यक्षतो याचित्वा, इदानीं मग्निं परोक्षीकृत्य स्वय माशिष्यमाणः ते 'सुशर्मणः' साधुशरणस्य, 'बृहतः', 'सुहवस्य' शोभनाह्वानस्य 'अग्नेः' 'प्रणीतौ' प्रकृष्टनीतौ 'शर्मणि' शरणे अहं 'स्याम्' भवेय मित्यर्थः। मन्त्रस्यार्द्धयोस्तात्पर्य माह— "बाधस्व सर्वान् पाप्मन इति, "आशिष माशास्ते इति च ॥ २१ ॥

अत्र सूत्रम्— "अजलोमान्यादाय प्रागुदीचः पशूनुत्सृजतीति *। तद् विधत्ते— "अथाजलोमानीति। 'उदीचः प्राचः' ईशानदिगभिमुखान् 'प्रसृजति' विसृजेत्। तां दिशं प्रशंसति— "एषा ह्युभयेषा मिति। गत मन्यत् ॥ २२ ॥ ५ [ ४. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

* का॰ श्रौ॰ सू॰ १६. ३. १५।

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रमाश्लिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

* अथवाशीष्यन्वः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्यः।

(अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम्.)

---

पर्णकषायनिष्पक्वा एता आपो भवन्ति। स्थेम्ने न्वेव यद्वेव पर्णकषायेण सोमो वै पर्णश्चन्द्रमा उ वै सोम एतदु वा ऽएक मग्निरूप मेतस्यैवाग्नि-रूपस्योपाप्त्यै ॥ १ ॥

ता उप सृजति। आपो हि ष्ठा मयोभुव इति यां वै देवता मृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क् सो देवता तद्यजुस्ता हैता आप एवैष त्रिचस्तद्या अमूराप एकꣳ रूपꣳ समदृश्यन्त ता एतास्तद्देवैतद्रूपं करोति * ॥ २ ॥

अथ फेनं जनयित्वान्ववदधाति। यद्वेव तत् फेनो द्वितीयꣳ रूप मसृज्यत तद्देवैतद्रूपं करोत्यथ या मेव तत्र मृदꣳ संयौति सैव मृद् यत्तत् तृतीयꣳ रूप मसृज्यतैतेभ्यो वा ऽएष रूपेभ्यो ऽग्रेऽसृज्यत तेभ्य एवैन मेतज्जनयति ॥ ३ ॥

---

* 'करोति'—इति क ख ।

गौस्तस्मा ऽएतद्दूधो येषा तिरश्ची रास्ना सा व्वि-
तृतीये भवति व्वितृतीये हि गोरूधः ॥ १७ ॥

तस्यै स्तनानुन्नयति। ऊधसस्तत् स्तनानुन्न-
यति सा चतुस्तना भवति चतुस्तना हि
गौः * ॥ १८ ॥

ताᳫं हैके द्विस्तनां कुर्व्वन्ति। अथो ऽष्ट-
स्तनां न तथा कुर्याद्यो वै गौः कनीयस्तनाः
पशवो ये भूयस्तना अनुपजीवनीयतरा वा ऽअस्यैते
ऽनुपजीवनीयतराᳫं हैनां ते कुर्व्वतेऽथो ह ते न गां
कुर्व्वते शुनीं वाविं वा व्वडवां वा तस्मात्तथा
न कुर्यात् ॥ १९ ॥

अथास्यै बिल मभिपद्यते। अदितिष्टे बिलं
गृभ्णात्विति व्वाग्वा ऽअदितिरेतद्वा ऽएनां देवाः
कृत्वा व्वाचादित्या निरष्ठापयंस्तथैवैना मय मेतत्
कृत्वा व्वाचादित्या निष्ठापयति ॥ २० ॥

तां परिगृह्य निदधाति। कृत्वाय सा महीं
मुखा मिति कृत्वाय सा महती मुखा मित्येतत्

* 'गौः'—इति ग, घ।

मृन्मयीं योनि मग्नय ऽइति मृन्मयी ह्येषा योनि-रग्नेः पुत्रेभ्यः प्रायच्छददितिः अपयानित्येतद्वा ऽएना मदितिः कृत्वा देवेभ्यः पुत्रेभ्यः अपणाय प्रायच्छत्तथैवैना मय मेतत् कृत्वा देवेभ्यः अपणाय प्रयच्छति ॥ २१ ॥

ता हैके तिस्रः कुर्व्वन्ति । त्रयो वा ऽइमे लोका इमे लोका उखा इति वदन्तोऽथो अन्यो ऽन्यस्यै प्रायश्चित्त्यै यदीतरा भेत्स्यते ऽथेतरस्यां भरिष्यामो यदीतराथेतरस्या मिति न तथा कुर्याद्यो वा ऽएष निधिः प्रथमोऽयꣳ स लोको यः पूर्व्व उद्धिरन्तरिक्षं तद्य उत्तरो द्यौः साथ यदेतच्चतुर्थं यजुर्दिशो हैव तदेतावद्वा ऽइदꣳ सर्व्वं यावदिमे च लोका दिशश्च स यदत्रोपाहरेदति तद्रेचयेद्यद् वै यज्ञेऽतिरिक्तं क्रियते यजमानस्य तद् द्विषन्तं भ्रातृव्य मभ्यतिरिच्यते यदु भिन्नायै प्रायश्चित्ति-कृतरस्मिंस्तदन्वाख्याने ॥ २२ ॥ ७ ॥

॥ इति तृतीयप्रपाठके सप्तमं ब्राह्मणम् [पू. २.] ॥

अथोखाया अधस्तात् पर्याप्तमृत्पिण्डादानं विधत्ते— "यद्य मृत्पिण्ड मिति। 'निधिः' नाम उखाया अधस्तलम्, तस्मै; 'यावन्तं' पर्याप्तं 'मन्यते' यजमानः, तावन्तम् आददीत। उखा-करणे यजमानः कर्त्ता। तथाच कात्यायनः— "यजमान उखां करोति मृद मादाय मखस्य शिर इति"-इति *। आदाने मन्त्रं विधत्ते— "मखस्य शिरोऽसीतीति †। एतद् यजुर्व्याचष्टे— "यज्ञो वै मख इति। यथा आहवनीयो यज्ञस्य शिरः, अग्न्या-धारत्वात्; एवं मृत्पिण्डोऽपि वह्न्याधारत्वात् आहवनीयस्य चीय-मानत्वाच्च लक्षणया यज्ञशिर इत्युच्यते ॥ १ ॥

प्रकारान्तरेण स्तोतु मनुवदति— "यद्देवाह मखस्येति। इष्टकाभिश्चीयते इति यत्, तत् एषोऽग्निर्जायते। चयनं नाम जन्मेत्यर्थः। लोके ह्युत्पद्यमानः पुरुषः प्रथमं 'शीर्षतः' शिरःप्रभृ-तिक एव 'चीयते' जायते। एव मग्निः शीर्षतो जायता मित्यभि-प्रायेण "यज्ञस्य शिरोऽसि"-इत्युक्तम्। 'जायाते'-इति जनेः पञ्चमलकारे रूपम् ॥ २ ॥

तत्र प्रथनं समन्त्रं विधत्ते— "तं प्रथयतीति ‡। 'प्रथयति' विस्तारयति। उखा नाम लोकत्रयात्मिकेति स्तुता, तत्र 'निधिः' भूलोकः; उत्तरत्र "द्यौर्मूर्ध उद्धिर्धारयेति श्रवणात् §। उत्त-रोत्तरमृत्पिण्डप्रक्षेपौ अन्तरिक्षद्युलोकात्मकौ; अतो मन्त्रत्रये-ऽपि लोकत्रयवाचकानि पदानि विद्यन्ते। यथा,

---

* का० श्रौ० सू० १६. ३. १३।

† वा० सं० ११. ५७. २।

‡ का० श्रौ० सू० १६. ३. २६।

§ एतस्मिन्नेव ब्राह्मणे पञ्चमकण्डिकायां (२६९ पृ० १२ पं०) द्रष्टव्यम्।

निधिप्रथममन्त्र एव माम्नायते—

"वसवस्त्वा कृण्वन्तु गायत्रेणच्छन्दसाऽङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजाᳪ रायस्पोषं गौपत्यᳪ सुवीर्यᳪ सजातान् यजमानाय"—इति * ।

अथ मन्त्रार्थः,—'वसवः' नाम भूलोकरक्षका देवाः 'त्वा' त्वाम् उखां भूलोकात्मिकां 'कृण्वन्तु' कुर्वन्तु 'गायत्रेण छन्दसा' सह 'अङ्गिरस्वत्' प्राणवत्, हे उखे! 'ध्रुवा असि' स्थिरा असि, 'पृथिवी' भूलोकात्मिका च भवसि। "धारया मयि"—इति यजुःशेषेण यजमाने आशिष माशास्ते; यजमानाय मयीतिसप्तमीनिर्देशात्। 'यजमानाय'—इति सप्तम्यर्थे चतुर्थी। 'प्रजां' 'धारय' स्थापय। 'रायस्पोषं' धनपुष्टिम्, 'गौपत्यं' गवां पतित्वम्, 'सुवीर्यं' सुवीराणां कर्म, अथ 'सजातान्' समानोदरे जातान् भ्रातॄनपि। धारयेति सर्वत्र सम्बन्धः॥

मन्त्रं व्याचष्टे,—"अयं हैव लोको निधिरिति। 'एषः' भूलोकः 'निधिः' उखाया अधस्तलम्। तदेतत् यथा 'वसवोऽकुर्वन्', एवं यष्टापि वसव इति पाठेन भूलोक मेव कृतवान् भवति। ध्रुवासीत्यस्य व्याख्यानं स्थिरासीति, तस्य व्याख्यानं प्रतिष्ठितासीति। पृथिव्यसीत्यस्य व्याख्यानं पृथिवी ह्येष निधिरिति। निधिर्नामोखाया अधस्तल मिति प्रागुक्तम् †। धारयामीत्यादिना यजमानस्य आशीराशासनम्॥

उत्तरस्योखाया ऊर्द्ध्वपरिमाणं वक्ष्यते ‡, अत्र निधेस्तिर्यग्-

* वा० सं० ११. ५८. १।

† प्रथमकण्डिकाव्याख्याने ( २६७ पृ० २ पं० ) द्रष्टव्यम्।

‡ अष्टमकण्डीद्रष्टव्यम् ( २६२ पृ० १६ पं० )।

विस्तारस्य परिमाणं विधत्ते— "तां प्रादेशमात्रीं मितिं । 'तां' निधिं पर्यासां मृदं तिर्यक् 'प्रादेशमात्रीं कृत्वा' 'अथ' अनन्तरम् 'अस्यै' अस्याः विस्तारितायाः निधेर्मृदः 'सर्वतः' 'तीरम्' अन्तम् 'उन्नयति' ऊर्द्ध्वं कुर्यात् । तथाच सूत्रम्— "वसवस्त्वेति प्रथयत्यन्तानुन्नीय सर्वतः"-इति * ॥ २ ॥

अथ तिर्यक् प्रादेशमात्रं विस्तारितायाः निधिमृदः उपरि मृत्पिण्डप्रक्षेपमन्त्रं विधत्ते— "अथ पूर्वं भुविं मादधातीति । 'पूर्वं' प्रथमम् । 'उद्धि'-शब्दो मृत्पिण्डप्रक्षेपवाची । अत एव कात्यायनः— "प्रथमं धातु मादधाति"-इत्युक्तवान् † । धातुशब्द उत्तरोत्तरक्रमेणावस्थान माह ; "त्रिधात्वलाबुपात्रम्"-इत्यादिप्रयोगदर्शनात् ‡ ॥

अथ द्वितीयमन्त्र एव माम्नायते— "रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेनच्छन्दसाऽङ्गिरस्वद् ध्रुवास्यन्तरिक्ष मसि धारया मयि प्रजाᳬं रायस्पोषं गौपत्यᳬं सुवीर्यᳬं सजातान् यजमानाय"-इति § ।

मन्त्रस्याय मर्थः,— हे उखे ! त्वां 'रुद्राः' अन्तरिक्षाभिमानिनः 'कृण्वन्तु' । अत्र मन्त्रे 'त्रैष्टुभेन छन्दसा'-इति, 'अन्तरिक्ष मसि'-इति च विशेषः । शेषं पूर्ववत् । निधेर्भूलोकात्मकत्वादुपरिनिहितमृत्पिण्डस्यान्तरिक्षलोकात्मकत्वम् । मन्त्रव्याख्यापकं ब्राह्मण मपि पूर्ववत् ।

---

* का० श्रौ० सू० १६. ३. २६, २७ क ।

† का० श्रौ० सू० १६. ३. २७ ख ।

‡ धातुशब्दाऽत्प्रक्षेप एव । प्रथितस्य तलप्रान्तानुन्नीय ऊर्द्ध्वान् नमयति, धातुं प्रथमपिण्डिकाम्" का० श्रौ० सू० वृ० ।

§ वा० सं० ११. ५८. २ ।

"संलिप्येति। तां निधेरुपरिनिहितां मृदं 'संलिप्य' सम्माज्र्य 'संश्लक्ष्णाम्' श्लक्ष्णां स्निग्धां कुर्यादित्यर्थः * ॥ ४ ॥

अथ प्रथमोद्धेरुपरि अन्यमृत्पिण्डप्रक्षेपं समन्त्रं विधत्ते— "अथोत्तर मुद्धि मादधातीति † ।

अथ तृतीयमन्त्र एव माम्नायते—

"आदित्यास्त्वा कृण्वन्तु जागतेनच्छन्दसाऽङ्गिरस्वद् ध्रुवासि द्यौरसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय"–इति ‡ ।

अत्र आदित्या द्युलोकाभिमानिनो देवताः त्वा मुखां कुर्वन्तु। अत्र 'जागतेन छन्दसा'–इति, 'द्यौरसि'–इति च विशेषः। शेषं पूर्ववत्। प्रथमोद्धेरन्तरिक्षात्मकत्वात् तस्योपरि विहितमृत्पिण्डस्य द्युलोकात्मकत्वम् ॥ ५ ॥

अथ निधेरुद्धित्रयस्य च समीकरणं समन्त्रं विधत्ते— "अथै-तेन चतुर्थेनेति § । उक्तमन्त्रत्रयापेक्षया एतस्य यजुषश्चतुर्थत्वम्। 'वैश्वानराः' विश्वनरसम्बन्धिनो 'विश्वेदेवाः' त्वाम् 'आनुष्टुभेन छन्दसा' कुर्वन्ति। "दिशो हैतद्यजुरित्यादेरय मर्थः,— उखाया लोकत्रयात्मकत्वात् 'एतेन' 'यजुषा' समीकरणेन तस्या दिश एव निहितवन्तो भवन्ति।

सोऽयं चतुर्थो मन्त्रः—

"विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्

---

* का० श्रौ० सू० १६. ३. २८ क ।

† का० श्रौ० सू० १६. ३. २८ ख ।

‡ वा० सं० ११. ५८. २ ।

§ का० श्रौ० सू० १६. ३. २६ ।

ध्रुवासि दिशोऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय''-इति * ।

अत्र मन्त्रे 'आनुष्टुभेन छन्दसा'-इति, 'दिशोऽसि'-इति च विशेषः ॥ ६ ॥

पूर्वम् ''अथैतेन चतुर्थेन यजुषा करोतीति क्रियासामान्य मुक्तम्, तद् विशिनष्टि-- ''तेनैतेनान्तरतश्च बाह्यतश्चेति । 'अन्तरतः' उखिहृदयस्य मध्यदेशे अपरिमितं छिद्रं कुर्यात्, 'बाह्यतः' अपि निम्नोन्नतत्वपरिहारेण सर्वतः समं कुर्यात् । एतस्य यजुषो दिगात्मकत्वात्, उखायाश्च लोकत्रयात्मकत्वात्, 'एतेन' अन्तरतो बाह्यतश्च समीकरणेन लोकत्रयस्य मध्ये बहिश्च 'अपरिमिता दिशः' निहितवान् भवति ॥ ७ ॥

उखाया ऊर्द्ध्वपरिमाणं विधत्ते-- ''तां प्रादेशमात्रीं मिति । एवकारेण परिमाणान्तरनिवृत्तिः । ऊर्द्ध्वा यथा प्रादेशमात्री, तिरश्चीनापि प्रादेशमात्री † । तिर्यक् प्रादेशमात्रीति निधिप्रथनसमये प्रागुक्तम् ‡ । ऊर्द्ध्वतिर्यक् समा कार्येत्यर्थः ।

तत्परिमाणं प्रशंसति-- ''प्रादेशेति । 'योनिं' गर्भसदृशीं कृतवान् भवति । उखाया योनित्वम् अग्न्याधारत्वात्, अग्नेश्च गर्भत्वम् तन्मध्ये संवत्सर मवस्थानात् ॥ ८ ॥

सर्वथोखा प्रादेशमात्री कर्त्तव्येत्याह-- ''सा यदीति । 'यदि' 'सा' उखा 'प्रादेशाद्' 'वर्षीयसी' अधिकपरिमाणा 'स्यात्', तर्हि 'एतेन' ''विश्वे त्वा देवाः''-इति 'यजुषा' 'ह्रसीयसीम्' अधि-

* वा० सं० ११. ५८. ३ ।

† का० श्रौ० सू० १६. ३. २४ ।

‡ २६० पृ० १३ पं०, २६६ पृ० १ पं० द्रष्टव्ये ।

कांशं परिहृत्य प्रादेशमात्री मेव कुर्यात् । 'यदि' उखा 'ज्यसीयसी' स्यात्, 'एतेन' यजुषा तिर्यग् प्रादेशसम्मिता मेव कुर्यात् ॥ ८ ॥

उखायाः परिमाणं पशुमनुष्ठानापेक्षया विकल्पित मिति दर्शयति— "स यद्येकः पशुः स्यादिति । एकपशुपक्षे एव प्रादेशमात्री उखा कर्त्तव्या ; पञ्चपशुपक्षे पञ्चप्रादेशपरिमाणा, इषुमात्री वा कर्त्तव्या । एतत् परिमाणद्वयं तिर्यगपेक्षया ; ऊर्ध्वपरिमाणं त्वत्रापि एकप्रादेशमात्रीति । तथा च कात्यायनेन सूत्रितम्— "प्रादेशमात्रीं तिर्यगूर्ध्वञ्च, पञ्चप्रादेशा मिषुमात्रीं वा तिर्यक् पञ्चपशौ"–इति *। तिर्यगेव पञ्चपशुपक्षे परिमाणद्वयम्, ऊर्ध्वन्तु एकप्रादेशैवेत्यर्थः ॥ १० ॥

अथोखाया उत्तरभागे वर्त्तिकरणं विधत्ते— "अथ तिरश्चीमिति †। 'पर्य्यस्यति' परितः सर्वतः कुर्यात् । तां रास्नां दिगात्मना स्तौति— "एतद्वै देवा इत्यादिना । पूर्वं 'देवाः' यथा 'उखां कृत्वा' 'दिग्भिः' दृढा मकुर्वन्, एवं यष्टा वर्त्तिकरणेन दिग्भिरेव विततां दृढाञ्च कृतवान् भवति ॥ ११ ॥

रास्नाकरणस्य स्थानं विधत्ते—"ता मुत्तरे त्रितृतीय इति ‡। उखां त्रिधा विभज्य 'उत्तरे' अर्द्धे 'त्रितृतीये' तृतीयभागादप्यूर्ध्वे प्रदेशे उखाकण्ठप्रदेशे वर्त्तिं सर्वतः तिरश्चीनां कुर्यादित्यर्थः ॥ १२ ॥

मन्त्रं विधत्ते—"अदित्यै रास्नासीति §। हे वर्त्ते ! 'अदित्यै'

* का० श्रौ० सू० १६. ३. २४, २५ ।

† का० श्रौ० सू० १६. ३. २० ।

‡ का० श्रौ० सू० १६. ३. ३० ख ।

§ वा० सं० ११. ५९. १ ।

अथाजलोमैः सꣳसृजति। स्थेम्ने न्वेव यद्वे- वाजलोमैरेतद्वा ऽएनं देवाः पशुभ्योऽधि समभरं- स्तथैवैन मय मेतत् पशुभ्योऽधि सम्भरति तद्यद- जलोमैरेवाजे हि सर्व्वेषां पशूनाꣳ रूप मथ यल्लोम लोम हि रूपम् ॥ ४ ॥

मित्रः सꣳसृज्य। पृथिवीं भूमिञ्च ज्योतिषा सहेति प्राणो वै मित्रः प्राणो वा ऽएतदग्रे कर्मा- करोत् सुजातं जातवेदस मयक्ष्माय त्वा सꣳसृजामि प्रजाभ्य इति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

अथैतत्त्रयं पिष्टं भवति। शर्कराश्मायोरस- स्तेन सꣳसृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वा ऽइय मग्रे ऽसृज्यत तद्यावतीय मग्रे ऽसृज्यत तावती मेवैना मेतत् करोति * ॥ ६ ॥

रुद्राः सꣳसृज्य। पृथिवीं बृहज्ज्योतिः समी- धिर ऽइत्यसौ वा ऽआदित्य एषो ऽग्निरेतद्वै तद्रुद्रा सꣳसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे तेषां

---

* 'करोति'—इति क, ख।

भानुरजस्र आच्छुक्रो देवेषु रोचत ऽइत्येष वा ऽएषां भानुरजस्रः शुक्रो देवेषु रोचते ॥ ७ ॥

द्वाभ्याꣳ सꣳसृजति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् सꣳसृजति ॥ ८ ॥

अथ प्रयौति । सꣳसृष्टां व्वसुभी रुद्रैरिति सꣳसृष्टा ह्येषा व्वसुभिश्च रुद्रैश्च भवति यन् मिश्रेण तद्वसुभिर्यद्रुद्रैस्तत्तद्रुद्रैर्धीरैः कर्मण्यां मृद मिति धीरा हि ते कर्मण्यो ऽइयं मृद्धस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ता मिति व्वाग्वै सिनीवाली सैनाꣳ हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् * ॥ ९ ॥

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशेति । योषा वै सिनीवाल्येतदु वै योषायै समृद्धꣳ रूपं यत् सुकपर्दा सुकुरीरा स्वौपशा समर्द्धयत्येवैना मेतत् सा तुभ्य मदिते मह्योखां दधातु हस्तयोरि-तीयं वा ऽअदितिर्मह्यस्यै तदाह ॥ १० ॥

---

* 'करोत्वित्येतत्'—इति घ, च ।

उखां कृणोतु । शक्त्या बाहुभ्या मदितिर्धि-
येति शक्त्या च हि करोति बाहुभ्यां च धिया च
माता पुत्रं यथोपस्थे साग्निं बिभर्त्तु गर्भ ऽआ इति
यथा माता पुत्र मुपस्थे बिभृयादेव मग्निं गर्भे
बिभर्त्त्वित्येतत् * ॥ ११ ॥

त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य
मात्रा तावतैवैन मेतत् प्रयौति द्वाभ्याᳫं सᳫं-
सृजति तत् पञ्च पञ्चचितिको ऽग्निः पञ्चऽर्त्तवः
संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा
तावत्तद् भवति त्रिभिरप उपसृजति तदष्टावष्टा-
क्षरा गायत्री गायत्रो ऽग्निर्यावानग्निर्यावत्यस्य
मात्रा तावत् तद् भवत्यथो ऽअष्टाक्षरा वा ऽइय
मग्रे ऽसृज्यत तद्यावतीय मग्रे ऽसृज्यत तावती मेवैना
मेतत् करोति ॥ १२ ॥ ६ ॥

॥ इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् [पू. १.] ॥

* 'बिभर्त्त्वित्येतत'—इति ष, क ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अत्र कात्यायनः— "आपो हि ष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे"–इति *। पलाशपर्णक्वथितमुदकं मृत्पिण्डे सिञ्चेत्। तत्र जलानां पर्णक्वथितत्वं विधत्ते— "पर्णकषायनिष्पक्वा एता इति। 'एताः' मृत्पिण्डे सिच्यमाना आपः 'पर्णकषायनिष्पक्वाः' पलाशपर्णक्वथिता भवेयुः। 'स्थेम्ने' स्थिरत्वायैव; केवलमृदोखादिकरणे विशरणं स्यात्। पर्णकषायेण पाकं प्रशंसति— "यद्वेव पर्णेति। सोमस्य पर्णत्वम्, सर्वौषध्यनुप्रवेशात्। सोमो नाम चन्द्रमाः। स हि 'एकम् अग्निरूपम्'। पूर्वं कुमारस्याग्नेरष्टौ रुद्रादिनामान्युक्तानि †, तेषाञ्चान्युदकौषध्यादीनि रूपाण्यप्युक्तानि ‡। तत्र महादेवेति सप्तमनाम्नः चन्द्रमा रूपम्; चन्द्रमास्तद्रूपमभवदित्युक्तम् §। तादृशाग्निरूपस्योपास्त्यै पर्णकषायपक्वाः कुर्यादित्यर्थः ॥ १ ॥

उपसेचनं समन्त्रं विधत्ते— "ता उपसृजत्यापो हि ष्ठेति ‖। अब्देवत्यं तृचं गायत्रम्। तृचस्यायमर्थः— हे 'आपः' आप्यते सर्वं कार्यं प्राणिनां याभिरित्यापः। आप्नोतेः करणे कर्त्तरि वा क्विप्, तत्सम्बोधनम्। 'मयोभुवः' मय इति सुखनाम, सुखस्य

---

* का० श्रौ० सू० १६. ३. २६ ।
†, ‡ १ प्र० ३ ब्रा० १० कण्डिका ( ४१ पृ० ) द्रष्टव्यानि ।
§ ४२ पृ० १३ पं० द्रष्टव्यम् ।
‖ वा० सं० ११. ५० ।

भावयितार: । 'स्था:' । 'हि' यस्मात् ता एवम्भूता यूयं 'न:' अस्मान् 'ऊर्जे' अन्नाद्याय 'दधातन' स्थापयत । "तप्तनप्तनथनाश्च"–इति * तस्य तनबादेश: । 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय, ज्ञानाय धत्तेति ॥ ॥ "यो व इति । 'व:' युष्माकं 'य:' 'शिवतम:' अतिशयेन सुखकर: 'रस:', 'तस्य' रसस्य 'न:' अस्मान् 'इह' लोके 'भाजयत' भागिन: कुरुत । 'उशती:' कामयमाना: 'मातर: इव' यथा मातर: पुत्रस्य हितं कामयन्ते, एवं यूय मिति ॥ ॥ "तस्मा अर मिति । 'व:' युष्मत्सम्बन्धिने 'तस्मै' रसाय 'अरं' शीघ्रम्, 'अलं' पर्याप्तं वा 'गमाम' गच्छेम । "क्रियार्थोपपदस्य"–इति † चतुर्थी । 'यस्य' रसस्य 'क्षयाय' अस्मासु निवासार्थं हि स्वयं 'जिन्वथ' प्रीणयथ । "जिवि: प्रीणनकर्मा ‡ । येन रसेन अस्मान् तर्पयथ, तं गच्छेम । हे 'आप:' 'न:' अस्मान् 'जनयथ' युष्मदीयभाक्त्वेनोत्पादयतेति तृचस्य सङ्ग्रहीतोऽर्थ: ॥

तिस्र ऋच:, तत्प्रतिपाद्या अब्देवताश्च प्रशंसति— "यां वै देवता मिति । "आपो हि ष्ठेत्यादिका 'ऋक्' 'यां देवताम्' 'अभ्यनुक्ता' अनुवदति, कर्त्तरि क्त प्रत्यय: । 'यां' देवतां 'यजु:'-मन्त्रोऽपि । यया ऋचा, येन यजुषा च, या देवता अभ्यनुज्ञाभिधानपुरस्सरं प्रतिपाद्यते, सैव प्रतिपाद्या देवता, सा च प्रतिपादिका ऋक्; यजुर्मन्त्रपदैरप्रतीयमाना देवता नोक्तेत्यर्थ: । अत: प्रतिपाद्यप्रतिपादकयोरभेदोपचारेण 'एता:'

* पा० सू० ७. १. ४५ ।

† पा० सू० २. ३. १४ ।

‡ धा० प० ५६४ धा० ।

आपः 'एव' देवताः, 'एषः' "आपो हि ष्ठाः"–इति 'विचः'। 'तत्' तस्माद् 'याः' 'अमूः' अदःशब्दो विप्रकृष्टप्रदेशवचनः। पूर्वं काण्डादौ अग्निसृष्टेरनन्तरम् अब्रादि पृथिव्यन्तं सृष्टि मुक्त्वा *, "सोऽकामयताभ्योऽद्भ्योऽधि प्रजनयेय मित्युपक्रम्य †, "तदिद मेक मेव रूपं" उक्तवान् भवति। एव मनुसन्धानार्थं मुदकफेनमृत्सिकताशर्कराश्मादिसृष्टिकरोति चयनादौ प्रतिपादितम् ‡ ॥ २ ॥

पिण्डे फेनासेचनं विधत्ते— "अथ फेनं जनयित्वेति §। कषायोदकेषु हस्तचालनेन फेन मुत्पाद्य पिण्डे तूष्णी मासिञ्चेत। "यदेव तत्फेन इत्यादेरय मर्थः। पूर्वं "सोऽकामयताभ्योऽद्भ्यो हीमां प्रजनयेयम्"–इत्युपक्रम्य, "तदिद मेक मेव रूपं समद्रव्यताप एव"–इति ‖, उदकलक्षणं रूप मुक्त्वा, "सोऽकामयत भूय एव स्यादिति तेपानः फेन मसृजत"–इति ¶ द्वितीयं फेनात्मकं रूपं सृष्ट्यात्मकम्। अत्र फेनस्य पिण्डे आसेचनेन पूर्वसृष्टफेनात्मकं द्वितीयं रूप मेव मृद्रूपेऽग्नौ निहितवान् भवति।

अथ सिक्तेऽग्नौ उदकेन मृदः सम्मिश्रणं विधत्ते— "अथ या मेव तत्र मृद मिति। तत्र 'यां मृदं' 'संयौति' जलेन सम्मिश्रयति 'सा मृत्'। एतदन्तरं सृष्टं मृदात्मकं तृतीयं रूपम्। तत्र ह्येव माम्नातम्— "अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्य-

---

* १ प्र० १ ब्रा० ११ कण्डीतः (४ प्र०) द्रष्टव्यम्।

†, ‡ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम्।

§ का० श्रौ० सू० १६. ३. १७।

‖, ¶ ५ पृ० ८ पङ्क्तितो द्रष्टव्यम्।

तेति *। "स श्रान्तस्तेपानो मृदᳪ शुष्काप मिति †, तेभ्यो वा एषः"–इति। 'एषः' अग्निः 'तेभ्यः' उदकफेनमृदादिभ्यः पूर्वं सृष्टः। अतो जलफेनमृदां सम्मिश्रणेन अग्न्यादिरूपेभ्यः पूर्वं सृष्टाग्नि मेव उत्पादितवान् भवति ॥ ३ ॥

अथ तत्राजलोमसम्मिश्रणं विधत्ते—"अथाजलोमैः संसृजतीति ‡। 'स्थेम्ने' स्थिरत्वाय। अजलोमं प्रशंसति—"यद्वेवाजलोमैरिति। यथा पूर्वं 'देवाः' 'एनम्' अष्टरूपात्मना गूढ मग्निं पुरुषादिपञ्चपशुभ्यः सकाशात् सम्भृतवन्तः, तथा 'अयं' यष्टा पिण्डेऽजलोमसंसर्गेण सर्वेभ्यः पुरुषादिभ्यः अग्नेः सम्पादन मित्याशङ्क्य अजपशौ सर्वं पशुरूप मुपपादयति—"अजे हि सर्वेषा मिति। तथा पुरस्तात् वायव्यैकपशुप्रस्तावे समाम्नातम्—"यद्वेवैतं पशु मालभत एतस्मिन् ह पशौ सर्वेषां पशूनाᳪ रूपम्, यत् तूपरो लप्सुदी तत् पुरुषस्य रूपम्"–इत्यादिना § प्रकारेण अजे सर्वपशुरूप माह—"अथ यल्लोमेति। लोमानि सर्वेषु पशुषु सन्ति; लोमलक्षणं रूपं सर्वसाधारण मित्यर्थः ॥ ४ ॥

लोमसम्मिश्रणं विधत्ते—"मित्रः संसृज्येति ‖। 'मित्रः' प्राणः, आदित्यो वा। 'पृथिवीं भूमिं च' लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वम्, भूमिशब्दवाच्यत्वं च दृश्यते—"तिस्रो भूमी-

---

* ४ पृ० १४ पङ्क्तितो द्रष्टव्यम्।

† ६ पृ० २ पङ्क्तितो द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ३. १८।

§ २ प्र० १ ब्रा० १५ क० ( ८० पृ० ११ पं० ) द्रष्टव्यम्।

‖ वा० सं० ११. ५३।

धारयन् त्रीँरुत द्यून्"–इति *। 'तिस्रः भूमीः' तिस्रः पृथिवीः अत्रैतयोरुभयोर्दर्शनात् चकारशब्देनापि त्रीन् लोकानित्यर्थः सिद्धः। 'ज्योतिषा' तेजसा। अत्र ज्योतिःशब्दोऽजलोमवचनः। अजस्याग्नेयत्वादजलोमभिः 'सह' 'सुजातं जातवेदसम्' सद्रूप मग्निं त्वाम् 'प्रजाभ्यः' 'अयक्ष्माय त्वा' रोगरूपपापापनुत्तये 'संसृजामि' सम्मिश्रं करोमि, अह मध्वर्युरिति ॥ ५ ॥

अथ शर्कराश्मायोरसचूर्णैः संसर्गं विधत्ते— "अथैतत् त्रयं पिष्ट मिति †। 'एतद्' वक्ष्यमाणं शर्करादित्रयं चूर्णितं भवेत्। "पिष्लृ सञ्चूर्णने"–इत्यस्य ‡ निष्ठा। पूर्वं शर्करादीनि त्रीणि रूपाणि सृष्टानि; "शर्करा मश्मान मयो हिरण्य मोषधिवनस्पत्य-सृजत"–इति हि प्रागाम्नातम् §, अधुना तेन त्रयेण संसर्गं तैरेव त्रिभीरूपैर्मृदं रूपवतीं कृतवान् भवति ॥ ६ ॥

मन्त्रं विधत्ते— "रुद्राः सꣳसृज्येति ‖। 'रुद्राः' 'पृथिवीं' पार्थिवं 'बृहज्ज्योतिः' अग्निलक्षणं पार्थिवं पिण्डं 'शर्कराश्मयोः', तैः 'संसृज्य' 'समीधिरे' उखायां दीपितवन्तः। रुद्राः उखाया मग्निं संवत्सरं धारितवन्तः। तेषां फल माह— "तेषा मिति। 'तेषां' रुद्राणाम् 'भानुः' दीप्तिः 'अजस्र इत्' अनुपक्षीणैव 'देवेषु' मध्ये 'शुक्रः' शुक्लवर्णो 'रोचते' दीप्यते ॥ ७ ॥

---

* ऋ० मं० २. २७. ८ ऋक्प्रथमचरण मिदम्।

† का० श्रौ० सू० १६. ३. १९। ‡ रु० प० १४ धा०।

§ १ प्र० १ ब्रा० १३ क० (६ पृ० ३ पं)। "शर्कराः सूक्ष्मकन्दु-काः, अयोरसो लोहरसो यत्ताप्यमानात् लोहात् पृथग् भवति कीट्ट इति लोके प्रसिद्धः, अश्मा दृढः पाषाणः"–इति कर्काचार्यः।

‖ वा० सं० ११. ५४।

"द्वाभ्यां सꣳसृजतीति । पूर्वं मजलोमैः संसर्गे एको मन्त्रः, शर्करादिसंसर्गे द्वितीयः, तावुभौ मिलित्वा प्रशंसति— "द्विपाद्यजमान इति ॥ ८ ॥

अथ मृदः सम्मिश्रणं समन्त्रं विधत्ते— "अथ प्रयौतीति * । तिसृभिर्ऋग्भिः † मृदं प्रकर्षेण 'यौति' पिण्डे सम्मिश्रयेत् । 'धीरैः' कर्मणोभिः मृद्भिः, 'वसुभिः' 'रुद्रैः' च 'संसृष्टाम्' । वसुपदेनाजलोमसंसर्गमन्त्रो "मित्रः संसृज्य"-इति विवक्षितः । रुद्रपदेन शर्करादिसंसर्गमन्त्रो "रुद्राः संसृज्य"-इति विवक्षितः । तन्मन्त्रद्वयप्रतिपाद्यैः वसुभिः रुद्रैश्च संयोजिताभ्यां कर्मभ्यां सम्पादितां 'मृदं' मृत्तिकां 'सिनीवाली' दृष्टेन्दुः, तदभिमानिदेवता 'हस्ताभ्यां' 'मृद्वीं' मृदुरूपां 'कृत्वा', 'तां' कर्मार्हां 'कृणोतु' करोतु ।

वसुरुद्रपदाभ्यां "मित्रः संसृज्य", "रुद्राः संसृज्य"-इति मन्त्रौ विवक्षितावित्याह— "यन्मित्रेण तद् वसुभिर्यद्रुद्रैरिति ॥ ९ ॥

"सिनीवालीति ‡ । एष द्वितीयो मन्त्रः । तस्यायमर्थः,— सिनीवाल्या योषात्वात् तदुचिता धर्मा उच्यन्ते— "सुकपर्देत्यादि । 'सुकपर्दा' कपर्दः केशसंयमनवेणिः, साधुवेणियुक्ता । 'सुकुरीरा' कुरीरो मुकुटः, तद्वती । "स्वौपशा' औपशो नाम जघनभागः, सुजघना । यद्वा, उपशेते शयनं करोति यैरवयवविशेषैः ते सर्वेऽप्युपशाः, तेषां समूहः औपशः, स्वौप-

* का० श्रौ० सू० १६. ३. २० ।

† वा० सं० ११. ५५, ५६, ५७ ।

‡ वा० सं० ११. ५६ ।

शर्वती * । या एवंविधा सिनीवाली, सा । हे 'अदिते', हे 'महि' महीरूपे ! 'तुभ्यं' 'हस्तयोः' 'उखां' 'दधातु' स्थापयतु । "योषा वै सिनीवाली"-इत्यादिना योषात्वसमर्थनम् ॥ १० ॥

"उखां कृणोत्विति † । अयं तृतीयो मन्त्रः । तस्याय मर्थः,— 'अदितिः' अखण्डनीया, एतन्नामधेया देवता 'बाहुभ्यां' 'शक्त्या' सामर्थ्येन 'धिया' बुद्ध्या च 'उखां' 'कृणोतु' करोतु । 'यथा माता, पुत्रं' 'उपस्थे' स्वोत्सङ्गे 'बिभर्त्ति', एवं सा अदितिः 'गर्भे' उखाभ्यन्तरे 'अग्निम्' 'आबिभर्त्तु' सर्वतो धारयतु 'इति' ॥ ११ ॥

अभिमन्त्रणमन्त्रगतत्रित्वसङ्ख्यां त्रिवृदन्यात्मना स्तौति— "त्रिभिः प्रयौति त्रिवृदिति । पूर्वं मजलोमशर्करादिसंसर्गे मन्त्रौ द्वौ, ताभ्यां सहोक्तसङ्ख्यां प्रशंसति— "द्वाभ्यां संसृजति, तत् पञ्च पञ्चचितिकोऽग्निरिति । "पञ्चर्त्तव इति । "हेमन्तशिशिरयोः समासेन"-इत्युक्तम् ‡ । अग्नेः संवत्सरात्मकत्वात्, अग्नेश्च पञ्चसङ्ख्यया तद्रूपां मृदं सम्पादितवान् भवति, अथोदकसेचने "आपो हि ष्ठेत्याद्यास्तिस्रः, ताभिः सहैतां पञ्चसङ्ख्यां प्रशंसति— "त्रिभिरप उपसृजति तदष्टाविति । अग्नेर्गायत्रत्वं सङ्ख्यासामान्यात् । तथाचान्यत्राम्नातम्— "यद्वेवाष्टावग्निरूपाणि अष्टाक्षरा गायत्री, तस्मादाहुर्गायत्रोऽग्निरिति"-इति § ।

---

* अशुद्ध' पद मिदं स्यात् सायणस्य ; "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः"—इति वैयाकरणसिद्धान्तात् ।

† वा० सं० ११. ५७ ।

‡ ऐ० ब्रा० १. १. १ ।

§ १ प्र० ३ ब्रा० ६ क० ( ४१ पृ० ) द्रष्टव्यम् ।

प्रकारान्तरेणाष्टसङ्ख्यां प्रशंसति—"अथो अष्टाक्षरेति। पूर्वं प्रथमाध्याये तृतीयब्राह्मणे प्रजापतिरेक एव सन् अस्यां पृथिव्यां बहुधा प्रजायेयेति विचार्य उदकफेनमृत्सिकताशर्कराश्मायोहिरण्याष्टौ सृष्ट्वाचरत्— "तद् यदसृज्यताक्षरत् तद्यदक्षरत् तस्मादक्षरम्, अष्टौ कृत्वोऽक्षरत् सैवाष्टाक्षरा गायत्र्यभवत्"—इति *। यथा 'यावती' अष्टाक्षरा 'अग्रे' पूर्वम् 'असृजत', तथा अग्निः "आपो हि ष्ठाः"—इत्यादिभिर्मन्त्रैर्मृत्पिण्डे उदकसेचनाजलोमशर्करादित्रयसंसर्गमिश्रणैः 'तावतीम्' तत्सङ्ख्याम् 'एनां' सर्वं कृतवान् भवतीति ॥ १२ ॥ ६ [ ५. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

———

( अथ द्वितीयं ब्राह्मणम् . )

अथ मृत्पिण्डमपादत्ते। यावन्तं निधयेऽलं मन्यते मखस्य शिरोऽसीति यज्ञो वै मखस्तस्यैतच्छिर आहवनीयो वै यज्ञस्य शिर आहवनीयमु वा ऽएतं चेष्यन् भवति तस्मादाह मखस्य शिरोऽसीति ॥ १ ॥

* १ प्र० ३ ब्रा० ६ कं० ( ४० पृ० ८ पं० ) द्रष्टव्यम् ।

यद्देवाह मखस्य शिरोऽसीति । जायत एष एतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाता इति ॥ २ ॥

तं प्रथयति । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वदित्ययꣳ ह्येष लोको निधिस्त मेतद्वसवो गायत्रेण छन्दसाकुर्व्वꣳस्तथैवैन मय मेतद् गायत्रेण छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यथो प्रतिष्ठितासीति पृथिव्यसीति पृथिवी ह्येष निधिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै वसव इमं लोकं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमान इमं लोकं कृत्वा तस्मिन्नेता माशिष माशास्ते तां प्रादेशमात्रीं कृत्वाथास्यै सर्व्वतस्तीर मुन्नयति ॥ ३ ॥

अथ पूर्व्व मुद्धि मादधाति । रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदित्यन्तरिक्षꣳ ह्येष उद्धिस्त मेतद् रुद्रास्त्रैष्टुभेन छन्दसा कुर्व्वꣳस्तथैवैन मय मेतत् त्रैष्टुभेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यथो प्रतिष्ठिता-

सीत्यन्तरिक्ष मसीत्यन्तरिक्षꣳ ह्येष उखिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै रुद्रा अन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशासत तथैवैतद्यजमानो ऽन्तरिक्षं कृत्वा तस्मिन्नेता माशिष माशास्ते ताꣳ संलिप्य सꣳस्रुत्याग्र * ॥ ४ ॥

अथोत्तर मुखि मादधाति। आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्वदिति द्यौर्ह्येष उखिस्त मेतदादित्या जागतेन छन्दसाकुर्वंस्तथैवैन मय मेतज्जागतेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतद्यथो प्रतिष्ठितासीति द्यौरसीति द्यौर्ह्येष उखिर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वा ऽआदित्या दिवं कृत्वा तस्या मेता माशिष माशासत तथैवैतद्यजमानो दिवं कृत्वा तस्या मेता माशिष माशास्ते ॥ ५ ॥

अथैतेन चतुर्थेन यजुषा करोति। विश्वे

* 'सꣳस्रुत्या'—इति क, ग।

त्वा देवा वैश्वानराः खनन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिति दिशो ह्येतद्यजुरेतद्वै विश्वे देवा वैश्वानरा एषु लोकेषु खाया मेतेन चतुर्थेन यजुषा दिशोऽदधुस्तथैवैतद्यजमान एषु लोकेषु खाया मेतेन चतुर्थेन यजुषा दिशो दधात्यङ्गिरस्वदिति प्राणो वा ऽअङ्गिरा ध्रुवासीति स्थिरासीत्येतदथो प्रतिष्ठितासीति दिशोऽसीति दिशो ह्येतद्यजुर्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानायेत्येतद्वै विश्वे देवा वैश्वानरा दिशः कृत्वा तास्वेता माशिष माशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वेता माशिष माशास्ते ॥ ६ ॥

तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादेषां लोकाना मन्तरतश्च बाह्यतश्च दिशोऽपरिमित मेतेन करोत्यपरिमिता हि दिशः ॥ ७ ॥

तां प्रादेशमात्री मेवोर्ध्वां करोति । प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोति ॥ ८ ॥

सा यदि व्यर्षीयसी प्रादेशात्स्यात्। एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन व्यर्षीयसीम् ॥ ९ ॥

स यद्येकः पशुः स्यात्*। एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा व्वीर्यं वा ऽइषुर्व्वीर्यसम्मितेव तन्नवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥ १० ॥

अथ तिरश्चीꣳ रास्नां पर्यस्यति। दिशो हैव सैतद्दै देवा इमांल्लोकानुखां† कृत्वा दिग्भिरदृꣳहन् दिग्भिः पर्यतन्वंस्तथैवैतद्यजमान इमांल्लोकानुखां‡ कृत्वा दिग्भिर्दृꣳहति दिग्भिः परितनोति ॥ ११ ॥

ता मुत्तरे व्वितृतीये पर्यस्यति। अत्र हैषां लोकाना मन्ताः समायन्ति तद्वैनांस्तद् दृꣳहति§ ॥ १२ ॥

---

* 'स्यात'—इति ग, घ।

† 'इमाꣳल्लोका०'—इति ग, घ।

‡ 'इमाꣳल्लोका०'—इति ग, घ।

§ 'दृꣳहति'—इति ख।

आदित्यै रास्नासीति। व्वरुण्या वै यज्ञे रज्जुर्-
वरुण्या मेवैना मेतद्रास्नां कृत्वा पर्यस्यति * ॥ १३ ॥

अथ चतस्र ऊर्द्ध्वाः करोति। तूष्णी मेव दिशो
हैव ता एतद्वै देवा इमांल्लोकानुखां† कृत्वा
दिग्भिः सर्व्वतो ऽदृꣳहंस्तथैवैतद्यजमान इमां-
ल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो ऽदृꣳहति॥ १४ ॥

ता एता एतस्यै भवन्ति। एतद्वा ऽएता एता
मस्तभ्नुवंस्तथैवैना मेतत् स्तभ्नुवन्ति तद्यदत ऊर्द्ध्वं
तदेतया तिरश्च्या दृढ मथ यदतोर्व्वाक्तद्दे-
ताभिः॥ १५ ॥

तासा मग्रेषु स्तनानुन्नयन्ति। एतद्वै देवा
इमांल्लोकानुखां कृत्वैतै स्तनैः सर्व्वान् कामानदु-
ह्रत तथैवैतद्यजमान इमांल्लोकानुखां कृत्वैतै
स्तनैः सर्व्वान् कामान् दुह्रे ‡॥ १६ ॥

सैषा गौरिव §। इमे वै लोका उखेमे लोका

---

* 'पर्यस्यति'—इति ख।

† 'इमाꣳल्लोका०'—इति ग, घ।

‡ 'दुहे'—इति ग, 'दुह्रे'—इति घ।

§ 'गौरिव'—इति ग, घ।

अदीनाया देवमातुः 'रास्ना' रशना 'असि' 'इति'। रास्ना-पदस्याभिप्राय माह— "वरुण्या वै यत्र इति। पाशस्य वरुणो देवतेति प्रागुक्तम् *; रास्ना 'अवरुण्या' अपाशत्वात् ॥ १३ ॥

अन्याश्चतस्रो वर्त्तीर्विधत्ते— "अथ चतस्र ऊर्द्धा इति। 'तूष्णीम्'-इति मन्त्रप्रतिषेधः। एताः वर्त्तयः उखायाश्चतुर्दिशं कार्याः। तथाच सूत्रम्— "ऊर्द्धास्तूष्णीं प्रतिदिशं चतस्रो-ऽपरा वर्त्तीः प्राप्ताः"-इति †। कण्ठगतवर्त्तिपर्यन्तं प्रतिदिशं चतस्रः तूष्णीं कार्या इत्यर्थः। रास्नाचतुष्टयं दिगात्मना स्तूयते— "दिशो हैव ता इत्यादिना। ऊर्द्धानां चतसृणां तृतीयोत्तर-कृतरास्नापर्यन्तम् ॥ १४ ॥

तां विधत्ते— "ता एता एतस्यै भवन्तीति। "तद्यदत ऊर्द्ध्व-मिति। उत्तरवर्त्तिकरणेन अतो लोका ऊर्द्धस्थितं सर्वं दृढ़ं भवति। उखाया लोकत्रयात्मकत्वात् दार्ढ्यार्थं वर्त्तयः कर्त्तव्या इति तात्पर्यम् ॥ १५ ॥

अथोर्द्धवर्त्तीना मन्ते स्तनोन्नयनं विधत्ते— "तासा मग्रेषु स्तनाविति ‡। स्तना इव 'स्तनाः', तदाकाराः कुर्यादित्यर्थः। "एतद्वै देवा इत्यादेः कण्डिकात्रयस्याय मर्थः,— पूर्वं देवा लोकत्रयात्मिकां गोरूपा मुखां कृत्वा तस्याः ऊधःस्थानीयायाः बिलतृतीयभागे कृतायास्तिरश्चीनाया रास्नायाः समीपे वर्त्तिरास्ना-ग्रेषु चतुरः स्तनान् कृत्वा, तेभ्यः सर्वान् कामान् दुग्धवन्तः,

---

* पुरस्तात् (२ भा० २७३ पृ० ३ पं०) द्रष्टव्यम्।

† का० श्रौ० सू० १६. ३. ३१।

‡ का० श्रौ० सू० १६. ४. १।

तथायं यष्टापि स्वाभिलषितान् कामान् दोग्धुं चतुरः स्तनान् कुर्यादिति। गोरुधोऽपि विहृतीयभागे भवति, सापि गौश्चतुस्स्तनीति तत्साम्यम् ॥ १६, १७, १८ ॥

चतुस्स्तनपक्षं सिद्धान्तयितुं शाखान्तरानुसारेण पक्षान्तरमनुवदति— "तां हैक इति *। तथाच तैत्तिरीयाः— "द्विस्तनां करोति द्यावापृथिव्योर्दोहाय, चतुस्तनां करोति पशूनां दोहाय, अष्टस्तनां करोति छन्दसां दोहाय"—इति †। द्विस्तनपक्षे एकस्मिन्नेव वर्त्यग्रे क्रियते स्तनद्वयम्, अष्टस्तनपक्षे एकैकस्मिन् वर्त्यग्रे द्वौ द्वाविति। तत्पक्षद्वयं दूषयति— "न तथा कुर्यादिति। 'ये' पशवो 'गोः' पशोरपेक्षया 'कनीयस्तनाः' अल्पस्तनाः, 'ये' च 'भूयस्तनाः'; अल्पभूयस्त्वे गवापेक्षयेति वक्तुं गोरित्युक्तम्। सा हि चतुस्तना। स्तनचतुष्टयादर्वाक्स्तना भूयस्तना वा ये पशवः, ते 'अनुपजीवनीयाः' अभोग्याः भवन्ति। यदि 'एनाम्' उखां द्विस्तना मष्टस्तनां वा कुर्यात्, तर्हि अनुपजीवनीयां भोगानर्हा मेव कुर्युः, न तु गां भोग्याम्। अभोग्या मेव दर्शयति— "शुनी मिति। अष्टस्तनकरणे 'शुनीं' शुनः स्त्रियम्, द्विस्तनकरणे 'अविं वडवां वा' कृतवन्तो भवन्ति। ता यथा भोग्या न भवन्ति, एवं द्विस्तना अष्टस्तना वा उखा न भोगार्हेति तथाकरण मयुक्त मित्यर्थः ॥ १८ ॥

विधत्ते— "अथास्ये बिल मिति ‡। 'बिलं' कण्ठविवरम्

---

* का० श्रौ० सू० १६. ४. २।

† तै० सं० ५. १. ६. २६—२८।

‡ का० श्रौ० सू० १६. ४. ३।

'अभिपद्यते' गृह्णाति। मन्त्रं विधत्ते— "अदितिष्ट इति *। हे उखे! 'ते' 'बिलम्' अदितिः गृह्णातु। छान्दसो लोडर्थः †। अदितिर्वाग्रूपत्वेन स्तूयते— "वाग् वा अदितिरिति। "निष्ठापयतीति। निष्ठितां परिसमाप्तां करोति ॥ २० ॥

उखानिधानं समन्त्रं विधत्ते— "तां परिगृह्येति ‡। 'परिगृह्य' दृढां गृहीत्वा निदध्यात् 'ताम्' उखाम्।

मन्त्रस्याय मर्थः,— 'सा' अदितिः 'मही' भूरूपां महतीं वा 'मृन्मयीं' मृद्विकारभूताम् 'अग्नये' अग्न्यर्थं 'योनिं' स्थानम् उखां 'कृत्वाय' "क्त्वो यक्" § कृत्वा 'पुत्रेभ्यः' अप्रयच्छत्, पक्वां कुर्वन्तु इति। अतो हेतोः 'अदितिः स्वपुत्रेभ्यो देवेभ्यः' प्रायच्छदिति सम्बन्धः। प्रयतेः पञ्चमलकारे रूपम् ॥

मन्त्रं प्रतिपाद्य मनूद्य व्याचष्टे— "कृत्वाय सा मही मुखामिति ‖ ॥ २१ ॥

उखा एकैव करणीयेति सिद्धान्तयितुं केषाञ्चित् पक्षं सोपपत्तिक मनुवदति— "ता हैके तिस्रः कुर्वन्तीति ¶। 'ताः' उखाः, 'एके' आचार्याः 'तिस्रः' कुर्वन्ति। तत्र युक्तिः— "त्रयो वा इमे लोका इति। उखाः खलु लोकात्मिकाः, 'लोकाः' च 'त्रयः'; अतो लोकसङ्ख्यया उखाः कर्त्तव्याः 'इति' 'वदन्तः'

---

* वा० सं० ११. ५६. २।

† पा० ८. २. ३२ सू० १ वा०।

‡ का० श्रौ० सू० १६. ४. ४।

§ पा० सू० ७. १. ४७।

‖ वा० सं० ११. ५६. ३।

¶ का० श्रौ० सू० १६. ४. ५।

एके तिस्रः कुर्वन्तीति सम्बन्धः। युक्त्यन्तर माह— "अथो अन्योऽन्यस्या इति। यदि एका भिद्येत, तर्हि अन्यस्या मग्निं भरिष्यामः। "यदीतराथेतरस्या मिति। अतोऽन्योऽन्यस्यै प्रायश्चित्त्यर्थं तिस्र उखाः कर्त्तव्या इत्यर्थः।

तं पक्षं दूषयति— "यो वा एष निधिरित्यादिना। निधिरेकः, अग्निहृदयश्च, भूलोकादि त्रयम्; दिशश्च सर्वं जगत्; न ततोऽतिरिक्त मस्ति। अतो लोकत्रयात्मिकाया मुखायां कृतायाम् *, 'यद्' यदि अन्यदुखाद्वयम् 'उपाहरेत्' सम्पादयेत्, तर्हि 'तत्' लोकादिकम् अति-'रेचयेत्'; 'यद् यज्ञे ऽतिरिक्तं क्रियते', 'तत्' अतिरिक्तं कर्म 'यजमानस्य द्विषन्तम् एवातिरेचितवान् भवति। यतो न्यून मतिरिक्तञ्च कर्मदोषावहे मेव; अतो न्यूनाधिकदोषौ परिहार्यौ। तस्मात् लोकत्रयात् दिग्भ्यश्चातिरिक्तस्य वस्तुनः करणं न युक्त मिति तात्पर्यम्।

यद्युखैका स्यात्, सा यदि भिद्येत, तर्हि किं मन्यकरणं तूष्णीं वावस्थानम्? अकरणे च कथ मुख्याग्निधारणम्, असत्यग्निधारणे कथं चयनाख्यं कर्म सेत्स्यतीत्याशङ्क्य, तस्य सर्वस्योत्तरं ब्राह्मणे वक्ष्यत इत्याह— "यदु भिद्येत प्रायश्चित्तिः, उत्तरस्मिन् तदन्वाख्यान इति। 'अन्वाख्याने' ब्राह्मणे

* "अथोखा मादत्ते द्यौरसि पृथिव्यसीति। उपस्तौत्येवैना मेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति"- इत्येतस्य सायणीयं भाष्य मिदम्— 'अध्वर्योः समन्त्रकं स्थाल्यादान विधत्ते— "अथोखा मिति। उखाया द्युपृथिव्यात्मकत्वस्य कदाचिदप्यसम्भवात् उपस्तुतिमात्र मिद मित्याह— "उपस्तौत्येवेति। सापि किमर्थेत्यत आह— "महयत्येवेति। स्तुत्वा पूजनं लोके प्रसिद्धम्"—इति १ भा० ४७० पृ० १पं०

तत्र, वक्ष्यत इति। तत्र ह्येवम्— "यद्येवोखा भिद्येत, याभिन्ना नवा स्यात्ससुरविली स्यात्, तस्या मेनं पर्यावपेत्"— इत्यादि * ॥ २२ ॥ ७ [ ५. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति षष्ठकाण्डे तृतीयः प्रपाठकः समाप्तः † ॥

---

* उत्तरत्र ( ६ अ० ४ ब्रा० ८ क० ) द्रष्टव्यम् ।

† इतउत्तरं मिह 'कण्डिका: ११४'--इति क. 'कण्डिकासङ्ख्या ११४'—इति ख, ग, घ। तत्र १ ब्रा० २६ क०, २ ब्रा० १२ क०, ३ ब्रा० १० क०, ४ ब्रा० १० क०, ५ ब्रा० २२ क०, ६ ब्रा० १२ क०, ७ ब्रा० २२ क०। एतासां सङ्कलनयास्मिन् प्रपाठके समस्तब्राह्मणेषु ११४ कण्डिका: सम्पन्ना इति ध्रुवम् ॥

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

पञ्चमाध्याये तृतीयं ब्राह्मणम्।

॥ हरिः ॐ ॥

तस्या एतस्या अषाढां पूर्व्वां करोति। इयं वा ऽअषाढेय मु वा ऽएषां लोकानां प्रथमासृज्यत ता मेतस्या एव मृदः करोत्येषाᳬ ह्येव लोकाना मियं महिषी करोति महिषी हीयं तद्येव प्रथमा व्वित्ता सा महिषी ॥ १ ॥

पादमात्री भवति। प्रतिष्ठा वै पाद इय मु वै प्रतिष्ठा त्र्यालिखिता भवति त्रिवृद्धीयम्* ॥ २ ॥

अथोखां करोति। इमांस्तल्लोकान् करोत्यथ व्विश्वज्योतिषः करोत्येता देवता अग्निं व्वायु मादित्य मेता ह्येव देवता व्विश्वं ज्योतिस्ता

* 'त्रिवृद्धीयम्'—इति ग, घ।

एतस्या एव मृदः करोत्येभ्यस्तल्लोकेभ्य एतान् देवान्निर्मिमीते यजमानः करोति आलिखिता भवन्ति अिवृतो ह्यते देवा इत्यधिदेवतम् * ॥ ३ ॥

अथाध्यात्मम्। आत्मैवोखा वागषाढ़ा तां पूर्व्वां करोति पुरस्ताद्धीय मात्मनो वाक्तामेतस्या एव मृदः करोत्यात्मनो ह्येवेयं वाङ्महिषीं करोति महिषी हि वाक् आलिखिता भवति बेधाविहिता हि वागृचो यजूंषि सामान्यथो यदिदं त्रयं वाचो रूप मुपांश्व न्तरा मुच्चैः † ॥ ४ ॥

अथोखां करोति। आत्मानं तत् करोत्यथ विश्वज्योतिषः करोति प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजनन मेवैतत् करोति ता एतस्या एव मृदः करोत्यात्मनस्तत् प्रजां निर्मिमीते यजमानः करोति यजमानस्तदात्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति

---

* '०देवतम्'—इति ग, घ।

† 'मुच्चैः'—इति ग, घ।

आलिखिता भवन्ति त्रिवृद्धि: प्रजाति: पिता माता पुत्रोऽथो गर्भ उल्वं जरायु ॥ ५ ॥

ता एता यजुष्कृतायै करोति । अयजुष्कृताया ऽइतरा निरुक्ता एता भवन्त्यनिरुक्ता इतरा: परिमिता एता भवन्त्यपरिमिता इतरा: ॥ ६ ॥

प्रजापतिरेषोऽग्नि: । उभयम्वेतत् प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ या अयजुष्कृतायै यदेवास्यानिरुक्त मपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति य एवं विद्वानेतदेवं करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य: * ॥ ७ ॥

अथैनां धूपयति । श्लेम्ने न्वेवाथो कर्म्मण: प्रकृततायै यद्वेव धूपयति शिर एतद्यज्ञस्य यदुखा प्राणो धूम: शीर्षंस्तत् प्राणं दधाति ॥ ८ ॥

अश्वशकैर्धूपयति । प्राजापत्यो वा ऽअश्व:

---

* 'प्रायश्चित्तिभ्य:'—इति क, ख ।

प्रजापतिरग्निर्नो वा आत्मात्मानꣳ हिनस्त्यहिꣳसायै तद्वै शश्वैव तर्हि अग्धं यातयाम तथो ह नैवाश्वꣳ हिनस्ति नेतरान् पशून् * ॥ ९ ॥

वसवस्त्वा धूपयन्तु । गायत्रेणच्छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेनच्छन्दसाङ्गिरस्वद् विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयत्वित्येताभिरेवैनामेतद्देवताभिर्धूपयति † ॥ १० ॥

सप्ताश्वशकानि भवन्ति । सप्त यजूꣳषि सप्ततय्य एता देवताः सप्त शीर्षन् प्राणा यदु वा ऽअपि बहु कृत्वः सप्त-सप्त सप्तैव तच्छीर्षण्येव तत् सप्त प्राणान् दधाति ॥ ११ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [५. ३.] ॥

---

* 'पशून्'—इति ग, घ ।

† अत्र 'गायत्रेणच्छन्दसा', 'त्रैष्टुभेनच्छन्दसा', 'जागतेनच्छन्दसा', 'आनुष्टुभेनच्छन्दसा'—इत्येवं पाठेन भवितव्यम् "छे च"—इति (६. १. ७३.) पाणिनिशासनात्, अस्त्येवात्र संहितेति । पूर्वत्राप्येवमेव बोध्यम् (२६०, २६१, २६२ पृ०) ।

अथ संस्कृताया मृदः सकाशात् उखानिर्माणात् पूर्वं मषाढ़ाख्येष्टकाया निर्माण माह—"तस्या एतस्या अषाढां पूर्वां करोतीति *। 'अषाढां' अषाढलिङ्गकमन्त्रोपधेया मिष्टकाम्। "तद्वानासा मुपधानो मन्त्र इतीष्टकासु लुक् च मतोः"-इति † मतोर्लुक्। 'पूर्वाम्' उखातः पूर्वभाविनीं कुर्यात्। पूर्वभावित्व मर्थवादमुखेन दर्शयति— "इयं वा अषाढेति। 'अषाढा'-इति या अस्ति, सा 'इयम् वै' पृथिवी खलु ; तद्विकारत्वात्। अस्त्वेवम्, प्राथम्ये किं मायात मित्यत आह— "इय मु वा एषां लोकानां प्रथमासृज्यतेति। पृथिव्या इतरलोकापेक्षया प्राथम्यं प्रसिद्धम्। अस्या मृदन्तरप्रकृतित्वप्रसक्तिं वारयति— "ता मेतस्या एवेति। 'एतस्याः' उक्तसंस्कारोपेताया मृदः सकाशादित्यर्थः। तत्रोपपत्ति माह— "एषां ह्येव लोकाना मिय मिति। यतः 'इयम्' 'एषां' प्रसिद्धानां लोकानां सम्बन्धिनी, अत इत्यर्थः। अय मभिप्रायः,— उखाया लोकत्रयात्मकत्वेन प्रतिपादनात् तस्या या प्रकृतिभूता मृत्, तदीयाया एवाषाढाया अपि निर्माणे सत्येव तदीयत्वं भवतीति।

अस्या उखावद् यजमानकर्तृत्वं प्राप्त मित्याह— "महिषी करोतीति। प्रथमोढा स्त्री महिषी, 'इयम्' इष्टकापि 'हि' यस्मात् 'महिषी'; प्रथमतो निर्माणात्, अतोऽस्यां महिषीकर्त्तव्यता युक्ता। भवत्वेवं यद्येषां महिषी स्यात्, सैव कुत इत्यत आह— "तद् येव प्रथमा वित्ता, सा महिषीति। 'वित्ता' लब्धा ॥ १ ॥

* का० श्रौ० सू० १६. ४. ६।

† पा० सू० ४. ४. १२५।

तस्या इयत्ता माह— "पादमात्री भवतीति। अत्र महिषी-शब्दस्य कर्त्तृत्वेन सम्बन्धात् तत्पादमात्रीति न मन्तव्यम्; सूत्रकारेण यजमानपादमात्रीति विशेषितत्वात् *। उक्तप्रमाणं प्रशंसति— "प्रतिष्ठा वै पाद इय मु वै प्रतिष्ठेति। पादाभावे पतनदर्शनात् पादस्य प्रतिष्ठात्वम्। इयं पृथिवी सर्वाधारत्वात् प्रतिष्ठा, अतस्तद्विकारभूताया अपीष्टकायाः प्रतिष्ठात्मकपाद-प्रमाणत्वं युक्त मित्यर्थः। अस्याश्चिह्नत्वेन खल्वत्र यं कर्त्तव्य मिति विधत्ते— "त्र्यालिखिता भवति त्रिवृद्धीय मिति। अर्द्ध-चन्द्राकाराभिः तिसृभिः रेखाभिर्युक्ता भवेत्। 'त्रि'-शब्देन "त्रयो वा इमे त्रिवृतो लोकाः"-इत्यादि † श्रुत्यन्तरप्रसिद्धिः द्योतिता। अस्यास्त्रिवृत्त्वं पृथिव्यप्तेजोभिस्त्रिवृत्कारणाद्वा, सिकता-मृत्तिकापाषाणैस्त्रिभिः संहतरूपत्वाद्वा द्रष्टव्यम्। अत्र सूत्रम्— "अषाढां करोति महिषी प्रथमविधा तदाख्या, यजमानपाद-मात्रीं त्र्यालिखिताम्"-इति ‡ ॥ २ ॥

उखाया अषाढानन्तरकर्त्तव्यता माह— "अथोखा मिति। 'अथ' अषाढानन्तरम् 'उखां' प्रागुक्तलक्षणां स्थालीं पश्चात् कुर्यात्। ततोखाकरणेनेमां स्त्रींल्लोकान् तनवान् भवति। "यजमान उखां करोति मृद मादायेत्यादि § सूत्रम् ॥

अथ विश्वज्योतिर्नामधेयानां तिसृणा मिष्टकाना मुखानन्तर-

---

* "यजमानपादमात्रीं त्र्यालिखिताम्"—इति का० श्रौ० सू० १६. ३. २२। 'महिषीपादमात्री माभूदिति यजमानग्रहणम्'—इति तत्र वृत्तिः।

† ऐ० ब्रा० ४. २. ३ द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ३. २१, २२।

§ का० श्रौ० सू० १६. ३. २३।

कर्त्तव्यतां विधत्ते— "अथ विश्वज्योतिषः करोतीति *। पूर्व-वदेतस्मिन्कर्मण्येतदुपधेयत्वात् विश्वज्योतिषनाम आसां द्रष्टव्यम्। एतासां निर्माण मेवाग्निवाय्वादित्यानां निर्माण मित्याह— "एता देवता अग्निं वायु मादित्य मेता ह्येव देवता विश्वं ज्योति-रिति। 'एता देवताः' इत्यस्य व्याख्यानम्— 'अग्निम्, वायुम्, आदित्यम्'-इति। विश्वद्योतकत्व मग्न्यादीनां प्रसिद्ध मिति 'हि'-शब्दो द्योतयति। पूर्ववदासा मभ्युखार्थं संस्कृतमृत्तिकैव करण मित्याह— "ता एतस्या एव मृदः करोतीति। एतत् प्रशंसति— "एभ्यस्तल्लोकेभ्य एताम् देवाम् निर्मिमीत इति। उखाया लोकत्रयात्मकत्वस्योक्तत्वात् तदनन्तरं तदीयमृदा आसां निर्माण मेव तदधिष्ठातृदेवतानिर्मित मित्यर्थः। "यजमानः करोतीति, "त्र्यालिखिता भवन्तीति † वाक्यद्वयं स्पष्टम्।

देवानां त्रित्वं द्युभूम्यन्तरिक्षस्थानभेदेन, "इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः"-इति ‡ सूत्रम्। पृथग्लक्षणाभिधानम्, द्वितीयतृतीयानां क्रमपरिज्ञानार्थम्; तेन क्रमेणोपधानं यथा स्यादिति। "इत्यधिदैवत मिति। 'इति'-शब्दः प्रतिपादितप्रकारवचनः। 'अधिदैवतम्' देवता अधिकृत्य प्रवृत्तम्, उक्त मित्यर्थः॥ १॥

'अथ' वक्ष्यमाणम् 'अध्यात्मम्' आत्मान मधिकृत्य प्रवर्त्त-मानम्, 'वक्ष्यते'-इति शेषः। प्रतिज्ञात मर्थं दर्शयति— "आत्मैवोखा वागषाढेति। उखायाः प्राधान्यादात्मत्वम्। आषा-

* का० श्रौ० सू० १६. ४. ६।

† २७६ पृ० २ पं० द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ४. ६ (तु शब्दवार्जं)।

नादिषु आत्मनोऽपि पूर्वं वाचः स्वरूप मस्ति; 'पुरस्तात्' प्रवृत्तेः प्रसिद्धि माह 'हि'-शब्दः। न केवलं वैदिक्या एव वाचस्त्रैविध्यम्, अपि च 'यदिदं' सर्वं लौकिकार्थमात्रं 'वाचः' 'रूपं' स्वरूप मस्ति, तत् 'त्रयं' त्रिविधम्— "उपांशु व्यन्तरा मुच्चै-रिति। व्यन्तरा मिति, उपांशूच्चैः स्वरमध्यवर्त्तिनीं वाचं वदन्ति प्राणिनः, तदेकरूप मित्यर्थः। सुगम मन्यत् ॥ ४ ॥

"अथोखां करोतीत्यादिकम्, अधिदैवतवद् व्याख्येयम्। उखाया आत्मरूपत्वात् तदनन्तरं तस्या एव मृदो विश्वज्योतिषा मुत्पादने प्रजोत्पादन मित्यर्थः। 'प्रजननं' प्रकृष्टं जननं जन्म यस्मात् प्रजननम्, प्रजा मित्यर्थः। 'अनन्तर्हिताः' व्यापारान्तरेणा-व्यवहिताः कुर्यात्। उखायाः विश्वज्योतिषाञ्च मध्ये व्यवधानं न कुर्यादिति भावः। तत्रानन्तर्हितत्व मुखातः प्राङ् निष्पा-दनेऽपि सम्भवतीत्याह— "उत्तराः करोतीति। 'उत्तराः' उखाया उत्तरभाविनीः कुर्यात्। 'अथो गर्भं उल्बं' गर्भस्यान्तर-वेष्टनम्, 'जरायु' बहिर्वेष्टनम् ॥ ५ ॥

यदेतासां मन्त्राहृतमृदोत्पन्नत्वम्, यच्चाषाढादिनामवत्त्वम्, यदपि पादमात्रादिपरिमाणवत्त्वम्, तदेतत् सर्वं मितरेष्टकानां वैलक्षण्येनानूद्य स्तौति— "ता एता यजुष्कृतायै करोतीत्या-दिना। 'यजुः' मन्त्रः, तेन कृता निष्पादिता 'यजुष्कृता'। षष्ठ्यर्थे चतुर्थी, तस्या इत्यर्थः। 'अयजुष्कृतायै' अतथाभूताया मृदः 'इतराः' अषाढादिव्यतिरिक्ताः, कुर्यात्, 'एताः अनि-रुक्ताः' अषाढाः विश्वज्योतिषो निर्वचनं प्राप्ताः * ॥ ६ ॥

---

* 'विश्वशब्दोपेतैश्च मन्त्रैरुपधेया विश्वज्योतिषः। ताश्च तिस्रः— प्रथममध्यमोत्तमचितिषु उपदध्यात्'—इति तै० 'सं० ४. ४. ६ सा० भा०।

"प्रजापतिरेषोऽग्निरिति । 'एषः' चयनलक्षणः 'अग्निः' 'प्रजापतिः' सर्वभूतात्मको विराट् । 'निरुक्तं' कार्यात्मना स्थितम्', 'अनिरुक्तं' कारणात्मना वर्त्तमान मिति विवेकः । यन्निरुक्ता-निरुक्ताख्यात्मकत्वम् 'उभयम्' अस्ति, तद् इदं प्रजापतिरेव । 'तत्' तथा सति यजुष्कृतोत्पन्नानि प्रजापतेः 'यत् निरुक्तं रूपम्', तत् कार्यात्मकं 'परिमितम्', तत् संस्कृतवान् भवति । अतथा-भूताभिरिष्टकाभिरतथाभूतं प्रजापतेः रूपं संस्करोति । एवं विद्वान् निरुक्तानिरुक्तरूप मुभयं जानन् संस्कर्त्ता भवति ।

अवशिष्टाया मृदो विनियोग माह— "अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्य इति । उखां कृत्वा यजमान इति शेषः । उपशेते इति 'उपशया' मृदुच्यते * । 'प्रायश्चित्तिभ्यः' उखाभेदपरिहारोपायाः, तदर्थ मित्यर्थः ॥ ७ ॥

यदुक्तं सूत्रकृता— "सप्तभिरश्वसकृद्भिरुखां धूपयति दक्षिणाग्न्यादीमेरेकैकेन वसवस्त्वेति प्रति मन्त्र मिति †, तदिदं विधाय प्रशंसति— "अथैनां धूपयति स्थेम्ने न्वेवेति । 'स्थेम्ने न्वेव' स्थिरत्वायैव, न केवलं दृष्टार्थम् । 'अथो' अपि च 'कर्मणः' उख्यधारणलक्षणस्य चयनस्य वा 'प्रकृततायै' संस्कृतत्वसिद्धये । "यद्वेवेत्यादिः, धूपनार्थवादः । उखायाः प्राधान्यात् शिरस्त्वा-भिधानम् । नासारन्ध्रेण प्राणस्य सञ्चारवत् ० ० ० धूम-तत्स-ञ्चारदर्शनात् प्राणत्वोपचारः ॥ ८ ॥

"अश्वशकैर्धूपयतीति । धूपनकर्म चाश्वसकृद्भिरेव भवितव्य मिति नियमे कारण माह— "प्राजापत्यो वा अश्व इत्यादिना ।

---

* का० श्रौ० सू० १६. ४. ७ ।

† का० श्रौ० सू० १६. ४. ८ ।

"प्रजापतेरक्षि अश्वयत्तत् परापतत् तदश्वोऽभवत्, यदश्वयत् तदश्वस्याश्वत्वम्"–इति श्रुतेः * प्रजापतेरवयवत्वेन सम्बन्धादश्वस्य प्राजापत्यत्वम्। चीयमानस्याग्नेः पिण्डात्मकत्वं प्राक् प्रतिपादनात्, संवत्सरः प्रजापतिरिति श्रुतेः संवत्सर मुख्याग्नेर्धार्यमाणत्वाद्वा अग्निः प्रजापतिः। अश्वशकृद्द्वारा धूपनं प्रशंसति–– "तद्दै शक्नेवेत्यादिना। 'शक्ना'–इति पदे "पद्दन:"–इत्यादिना † शकन्नादेशः। 'जग्धम्' भक्षितम्। अदेर्जग्धादेशः ‡। 'यातयाम' कालान्तरगमनम्, गतसार मित्यर्थः। यत एवम्भूतम् अतः स्वसम्बन्धिनम् 'अश्वम्' अपि न हिनस्ति' अश्वसम्बन्धित्वेन एतेषां पशूनां सम्बन्धाभावादेव हिंसाप्रसङ्गः। अतोऽश्वशकैर्धूपनं प्रशस्तम्॥ ८॥

अथ प्रथमशक्ना धूपने मन्त्र माह— "वसवस्त्वा धूपयन्तु गायत्रेणच्छन्दसाङ्गिरस्वदिति §। हे उखे! त्वां 'वसवः' अष्टसङ्ख्याकाः 'धूपयन्तु' अश्वशकधूपनेन संस्कुर्वन्तु। कीदृशा वसवः? गायत्राख्येन छन्दसा सहिताः, 'अङ्गिरस्वत्' अङ्गिरसो यथा स्वकीये चयने 'अधूपयन्', एव मित्यर्थः ‖। वसूनां गायत्रच्छन्दसश्च सम्बन्धे अष्टसङ्ख्यासादृश्यं निमित्तम्; अष्टौ हि वसवः, अष्टाक्षरा च गायत्री।

एवं "रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन"–इत्यादयः ¶ अन्तरसङ्ख्या-

---

* तै० सं० ५. ३. १२. १।      † पा० सू० ६. १. ६३।

‡ "अदो जग्धिर्ल्यप्ति किति"—इति पा० सू० २. ४. ३६।

§ वा० सं० ११. ६०. १ (सप्तमन्त्रात्मिकैषा कण्डी)।

‖ विशेषतस्त्वत्र २६८ पृ० द्रष्टव्यम्।

¶ वा० सं० ११. ६०. २

द्वारेण * व्याख्येयम्। "विश्वे त्वा देवा वैश्वानरा इति चतुर्थमन्त्रे † विश्वेषां देवानां सर्वदेवात्मकत्वाद् अनुष्टुभश्च सर्वच्छन्दोरूपत्वात् परस्परसम्बन्धः। विश्वे च ते नराश्च 'विश्वेनराः', तेषां हितकारित्वेन सम्बन्धिनो 'वैश्वानराः'। इन्द्रवरुणविष्णूनां प्रतिनियतच्छन्दःसम्बन्धाभावात् केवला एवाम्नाताः ‡। "एताभिर्देवता मेतद्देवताभिर्धूपयतीति। 'एतत्' एतेन, वस्वादिमन्त्रधूपनेन 'एताभिः' सप्तदेवताभिः § एव धूपनं कारितवान् भवति ‖ ॥ १० ॥

यजुर्मन्त्रदेवतानां यत् सप्तसङ्ख्यासाम्यम्, तत् प्रशंसति—"सप्ताख्यशकानि भवन्तीति। सङ्ख्यागतसप्तत्वेषु त्रित्वं प्रशंसति—"बहु वा अपि बहुशत्वः सप्त-सप्तेति। 'उ' अपि च, यदपि तत्र यजुर्गत मेकं सप्तकम्, मन्त्रगतञ्चापरम्, देवतागतं चान्यत्। एवं 'बहुशत्वः' सप्तसङ्ख्याया आवृत्ताया अपि सप्तसङ्ख्यानतिरेकात् त्रिभिः सप्तभिः 'शीर्षण्येव' उखाख्ये यज्ञशिरस्येव 'सप्त प्राणान्' 'दधाति' स्थापयति ॥ ११ ॥ १ [ ५. ३. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

षष्ठे काण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

* विशेषतस्त्वत्र २६६ पृ० द्रष्टव्यम्।

† वा० सं० ११. ६०. ४। ‡ वा० सं० ११. ६०. ५, ६, ७।

§ वसवः, रुद्राः, आदित्याः, वैश्वानराः, इन्द्रः, वरुणः, विष्णुश्चेति सप्त देवाः वा० सं० ११. ६० कण्डिका माम्नाताः।

‖ इहैव पूर्वत्र २६८ पृष्ठतः २७१ पृष्ठान्तं द्रष्टव्यम्।

( अथ चतुर्थं ब्राह्मणम् . )

अथैन मश्वां खनति। एतद्वै देवा अबिभयु-र्यद्वै न इम मिह रक्षाᳪंसि नाष्ट्रा न हन्युरिति तस्मा ऽइमा मेवात्मान मकुर्व्वन् गुप्त्या ऽआत्मा-त्मानं गोप्स्यतीति ॥ १ ॥

तं वा ऽअदित्या खनति। इयं वा ऽअदि-तिर्नो वा ऽआत्मात्मानᳪ हिनस्त्यहिᳪसायै यद-न्यया देवतया खनेद्धिᳪस्याद्धैनम् ॥ २ ॥

अदितिष्ट्वा देवी व्विश्वदेव्यावती। पृथिव्याः सधस्थे ऽअङ्गिरस्वत् खनत्ववटेत्यवटो ह्येष देवत्रा च सा व्वैषाव्यभिचरत्सीदति चतुःस्त्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य एवैन मेतद्दिग्भ्यः खनत्यथ पचन मवधायाषाढा मवदधाति तूष्णी मेव ताᳪ हि पूर्व्वां करोति* ॥ ३ ॥

अथोखा मवदधाति। देवानां त्वा पत्नीर्देवी-र्व्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वद्दधतूख

* 'करोति'—इति ख, 'करोति'—इति ग, घ।

ऽइति देवानाᳫं हैता अग्रे पत्नीर्देवीर्विश्वदेव्या-
वतीः पृथिव्याः सधस्थे ऽङ्गिरस्वद्दधुस्ताभिरेवैना
मेतद्दधाति ता ह ता ओषधय एवौषधयो वै
देवानां पत्न्य ओषधिभिर्हीदᳫं सर्व्वᳫं हितमोष-
धिभिरेवैना मेतद्दधात्यथ विश्वज्योतिषो ऽवदधाति
तूष्णी मेवाथ पचन मवधायाभीन्द्धे ॥ ४ ॥

धिषणास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः
सधस्थे ऽअङ्गिरस्वदभीन्धता मुख ऽइति धिषणा
हैता अग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे-
ऽङ्गिरस्वदभीधिरे ताभिरेवैना मेतदभीन्द्धे सा ह
सा वागेव वाग्वै धिषणा वाचा हीदᳫं सर्व्वं
मिद्धं वाचैवैना मेतदभीन्द्धे ऽथैतानि त्रीणि यजूᳫं-
षीक्षमाण एव जपति ॥ ५ ॥

वरूत्रीष्ट्वा देवीः । विश्वदेव्यावतीः पृथिव्याः
सधस्थे ऽअङ्गिरस्वच्छ्रपयन्तूखे ऽइति वरूत्रीर्हैता
अग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गि-
रस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैना मेतच्छ्रपयति तानि ह
तान्यहोरात्राण्येवाहोरात्राणि वै वरूत्रयोऽहोरात्रै-

र्षीद१ँ सर्व्वं हत मह्नोरात्रैरेवैना मेतच्छ्रपयति ॥ ६ ॥

ग्नास्त्वा देवीः। व्विश्ववदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति ग्ना हैता मग्रे देवीर्व्विश्ववदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि छन्दा१ँ-स्येव छन्दा१ँसि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति छन्दोभिरेवैना मेतत् पचति ॥ ७ ॥

जनयस्त्वाच्छिन्नपत्रा देवीः। व्विश्ववदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पचन्तूख ऽइति जनयो हैता मग्रे ऽच्छिन्नपत्रा देवीर्व्विश्ववदेव्यावतीः पृथिव्याः सधस्थे ऽअङ्गिरस्वत् पेचुस्ताभिरेवैना मेतत् पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषा मेतानि ज्योती१ँषि नक्षत्रैरेवैना मेतत् पचति ॥ ८ ॥

स वै खनत्येकेन। अवदधात्येकेनाभीन्द्ध ऽए-केन श्रपयत्येकेन द्वाभ्यां पचति तस्माद् द्विः संव्व-त्सरस्यान्नं पच्यते तानि षट् सम्पद्यन्ते षड्ऋतवः

संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति * ॥ ९ ॥

अथ मित्रस्य चर्षणीधृत इति। मैत्रेण यजुषोपन्याचरति यावत् कियच्चोपन्याचरति न वै मित्रः † कञ्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैष एतां न हिनस्ति नो ऽएत मेषा तां द्विवेवोपवपेद्द्विवोद्वपेदृक्षाग्नेयम् ‡ ॥ १० ॥

ताᳬ सावित्रेण यजुषोद्वपति। सविता वै प्रसविता सवितृप्रसूत एवैना मेतदुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्येति सर्व्वं मु ह्येतत् सविता § ॥ ११ ॥

अथैनां पर्य्यावर्त्तयति। अव्यथमाना पृथिव्या माशा दिश आपृणेत्यव्यथमाना त्वं पृथिव्या माशा दिशो रसेनापूरयेत्येतत् ‖ ॥ १२ ॥

---

* 'भवति'—इति ख।

† 'मित्र'—इति ग, घ।

‡ '०येयम्'—इति ग, घ।

§ 'सविता'—इति ग, घ।

‖ '०तत्'—इति ग, घ।

अथैना मुद्यच्छति। उत्थाय बृहती भवेत्यु-त्थाय हीमे लोका बृहन्त उद्दु तिष्ठ ध्रुवा त्व मि-त्युद्दु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् * ॥ १३ ॥

तां परिगृह्य निदधाति। मित्रैतां त उखां परिददाम्यभित्त्या ऽएषा मा भेदीत्ययं वै व्वायुर्मित्रो यो ऽयं पवते तस्मा ऽएवैना मेतत् परिददाति गुप्त्यै ते हेमे लोका मित्रगुप्तास्तस्मादेषां लोकानां न किञ्चन मीयते † ॥ १४ ॥

अथैना माच्छृणत्ति। स्थेम्ने न्वेवाथो कर्म्मणः प्रकृततायै यद्वेवाच्छृणत्ति शिर एतद्यज्ञस्य यदुखा प्राणः पयः शीर्षंस्तत् प्राणं दधात्यथो योषा वा ऽउखा योषायां तत् पयो दधाति तस्माद्यो-षायां पयः ॥ १५ ॥

अजायै पयसाच्छृणत्ति। प्रजापतेर्व्वै शोका-दजा समभवन् प्रजापतिरग्निर्नो वा ऽआत्मा-त्मानꣳ हिनस्त्यहिꣳसायै यद्वेवाजाया ऽअजा ह

* '०तत्'—इति ग, घ।

† 'मीयते'—इति क, ख।

सर्व्वा ओषधीरत्ति सर्व्वासा मेवैना मेतदोषधीनाᳯ रसेनाच्छृणत्ति ॥ १६ ॥

वसवस्त्वाच्छृन्दन्तु। गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदित्येताभिरेवैना मेतद्देवताभिराच्छृणत्ति स वै याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति यो वाव कर्म करोति स एव तस्योपचारं वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्धूपयति ताभिराच्छृणत्ति ॥ १७ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [५. ४.] ॥

अथावटे खननं विधत्ते— "अथैन मस्यां खनतीति *। 'एनम्' अवटम् 'अस्यां' पृथिव्याम् उखास्थापनार्थं खनेत्। अवटखननं पुरावृत्तान्ताभिधानमुखेन प्रशंसति— "एतद्वै देवा अबिभयुरिति। 'एतत्' एतेन वक्ष्यमाणेन खलु 'देवाः' भीताः आसन् ; 'नः' अस्माकं सम्बन्धिनम् 'इमम्' उखेष्टकारूपं पदार्थं 'नाष्ट्रा' नाशकारीणि रक्षांसि 'न हन्युः' हननं न

---

* का० श्रौ० सू० १६. ४. ६ ।

कुर्युरिति। यदेतदस्ति, 'एतत्' एतेन पूर्वत्रान्वयः। 'तस्मै' अवयवभूताय उखादिपदार्थाय 'इमां' पृथिवीम् 'एव' 'आत्मानम्' अवयविनम् 'अकुर्वन्'। एवं कुर्वता मभिप्राय माह— "आत्मानं गोप्स्यतीति। यथात्मभूत मङ्गं स्वयं रक्षति, तथा रक्षिष्यतीति तेषा माशयः ॥ १ ॥

खनन मनूद्य मन्त्रं विधत्ते— "तं वा अदित्या खनतीति। 'अदित्या' अदितिदेवतात्मकेन मन्त्रेणेत्यर्थः। अन्वयव्यतिरेकाभ्या मदितिः खनने प्रशस्तेति दर्शयति—"इयं वा अदितिरित्यादिना। येयम् 'अदितिः' देवता, सा 'इयं वै' पृथिवी खलु। आदत्ते सर्व मित्यदितिरिति व्युत्पत्तेः। स्पष्ट मन्यत्। यथा पादतल-लग्नकण्टकाद्युद्धरणादिषु स्वयं चेत् न हिनस्ति, अन्यश्चेत् हिंस्यात्; एव मिति भावः ॥ २ ॥

मन्त्रं दर्शयति— "अदितिष्ट्वा देवीति *। अय मर्थः— हे अवट! 'त्वा' त्वाम् 'अदितिः' अदीना 'देवी' खनतु। कीदृशी? 'विश्वदेव्यावती' विश्वेषां देवानां हितं कर्म विश्व-देव्यम्, तदस्यास्तीति † विश्वदेव्यावती। "मन्त्रे सोमाश्वेन्द्रिय-विश्वदेव्यस्य मतौ"-इति दीर्घः ‡। किं तत्? 'अङ्गिरस्वत्' अङ्गिरसो यथा तथा। कुत्र? 'पृथिव्याः' 'सधस्थे' सहस्थाने उपरीत्यर्थः। 'इति'-शब्दो मन्त्रसमाप्त्यर्थ इति ॥

"अवटो हैव देवत्रेति। 'एषः अवटः' 'देवत्रा' देवम् अग्निं प्रति साधुः; इष्टकोत्खारकत्वात्। अवटखननसाधनम्, उखार्थ-

---

* वा० सं० ११. ६१. १।

† पा० सू० ५. २. ६४।

‡ पा० सू० ६. ३. १३१।

मृत्खननार्थं प्रागाहृता वेणव्यभ्रिरवेत्याह— "अत्र सा वेणव्यभ्रिरुत्सीदतीति। 'अत्र' अवटखनने यैव पूर्वं युक्ता 'वैणवी' वेणुविकारभूता 'अभ्रिः', 'सा' 'उत्सीदति' विनश्यति, कृतप्रयोजना भवतीत्यर्थः। अवटस्य प्रकारविशेष माह— "चतुःस्रक्तिरेव कूपो भवतीति। "चतस्रो वै दिशः"-इत्यर्थवादः स्पष्टः। "अभ्र्या श्वभ्रं चतुरस्रं खनत्यदितिष्ट्वेति"-इति कात्यायनः * ॥

अथ यदुक्तं सूत्रकृता— "श्रपण मास्तीर्य यथाकृत मवदधाति, देवानान्त्वेत्युखां न्युब्जाम्"-इति †, तदिदं विधत्ते— "अथ पचन मिति। पच्यतेऽनेनेति पचनं तृणादिकम्, तत् 'अवधाय' अवटे आस्तीर्य, आदौ निष्पादितत्वात् प्रथमम् 'अषाढाम् एव' तूष्णीं स्थापयेत् ॥ २ ॥

"अथोखा मवदधातीति। पश्चादुखां "देवानां त्वा पत्नीः"-इति ‡ मन्त्रेण अवाङ्मुखा मवदध्यात्। 'देवीः'-'विश्वदेव्यावतीः'-इत्युभयत्र § "सुपां सुलुक्"-इति ‖ पूर्वसवर्णदीर्घः ॥

मन्त्रं व्याचष्टे— "देवानां हैता मग्र इति। या देवपत्न्यः— इन्द्राणी, अग्नायी, अश्विनी, राट् इत्याद्याः ¶ पुरा उखा मवटे स्थापितवत्यः। अतः अनेन मन्त्रेण ताभिरवस्थापित-

---

* का० श्रौ० सू० १६. ४. ६ ।

† का० श्रौ० सू० १६. ४. १०, ११ ।

‡, § "देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद् दधतु"—इति वा० सं० ११. ६१. २ ।

‖ पा० सू० ७. १. ३६ ।

¶ ऋ० सं० ४. २. २८. १ । व्याख्याताश्चेमा निरुक्ते १२. ४. १२ ।

वान् भवतीत्यर्थः। 'देवपत्नी'-शब्दस्य श्रोषधयोऽर्थ इति सोपपत्तिकं वदन् तेन मन्त्रेणोपधानं प्रशंसति— "ता ह ता श्रोषधय एवेति। 'ता ह' ताः खलु देवपत्न्यः, 'ताः' 'श्रोषधय एव'; न त्वन्या इति मन्त्रस्य मित्योषध्यात्मना देवपत्नीस्तुतिः। तत्रौषधीनां निधानशक्तिः कुत इत्यत श्राह— "श्रोषधीभिर्हीदं सर्वं हित मिति। व्रीहियवादिरूपाणा मोषधीनाम् श्रस्य कृत्स्नस्य जगतो धारकत्वं प्रसिद्धम्।

निर्माणक्रमप्राप्तानां विश्वज्योतिषा मवधानं विधत्ते—"श्रथ पचन मित्यादिना। दीपनं दक्षिणाग्निनैव। "दक्षिणाग्न्य-ग्निना दीपयति धिषणास्त्वेति"-इति * सूत्रम् ॥ ४ ॥

"धिषणास्त्वेति †। मन्त्रस्तु पूर्ववद् व्याख्येयः। "धिषणा हैता मित्यादि ब्राह्मण मपि पूर्ववत्। 'श्रभीन्धिरे' श्रभितो दीपयन्तः।

धिषणाशब्दस्य विवक्षित मर्थं ब्रुवन् तस्याः प्रकृतकर्मयोग्यता-समर्थनाय समिन्धनप्रसिद्धि माह— "सा ह सा वागेवेति। या सा खलु धिषणा, 'सा' प्रसिद्धा 'वागेव' नान्या; वाचां व्यवहारा-भावे कस्यापि वस्तुनोऽभिव्यक्तेरभावात्। "वाचा होदं सर्वं मिद्ध मित्युक्तम् ‡ 'इद्धम्' दीपितं प्रकाशित मित्यर्थः॥

यदुक्तं सूत्रकृता— "वह्नी इतीक्षमाणो जपतीति §, तदिदं विधत्ते— "श्रथैतानि त्रीणि यजूंषीक्षमाण एव जप-तीति। "वह्नीष्टा", "स्ना त्वा", "जनयस्त्वा"-इति त्रीणि

* का० श्रौ० सू० १६. ४. १२।

† वा० सं० ११. ६१. ३। ‡ १६० पृ० ११ पं०।

§ का० श्रौ० सू० १६. ४. १४।

'बह्वीः' बहुविभयः *। अर्थवादे बहुवचनान्तत्वेन निर्देशात् एकेन श्रपणम् द्वाभ्यां पचनम् यद्यपि वर्ण्यते, तथापि पाकश्रपणयोरग्निकर्त्तव्यत्वेन स्वस्यानुकूलप्रयत्न मन्तरेण स्वकर्त्तव्याभावात् ईक्षणपूर्वको जप एव कर्त्तव्य इत्येवाभिप्रायः ॥ ५ ॥

प्रथमं यजुरवधाय व्याचष्टे— "बह्वीष्ट्वा देवीरिति †। बहुविभयस्याभिप्रेत मर्थ माह— "तानि हेति। 'तानि' एतानि 'अहोरात्राणि'। प्रतिनिर्दिश्यमानाहोरात्रापेक्षया तानीति। बह्वीणा महोरात्रनिर्देशात् नपुंसकता, अथवा सामान्यविवक्षया नपुंसकत्वं द्रष्टव्यम्; तानि बहुत्राख्यानि कृत्स्नं जगत् श्रपयन्तीति। बहुत्रय इति योऽयं बहुविभयस्यावयवार्थः, तस्येतरस्याहोरात्रेषु सद्भावं दर्शयत्युक्तार्थसमर्थनाय— "अहोरात्रैर्हीदं सर्वं हृत मिति। 'अहोरात्रैरेव' 'एनाम्' उखां श्रपयति, यः 'एतत्' एतेन अहोरात्रवाचकबहुविभयस्ययुक्तेन यजुषा श्रपयति ॥ ६ ॥

अथ द्वितीयं यजुरनूद्य व्याचष्टे— "ग्नास्त्वा देवीरित्यादिना ‡। यदुक्तं "छन्दांसि वै ग्ना इति §, तदुपपादयति— "छन्दोभिर्हि स्वर्गं लोकं गच्छन्तीति। गच्छन्त्यभियजमानाः स्वर्ग मितिव्युत्पत्तेः छन्दःस्वपि सम्भवादित्यर्थः। "ग्नाः गच्छन्त्येनाः"—इति ‖ निरुक्तम् ॥ ७ ॥

---

* पा० सू० ७. २. ३४। बहुविभयब्दो ह्रस्वेकारान्तो दीर्घकारान्तश्च। वा० सं० ११. ६१, १३. ४४; शत० ब्रा० इहैवोभयविधः श्रुतः; तै० सं० तथैव ४. १. ६. १, ५. १. ७. ३ द्रष्टव्यम्।

† वा० सं० ११. ६१. ४। ‡ वा० सं० ११. ६१. ५।

§ पुरस्तात् (५ अ० ४ ब्रा० ७ क०) द्रष्टव्यम्।

‖ निरु० ३. ४. ४। पुनरत्रान्यत्र "ग्ना गमनात्"—इति (१०. ४. १०.)।

तृतीयं यजुरनूद्य व्याचष्टे— "जनयस्त्वाच्छिन्नपत्रा इति * । आयन्ते जनयः, पुण्यकृतो नक्षत्ररूपेणेति 'जनयः' नक्षत्राणि, तानि च 'अच्छिन्नपत्राः' अच्छिन्नपतनसाधनपक्षयुक्तानीत्यर्थः ; न हि तानि सुकृतिक्षयादर्वाक् पतन्ति । जनिशब्दार्थं माह— "तानि ह तानि नक्षत्राण्येवेति । नक्ष्यन्ते प्राप्यन्ते सुकृतिभिरिति नक्षत्राणि । उक्तं निर्वचनं नपुंसकत्वम् † । "नक्षत्राणि नक्षतेर्गतिकर्मणः"—इति ‡ नैरुक्तम् । नक्षत्राणां जनित्वप्रसिद्धिं दर्शयति— "ये हि जनाः पुण्यकृत इति । 'तेषां' स्वर्गं यतां यानि 'एतानि ज्योतींषि', तानि नक्षत्राणि । 'अपयन्तूखे', 'पचन्तूखे', इत्यनयोः § अपणं पाकक्रियासामान्यम्, पचनं पाकनिर्वृत्तिरिति विवेकः ॥ ८ ॥

खननादिमन्त्रगतां सङ्ख्यां मनूद्य प्रशंसति— "स वै खनत्येकेनेत्यादिना‖ । खननादिक्रिया त्वेकैकेनैव मन्त्रेण, पाकस्य तु मन्त्रद्वयसाध्यत्वं ¶ विहितम्, तस्यार्थवादः— "तस्माद् द्विः संवत्सरस्यान्नमिति । शाल्यादिपरिपाकः संवत्सरस्य द्विर्भवतीति प्रसिद्धम् । षडृतवो मिलित्वा संवत्सरो भवति, स संवत्सरोऽग्निः । प्रजापतिना संवत्सरः ध्रियमाणो भवति । यस्तु संवत्सरोऽग्निः प्रजा-

---

* वा० सं० ११. ६१. ६ ।

† २९८ पृ० ८ पं० द्रष्टव्यम् ।

‡ निरु० ३. ४. ३ ।

§ २९० पृ० १५ पं०, २९१ पृ० ६ पं० ।

‖ अग्निनिर्वृत्तिमन्त्रेण । पुरस्तात् २८९ पृ० ६ पं० (का० श्रौ० सू० १६. ४. ६) द्रष्टव्यम् ।

¶ वा० सं० ११. ६१. ४, ६२. १ । का० श्रौ० सू० १६. ४. १४, १५ ।

पतिना धृत:, तथाच कि मायात मित्यत आह— "यावानग्नि-र्यावन्यस्य मात्रेति। यावानिति स्वरूपस्येयत्ता, यावतीत्यवयवस्य। "तावद्व तत् भवतीति। नैमित्तिकचित्या सह चितीना मप्यवयवानां षट्त्वात् सा मन्त्रगता सङ्ख्या चितिद्वारेणाग्नेर्मात्रया समा भवति। चित्यात्मकस्याग्नेः स्वरूपस्यैकत्वात्। ऋतुषट्सङ्ख्यावतोऽवयविन: संवत्सरस्याप्येकत्वाच्च सा मन्त्रगता सङ्ख्या संवत्सरद्वारेण अग्नि-र्यावान् तावती भवतीत्यर्थः॥ ८॥

उखाया: समन्त्रक मुपावहरणं विधाय प्रशंसति— "अथ मित्रस्य चर्षणीधृत इति *। "मैत्रेण यजुषोपन्याचरतीति। लोके 'मित्रः' मित्रभूतः पुमान् 'न' 'कञ्चन' 'हिनस्ति' मित्रत्वादेव; 'मित्रम्' अपि 'न' 'कञ्चन' मित्रत्वादेव। 'तथो' तथा च सति मैत्रेण मन्त्रेण नितरा मुपचरणीयस्य पुनस्तृणप्रक्षेपाद्युपचारस्योपचारे सति 'एष:' यजमानः 'एताम्' उखां मित्रत्वादेव 'न हिनस्ति'। 'नो' नैव 'एतम्' उपचरन्तं यजमानम् 'एषा' उखा, मा मयं दहतीति क्रुद्धा सती न हिनस्ति।

तस्या: प्रक्षेपोत्क्षेपणयो: कालनियम माह— "तां दिवैवोपवपेद्, दिवोद्वपेदिति। उपवापोऽवटे प्रक्षेप:, उद्वापस्तत ऊर्ध्वं नयनम्। "अहर्ह्याग्नेय मिति॥ १०॥

अग्नेः सूर्यस्य तेजस एकत्वाभिभावकत्वाभिप्रायेण उद्वापे मन्त्रं विधास्यन् सावित्र माह—"तां सावित्रेण यजुषोद्वपतीति †।

यजुषोऽस्य मर्थः ‡— हे उखे! त्वां 'सविता' सर्वस्य प्रेरको

* वा० सं० ११. ६२।
† का० श्रौ० सू० १६. ४. १६
‡ वा० सं० ११. ६३. १।

देवः उद्वपतु। कीदृशः ? 'सुपाणिः' 'पाणिः' पानादिसाधन-प्रदेशः, शोभनेन तेन युक्तः। 'स्वङ्गुरिः' शोभनाङ्गुलिकः। "बालमूललघूल मङ्गुलीनां वा लो रत्व मापद्यत इति वक्तव्यम्" -इति * विकल्पेन रत्वम्। बाहुर्भुजदण्डः। 'उत' अपि च शक्त्या महत्या युक्त इति शेषः। "सर्वं सु ह्येतत् सवितेति। एतत् 'सर्वं' सुपाण्यादिकं 'सविता' एव, न देवतान्तर मित्यर्थः। उक्त उद्वपनार्थः † ॥ ११ ॥

यदुक्तं सूत्रकृता "उखा सुप्तानां करोति अव्यथमानेति"-इति ‡, तदिदं समन्त्रकं पर्यावर्त्तनं विधत्ते— "अथैनां पर्यावर्त्तयत्यव्यथमानेति §। पर्यावर्त्तन मूर्द्धाभिमुखीकरणम्। हे उखे! 'अव्यथमाना' व्यथा मप्राप्नुवन्ती, 'पृथिव्याम्' अवस्थिता त्वम्, इमाः परिदृश्यमानाः 'आशाः', प्राच्यादयः 'दिशः' आग्नेयादिविदिशश्च 'आ' सर्वतः 'पृण' पूरय। आपृणेत्यस्यार्थ माह— "आपूरयेति। 'एतत्' एव आपृण, यद् वायव्य मस्ति, तदेतदेव न त्वधिक मित्यर्थः ॥ १२ ॥

तस्या गर्त्तादुद्धरणं विधत्ते— "अथैना मुद्यच्छतीत्युत्थाय बृहती भवेतीति ‖। उद्यमन मूर्द्धधारणम्। हे उखे! पृथिवीतः उत्थिता भव; न ह्यनुत्थितायाः प्रयन मुपपद्यते। एत-

---

* पा० ८. २. १८ सू० २ वा०।

† ३०० पृ० १७ पं० उद्द्यनयन मिति। "उद्वपति भस्मीभूतं पराकरोति"-इति चात्र महीधरः।

‡ का० श्रौ० सू० १६. ४. २०।

§ वा० सं ११. ६३. २।

‖ का० श्रौ० सू० १६. ४. २१।

भग्नभागं* व्याचष्टे— "उत्थाय बृहती भवोद्ध्रुवा त्वमिति ।" इति ; "उत्थाय ह्येमे लोका बृहन्त इति । उखाया लोकत्रयात्मकत्वेन प्रागुक्तत्वात् 'उत्थाय' अर्द्ध मवस्थित्य, यद्धिरिमे त्रयो लोका 'बृहन्तः' अधिकपरिमाणा दृश्यन्त इत्यभिप्रायः । "उद्‌ु तिष्ठेति द्वितीयभागे ध्रुवशब्दस्य स्थैर्यम् अर्थ इति व्याचष्टे— "उद्‌ु तिष्ठ स्थिरा त्वं प्रतिष्ठितेतीति । 'एतत्' उपरिस्थापितायाः ॥ १३ ॥

क्षीरसेचनार्थं पात्रे स्थापनं विधत्ते— "तां परिगृह्येति । 'निदधाति' स्थापयति, 'पात्रे'-इति शेषः । तथाच कात्यायनः— "परिगृह्य पात्रे करोति मित्रैतां त इति"-इति † । हे 'मित्र !' देव ! वायो ! 'एताम्' उखां 'ते' तुभ्यम् 'परिददामि' । परिदानं रक्षणार्थं दानम् । 'अभित्त्यै' अभेदनाय 'एषा' उखा 'मा भेत्' भिन्ना मा भूत् 'इति ‡ । मित्रशब्दस्यात्र समीहित मर्थ माह— "अयं वै वायुर्मित्र इति । 'योऽयं पवते' सततं वाति । पवतिर्गतिकर्मा § । "ते हेमे लोका मित्रगुप्ता इति । लोकत्रयात्मकोखापरिदानेनेदानी मपि त्रयो लोका वायुना गुप्ता धृता अविचलिता वर्त्तन्ते । 'तस्मात्' 'एषां लोकानां' मध्ये 'न किञ्चन' 'मीयते' हिंस्यते ॥ १४ ॥

अथ तस्या मुखायां पय आसेचनं विधाय स्तौति— "अथैना माच्छृणत्तीति ‖ । "देवस्त्वा"-इत्यादिना । 'एनाम्' उखाम्

---

* वा० सं० ११. ६४. १ ।

† का० श्रौ० सू० १६. ४. २२ ।

‡ वा० सं० ११. ६४. २ ।

§ निघ० २. १४. १०८ द्रष्टव्यम् ।

‖ का० श्रौ० सू० १६. ४. २३ ।

'आच्छृणत्ति' आसिञ्चति । गतमन्यत् । प्रकारान्तरेण प्रशंसति— "यद्वेवाच्छृणत्ति, शिर एतद् यज्ञस्य यदुखेति । प्राधान्याद् उखायाः शिरोत्वव्यवहारः । पयसो बलकरत्वात् प्राणत्वव्यपदेशः । पयोयोग्यत्व मिदानीन्तनप्रसिद्धया समर्थयते— "अथो योषा वा उखेति । स्त्रीलिङ्गत्वादुखाया योषात्वम् पयसः रेतोवर्द्धकत्वात् रेतस्त्वं प्रसिद्धम् ॥ १५ ॥

विधाय स्तौति— "अजायै पयसाच्छृणत्तीति * । प्रजापतेः शोकादजासम्भूतिराख्यानान्तराच्च द्रष्टव्या ; चीयमानस्याग्नेः प्रजापत्यात्मकत्वं प्रागुक्तम् । प्रजापतिरग्निः, प्रकारान्तरेण स्तौति - "यद्वेवाजाया इति । 'यत्' 'उ' अपि च 'अजायाः' पयो भवतीति शेषः । स्पष्ट मन्यत् ॥ १६ ॥

तत्र मन्त्रानाह— "वसवस्त्वाच्छृन्दन्तु गायत्रेणच्छन्दसाङ्गिरस्वदित्यादिना † । हे उखे ! त्वां 'वसवः' देवा अष्टसङ्ख्याकाः, 'अङ्गिरस्वद्' अङ्गिरस इव 'आच्छृन्दन्तु' आसिञ्चन्तु । कीदृशाः ? 'गायत्रेण छन्दसा' सहिताः ; अष्टसङ्ख्या वसूनां गायत्रच्छन्दस्सम्बन्धे हारः ।

एव मुत्तरत्र मन्त्रा अपि व्याख्येयाः ।

विश्वेषां नराणां हिता 'वैश्वानराः' ते, सर्वे देवाः । "अजापयसावसिञ्चति वसवस्त्वेति प्रतिमन्त्रम्"- इति हि सूत्रम् ‡ ॥

अथासेचनमन्त्रेषु वस्वादयः प्रतिपाद्याः, निर्माणमन्त्रेषु, धूपनमन्त्रेषु च । अतो यद् दैवतैक्यं तत् प्रशंसति— "स वै याभिरेवदेवताभिः करोति, ताभिर्धूपयति, ताभिराच्छृण-

---

† वा० सं० ११. ६५. १—४ ।

*, ‡ का० श्रौ० सू० १६. ४. २३ ।

नीति *। "यो वाव कर्म करोति, स एव तस्योपचारं वेदेति। यथा लोके तक्षादिः प्रासादनिर्माणादि 'कर्म करोति', 'स एव' तद्दाढ्यार्थम् 'उपचारं' शङ्कुं प्रति दार्वादिस्थापनलक्षण मुपचार-जातं 'जानाति'; अतो युक्तम्, यैरेव कृतम्, तैरेव धूपना-सेचनोपचारण मित्यर्थः ॥ १७ ॥ २ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।

---

* "यावद्वाचरेत्"—इति का० श्रौ० सू० १६. ४. १६। यावद्भिः प्रकारैः अपर्णां प्रक्षिपेत् तावद्भावेनैव मन्त्रेणाचरेत्। आचरणं च अपणाप्रक्षेपः। 'त्रिरेव प्रदहनोद्धरणे ( १६. ४. १७. ) कर्त्तव्ये। प्रद-हनं पचनम्, उद्धरणं बहिर्निष्काशनम् ॥

पाल्योत्थं प्राज्यजन्मा लवणज मनुजः शार्करं शार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मभजत मुदा पावसाक्षिण्णपार्श्वः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

* अथतात्पर्यान्वयः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

( अथ षष्ठाध्याये प्रथमं ब्राह्मणम् . )

भूयाᳬसि हवीᳬषि भवन्ति। अग्निचित्यायां यदु चानग्निचित्याया मतीनि ह कर्माणि सन्ति यान्यन्यत् कर्माति तान्यतीनि तेषा मग्निचित्या राजसूयो व्वाजपेयो ऽश्वमेधस्तद्यत्तान्यन्यानि कर्माण्यति तस्मात्तान्यतीनि ॥ १ ॥

आग्नावैष्णव एकादशकपालः। तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपाल आदित्यस्य चरुस्ते ऽग्नेः * ॥ २ ॥

स यदाग्नावैष्णव मेव निर्व्वपेत्। नेतरे हविषी ऽअध्वरस्यैव दीक्षणीयं कृतᳬ स्यान्नाग्नेरथ यदितरे ऽएव हविषी निर्व्वपेन्नाग्नावैष्णव मग्नेरेव दीक्षणीयं कृतᳬ स्यान्नाध्वरस्य ॥ ३ ॥

उभयानि निर्व्वपति। अध्वरस्य चाग्नेश्चोभयᳬ ह्येतत् कर्माध्वरकर्म चाग्निकर्म चाध्वरस्य पूर्व्व मथाग्नेरुपायि ह्येतत् कर्म यदग्निकर्म † ॥ ४ ॥

* 'अग्नेः'—इति ग, घ।

† '०कर्म'—इति ग, घ।

स य एष आम्नावैष्णवः * । तस्य तदेव ब्राह्मणं यत् पुरस्ताद्‌वैश्वानरो द्वादशकपालो वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषा मग्नीना मुपात्त्यै द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो वैश्वानरः † ॥ ५ ॥

यद्देवैतं वैश्वानरं निर्व्वपति । वैश्वानरं वा ऽएत मग्निं जनयिष्यन् भवति त मेतत् पुरस्ताद्दीक्षणीयायाᳮ रेतो भूतᳮ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग् जायते तद्यदेत मत्र वैश्वानरᳮ रेतो भूतᳮ सिञ्चति तस्मादेषो ऽमुत्र वैश्वानरो जायते ॥ ६ ॥

यद्देवैते हविषी निर्व्वपति । क्षत्रं वै वैश्वानरो व्विडेष आदित्यश्चरुः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्व्वं निर्व्वपति क्षत्रं तत् कृत्वा व्विशं करोति ॥ ७ ॥

एक एष भवति । एकदेवत्य एकस्थं तत् क्षत्र

---

* 'आम्नावैष्णवः'—इति ग, घ ।

† 'वैश्वानरः'—इति ग, घ ।

मेकस्याꣳ श्रियं करोति चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएष देवानां यदादित्या स्त्रिश्रि तद्भूमानं तथातीत्यधिदेवतम् * ॥ ८ ॥

अथाध्यात्मꣳ † । शिर एव वैश्वानर आत्मैष आदित्यश्चरुः शिरश्च तदात्मानं च करोति वैश्वानरं पूर्वं निर्वपति शिरस्तत् कृत्वात्मानं करोति ‡ ॥ ९ ॥

एक एष भवति । एक मिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वा ऽएष तण्डुलानां यच्चरुर्भूमो ऽएषोऽङ्गानां यदात्मात्मंस्तदङ्गानां भूमानं दधाति ॥ १० ॥

घृत एष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपाꣳशवेतानि हवीꣳषि भवन्ति रेतो वा ऽअत्र यज्ञ उपाꣳशु वै रेतः सिच्यते § ॥ ११ ॥

---

§ '०देवतम्'—इति ग, घ ।

† 'अथाध्यात्मꣳ'—इति ग, घ । 'अथाध्यात्मꣳ'—इति क ।

‡ 'करोति'—इति ग, घ । § 'सिच्यते'—इति ख ।

श्रथौद्ग्रभणानि जुहोति। श्रौद्ग्रभणैर्वै देवा श्रात्मान मस्माल्लोकात् स्वर्गं लोक मभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमान श्रौद्ग्रभणैरेवात्मान मस्माल्लोकात् स्वर्गं लोक मभ्युद्-गृह्णीते ॥ १२ ॥

तानि वै भूयाᳬसि भवन्ति। श्रग्निचित्यायां यद् चानग्निचित्यायां तस्योक्तो बन्धुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्व्वाण्यथाग्नेस्तस्यो ऽए-वोक्तः * ॥ १३ ॥

पञ्चाध्वरस्य जुहोति। पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतᳬ सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-वैन मेतद्रेतो भूतᳬ सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादश मासाः संव्वत्सरः संव्वत्सरो ऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १४ ॥

स जुहोति। श्राकूति मग्निं प्रयुजᳬ स्वा-

---

* 'ऽएवोक्त' – इति ग, घ।

हैत्याकूताद्वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १५ ॥

मनो मेधा मग्निं प्रयुजꣳ स्वाहेति। मनसो वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १६ ॥

चित्तं व्विज्ञात मग्निं प्रयुजꣳ स्वाहेति। चित्ताद्वा ऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १७ ॥

व्वाचो व्विधृति मग्निं प्रयुजꣳ स्वाहेति। व्वाचो वा ऽएतदग्रे कर्म समभवत्ता मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १८ ॥

प्रजापतये मनवे स्वाहेति। प्रजापतिर्व्वै मनुः स हीदꣳ सर्व्वं ममनुत प्रजापतिर्व्वा ऽएतदग्रे कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ १९ ॥

अग्नये व्वैश्वानराय स्वाहेति। संव्वत्सरो वा ऽग्निर्वैश्वानरः संव्वत्सरो वा ऽएतदग्रे कर्माकरोत्त मेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥ २० ॥

अथ सावित्रीं जुहोति। सविता वा ऽएतदग्रे

कर्माकरोत्त मेवैतद्देतस्मै कर्मणे प्रयुङ्क्ते विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम्* विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति यो देवस्य सवितुः सख्यं वृणीते स द्युम्नं च पुष्टिं च वृणीत ऽएष वा ऽअस्य सख्यं वृणीते य एतत् कर्म करोति ॥ २१ ॥

तान्यु हैके उखाया मेवैतान्यौदग्रभणानि जुह्वति कामेभ्यो वा ऽएतानि हूयन्त ऽआत्मो ऽएष यजमानस्य यदुखात्मन्यजमानस्य सर्व्वान् कामान् प्रतिष्ठापयाम इति न तथा कुर्य्यादेतस्य वै यज्ञस्य सꣳस्थितस्यैतासा माहुतीनां यो रसस्तदेतदर्चिर्यद्दीप्यते तद्यत्सꣳस्थिते यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृणक्ति तदेना मेष यज्ञ आरोहति तं यज्ञं बिभर्त्ति तस्मात्सꣳस्थित ऽएव यज्ञे हुतेष्वौद्ग्रभणेषूखां प्रवृञ्ज्यात् ॥ २२ ॥

मुञ्जकुलायेनावस्तीर्णा भवति । आदीप्यादिति न्वेव यद्वेव ? मुञ्जकुलायेन योनिरेषाग्नेर्यन्मुञ्जो

---

* 'सख्यम्'—इति ग, च ।

न वै योनिर्गर्भꣳ हिनस्त्यहिꣳसायै योनेर्वै जायमानो जायते योनेर्जायमानो जायाता ऽइति ॥ २३ ॥

शणाकुलाय मन्तरं भवति । आदीप्यादिति न्वेव यद्वेव शणाकुलायं प्रजापतिर्यस्ये योनेरसृज्यत तस्या ऽउमा उल्ब मासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि ते न वै जरायु गर्भꣳ हिनस्त्यहिꣳसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥ २४ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [६. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये उखासम्भरण मषाढा विश्वज्योतिषामाद्येष्टकानां तिर्यङ्मान मुक्तम्, अथ षष्ठे दीक्षणीयाद्युखाभेदनप्रायश्चित्तान्तः प्रयोग उच्यते। तत्र प्राकृतीं मात्रां वैष्णवीष्टिं, वैकृतीं वैश्वानरद्वादशकपालेष्टि मादितो विधातु मुपोद्घातयति— "भूयांसि हवींषि भवन्त्यग्निचित्याया मित्यादिना। भूयसां हविषां सद्भावयोग्यत्वाभिधानाय पश्वातिकर्मत्वं प्रवक्तुं प्रतिजानीते— "पतीनि ह कर्माणि सन्तीति। तेषां स्वरूप-

दर्शनविलम्ब मसहमानोऽतिकर्मशब्दं तावन्निर्वक्ति— "यान्यन्यत् कर्माति तान्यतीनीति ॥ १ ॥

इदानीं माग्नावैष्णवादिहवींषि विधत्ते— "आग्नावैष्णव एकादशकपाल इत्यादिना । 'तत्' 'अध्वरस्य' सोमयागस्य 'दीक्षणीयं' दीक्षासंस्कारकं हविः । 'वैश्वानरो द्वादशकपालः', 'आदित्यश्चरुः' च 'ते' एते हविषी 'अग्नेः' एव प्रातिस्विके * ॥ २ ॥

इत्थ मध्वरचित्याग्न्योर्हविर्व्यवस्था मुक्ता उभयविधान्यपि हवींषि कर्त्तव्यानीत्याह— "स यदाग्नावैष्णव मेव निर्वपेदित्यादिना । अध्वरस्य चितेश्चेत्युभयोर्दीक्षणीयत्वसिद्धये उभयानि हवींषि अनुष्ठेयानि, अन्यतरहविषोऽकरणे तत्र स्यादित्यर्थः ॥ ३ ॥

"उभयानि निर्वपतीति । "उभयं हि एतत् कर्मेति । 'एतत्' साग्निचयनसौमिकं 'कर्म', 'उभयम्' उभयात्मकं खलु । किं तदुभय मिति, तत्राह— "अध्वरकर्म चाग्निकर्म चेति । तत्र पौर्वापर्यस्यानियमप्राप्तौ आह— "अध्वरस्य पूर्व मथाग्नेरिति । अग्नेः कर्मणः प्राथम्यं किं न स्यात् ? इत्यत आह— "उपायि ह्येतत् कर्म, यदग्निकर्मेति । 'उप' प्रकृतकर्मणः समीपे, तदुपजीव्य , 'एति' आयातीति 'उपायि' ॥ ४ ॥

प्राकृतस्याग्नावैष्णवस्य प्रयोगः किं न व्याख्यायत इत्याशङ्का आग्निष्टोमिकं ब्राह्मण मतिदिशति— "स य एव आग्नावैष्णवस्तस्येति । "यत् पुरश्चरण इति । 'पुरः' पूर्वं 'चरणम्'

---

* प्रातिस्विकः = स्वकीयः , त्रि० का० ३. १. २२ । 'यस्माच्चतुर्थपर्वणः शुनाशीर्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति'— इति का० श्रौ० ५. ११. १ सू० वृत्तौ द्रष्टव्यम् ।

अनुष्ठानं यस्मिन्, तत् 'पुरश्चरणम्', प्रातःकृत मग्निष्टोम-धर्मेत्यर्थः। तस्मिन् यद् 'ब्राह्मणम्' उक्तम्, 'तदेव 'तस्य' अग्निचयनस्य; यद्वा 'तस्य' तत्क्रतोराग्नावैष्णवस्य * ।

अथाग्नेर्दीक्षणीयं हविरनूद्य प्रशंसति— "वैश्वानरो द्वादश-कपालो वैश्वानरो वै सर्वेऽग्नयः इति। यो 'वैश्वानरः' चित्यां स्थाप्यमानः, सः 'सर्वेऽग्नयः' चितिरूपाः षडग्नयः; अधि-ष्ठानारोप्ययोरभेदात्। अथवा विश्वेषां नराणां हितत्वेन सम्बन्धी 'वैश्वानरः' श्रुतिलोकसाधारणोऽग्निः, स एव 'सर्वेऽग्नयः' और्वजाठरवैद्युताहवनीयाद्यग्नयः, तेषां सर्वेषां मिह प्राप्तौ वैश्वानराग्निदेवत्यकपालगतसङ्ख्यां प्रशंसति— "द्वादशकपालो द्वादशमासाः संवत्सर इति ॥ ५ ॥

प्रकारान्तरेण पुरोडाशदेवतां प्रशंसति— "यद्वेवैतं वैश्वानर मिति। 'एतं' 'वैश्वानरं' समस्तचित्यात्मकं 'जनयिष्यन्' इष्ट-काभिरुत्पादयिष्यन् भवति, अतः 'तम्' 'एतत्' इदानीं 'पुर-स्तात्' उत्पादनात् प्रागेव, 'दीक्षणीयायाम्' एव वैश्वानर-हविःकरणेन 'रेतोभूतं' वीजरूपापन्नं 'सिञ्चति'। अत उभयो-र्निषिक्तव्यजनयितव्ययोर्विलक्षणपरिहाराय आदावपि पुरोडाशो वैश्वानर एव कर्त्तव्यः। उक्तार्थो लोकसिद्ध इति दर्शयति— "यादृग्वै योनौ रेत इति। प्रतिपादितं सादृश्यं प्रकृते दर्श-यन् पुनर्निगमयति— "तद्यदेत मत्र वैश्वानर मिति। 'तद्यत्' —इत्यत्र तच्छब्दोऽनुवादी यच्छब्देन प्रयुज्यते, 'अत्र' दीक्षा-काले, 'अमुत्र' चयननिष्पत्तिकाले। अथवा, 'अत्र' प्राचीन-

---

* ३ भा॰ २१ पृ॰ (१. ३. १.) द्रष्टव्यम्।

वंशे रेतोभूतं सिञ्चति वैश्वानरम्; 'प्रमुच' सौमिके चिति-प्रदेशे जनयति ॥ ६ ॥

अथ वैकृते उभे हविषी समुच्चित्य प्रशंसति— 'यद्वैवैते हविषी इति। 'एते हविषी' वैश्वानरद्वादशकपालादित्यचर्वाख्ये। "क्षत्रं वैश्वानर इति। 'वैश्वानरः' अग्निः, 'क्षत्रं' क्षत्रिय-जातिः। तथाच बृहदारण्यकम्— "यान्येतानि देवत्रा क्षत्रा-णीन्द्रो वरुणः सोमो रुद्रः पर्ज्जन्यो यमो मृत्युरीशान इति" –इति *। आदित्यानां तु अग्निर्वसुभिः, सोमो रुद्रैः, वरुण आदित्यैः"–इत्यादिश्रुतिषु † तृतीयाम्नाना मुपसर्जनप्रतीतेः तेषां प्रजारूपत्वम्। यद्यपि "विडेष आदित्यश्चरुः"–इति चरोः प्राधान्यं प्रतिभाति, तथापि वैश्यजातित्वयोगात् तद्विताम्ना-वयवभूता देवतैवात्र विवक्ष्यते। एवं वैश्वानरवाक्येऽपि। यद्वा, देवताद्वारा द्रव्ययोरप्युक्तजातित्वम्; "एते हविषी भवत इति हविषः प्राधान्यात्। पुरोडाशस्यैकपिण्डत्वेन प्राधान्याच्चर्वैवयव-वानां तण्डुलानां बहुत्वाद्वा पुरोडाशचर्वोः क्षत्रविड्जातित्वं द्रष्टव्यम्। उभयोरप्यनुष्ठेयत्वाद् अनियम प्रसक्तावाह— "वैश्वा-नरं पूर्व मिति ॥ ७ ॥

पूर्वस्मिन् हविषि द्रव्यस्य देवतायाश्चैकत्वम्, उत्तरस्मिन् तद्बहुत्वं च प्रशंसति— "एक एव भवतीत्यादिना। 'एषः' पुरोडाशः 'एको भवति', स च 'एकदेवत्यः'। एक एव देवता

---

* बृ० उप० १ अ० ४ ब्रा० ११ क०।

† "स विशम सृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति"—इति च बृ० उप० १अ० ४ ब्रा० १२ क०।

यस्य स तथोक्तः। 'तत्' तेन, तथात्वसम्पादनेन 'एकस्थं' 'कृतं' क्षत्रियम्, एक मेव सर्वस्यापि महामण्डलस्य कृतवान् भवति; बहुराजन्यदृष्टत्वात्। फलित मर्थ माह— "एकस्थां श्रियं करोतीति। श्रियो राजाश्रयत्वनियमात् राज्ञ एकत्व-सम्पादनादेव तस्यां श्रिय मप्येकस्थां करोति। इत्थं वैश्वानरस्य पुरोडाशस्य च परस्परयोग्यता मभिधाय आदित्यानां चरोश्च सङ्गतत्व माह— "चरुरितरो बहुदेवत्य इति। यत् 'एषः' 'तण्डुलानां' 'भूमा वै' बहुत्वं खलु। भूमेति पुंलिङ्ग-प्रति-निर्देश मपेक्ष्य एष इति पुंलिङ्गता। "भूमो एष देवानाम्"-इत्यत्र 'भूमा उ' इति निपातानिपातसमुदायः। शिष्टं स्पष्टम्। प्रकारान्तरेण पुनः स्तोतु मुक्त मर्थं व्यवस्थापयति— "इत्यधि-दैवत मिति। "यद्वेवैते हविषी"-इत्युपक्रम्य, "विशि तद् भूमानं दधाति"-इत्यन्तेन ग्रन्थसन्दर्भेण प्रतिपादितम् 'अधि-दैवतम्' देवता मधिकृत्य प्रवृत्त मुक्तम् ॥ ८ ॥

"अथाध्यात्म मिति। वक्ष्यते, "शिर एष वैश्वानरः, आत्मैष आदित्यश्चरुरित्यादिना। प्रथम मनुष्ठेयत्वेन प्राधान्यात् एकत्वाच्च साम्यात् 'आदित्यश्चरुः' 'आत्मा' अङ्गप्रत्यङ्गसहितं कृत्स्नं शरीरम्। शिष्टम् अधिदैवतवाक्यवद् व्याख्येयम् ॥ ९, १० ॥

चरोराश्रयद्रव्य माह— "घृत एष भवतीति। 'घृतभाजना आदित्याः'-इति। घृतभागा इत्यर्थः। "तेजो वै घृत मिति * श्रुतेः घृतस्य तेजोद्रव्यत्वात् आदित्याना मपि तथात्वात्।

* "तेजो वा एतत् पशूनां यद् घृतम्"—इति ऐ० ब्रा० ८. ४. ६। "एतद् वा अग्नेस्तेजो यद् घृतम्"—इति च तै सं० १. ५. २. ७।

"आदित्यं घृतेन चरुम्"-इत्यादौ * घृतसम्बन्धाद्वा तेषां तद्भाग-भाक्त्वम्। 'स्वेनैव भागेन', 'स्वेन रसेन' इति व्याख्यानव्याख्येय-भावः। अत्र कात्यायन: उखानिष्पादनानन्तरप्रयोग मुक्ताह—"दीक्षामावास्याया मामावास्येनेष्ट्वा, आग्नावैष्णववैश्वानरौ, घृते चरुरादित्येभ्यः"-इति †। एषां त्रयाणां हविषा मुपांशुधर्मकत्वं विधत्ते— "उपांश्वेतानि हवींषि भवन्तीति। "करणवदशब्द मुपांशु"-इति तल्लक्षणम्। "रेतो वा अत्र यज्ञ इति। 'अत्र' 'अस्मिन् दीक्षासमये क्रियमाणो 'यज्ञ:' 'रेतो वै' रेत: खलु। अस्य रेतस्त्व मुक्तं प्राक्॥ ११॥

अथौदुग्रभणानि हवींषि विधाय तन्निर्वचनद्वारेण प्रशंसति—"अथौदुग्रभणानि जुहोतीति ‡। "औदुग्रभणैर्वै देवा आत्मान मिति। 'आत्मानं' लिङ्गशरीरोपाधिकं जीवात्मानं 'देवा:' 'अस्माद्' भूलोकात् 'स्वर्गं लोकम्' 'अभि'-लक्ष्य 'उदग्टह्णत' ऊर्ध्वमुख माकर्षणं कृतवन्त:। उदुग्रहणसाधनत्वात् 'औदग्रभ-णानि' इति नाम सम्पन्नम्। "हृग्रहोर्भः" §। "तथैवैतदिति। दृष्टान्तवद् व्याख्येयम्॥ १२॥

तेषां भूयस्त्व माह— "तानि वै भूयांसीति। 'अनग्नि-चित्यायाम्' अग्निचयनव्यतिरिक्तायां केवलज्योतिष्टोमादिक्रियायां 'यद्' यान्येव हवींषि, ततोऽपि 'भूयांसि' 'अग्निचित्यायां' क्रियायां 'भवन्ति'। चयनस्य हविर्भूयस्त्वं स्वय मेव वक्ष्यति।

---

* ग्र० ब्रा० ३. २. ३. १ द्रष्टव्यम्।

† का० श्रौ० सू० १६. ४. २७, २८, २६।

‡ का० श्रौ० सू० १६. ४. ३० क।

§ पा० ८. १. ३२ सू० १ वा०।

हविर्भूयस्त्वार्थवादश्राम्रणं किमिति नोक्त मित्याशङ्कायामाह— "तस्योक्तो बन्धुरिति। 'तस्य' हविर्भूयस्त्वस्य 'बन्धुः' अर्थनिबन्धकोऽर्थवादः 'उक्तः' अध्यायादौ "भूयांसि हवींषि भवन्त्यग्निचित्यायाम्"–इत्यादिना *। आग्निकैः सौमिकबाधप्रसक्तत्व माह— "उभयानि भवन्ति तस्योक्त इति। आग्निकानि सौमिकानि च 'उभयानि' भवेयुः, तस्योभयत्वस्य अर्थवाद उक्तो दीक्षणीय हविः प्रस्तावे— "उभयानि निर्वपति अध्वरस्य चाग्नेश्च"–इत्यादिना †। आध्वरिकाणां पूर्वभावित्वम्, आग्निकानां पश्चाद्भावित्वञ्च विधाय तदर्थवादञ्चातिदिशति— "अध्वरस्य पूर्वाणि, अथाग्नेः, तस्यो एवोक्त इति। "उपायि ह्येतत् कर्म, यदग्निकर्म"–इत्येव मुक्त इत्यर्थः ‡ ॥ १३ ॥

आध्वरिकाणां पञ्चसङ्ख्या मनूद्य प्रशंसति— "पञ्चाध्वरस्य जुहोति पाङ्क्तो यज्ञ इति। प्रातरादिसवनानि त्रीणि, प्रायणीयोदयनीयौ द्वौ, इति पञ्चसङ्ख्यायोगाद् 'यज्ञः' 'पाङ्क्तः'। यद्वा, धानाः करम्भः परिवापः पुरोडाशः पयस्या इत्येवं तैत्तिरीयोक्तहविःपञ्चकसङ्ख्यायोगात् पाङ्क्तत्वम् §। हविःपञ्चकत्वनिष्पादने सति 'यज्ञः' सोमयागः 'यावान्' यत्परिमाणः, 'अस्य' 'मात्रा' अवयवा 'यावती' यत्परिमाणा, 'तावता' तेन कृत्स्नेनापि 'एनम्' उत्पाद्यमानं चयनलक्षण मग्निं 'रेतोभूतं' वीजरूपे-

---

* पुरस्तात् ६. १. १ (३०६ पृ० ) द्रष्टव्यम्।

† पुरस्तादिहैव चतुर्थी कण्डी ( ३०६ पृ० ) द्रष्टव्या।

‡ पुरस्तात् ( ३०६ पृ० १७ पं० ) द्रष्टव्यम्।

§ तै० सं० ६. ४. ११. ४, ५; ऐ० ब्रा० २. ३. ६; इह च ३. २. १२ ब्रा० भा० द्रष्टव्यम्।

णावस्थितम् , 'एतत्'-इति क्रियाविशेषणम् , क्रियमाणप्रकारेण 'सिञ्चति' निषेकं कृतवान् भवति ।

अग्निचयनीयानामौदुम्बरीणां सप्तसङ्ख्यारूपं यद्विभूयस्त्वम् तद् विधाय प्रशंसति— "सप्ताग्नेः सप्तचितिकोऽग्निरित्यादिना । अग्नेः सप्तचितयः इत्थं द्रष्टव्याः— षड् चितयः इष्टकामय्यः, सप्तमी श्रूयते— "विकर्णीं च स्वयमातृण्णाञ्चोपदधाति ०—० सा सप्तमी चितिरिति * । शिष्टं पूर्ववत् । मिलितानां सङ्ख्या मनूद्य प्रशंसति-- "तान्युभयानीति । द्वादशमासलक्षण एक इति व्यावृत्तधर्मकाः षट् ; अनुगतकाललक्षण एक इति वा सप्तर्त्तुत्वम् ॥ १४ ॥

सप्तौदुम्बराहुतिषां मन्त्राननूद्य व्याचष्टे — "स जुहोति आकूतिमग्निं प्रयुजं स्वाहेत्यादिना † । 'आकूतिः' आत्मधर्मो मनसः प्रेरणहेतुः । यद्वा , 'आकूतिः' सङ्कल्पः , तदवस्थापन्नम् । 'प्रयुजं' प्रकर्षेण युनक्ति तादृशीं वृत्ति मिति प्रयुक् , तादृश मग्नि-चयनात्मकविराड्रूपम् । 'स्वाहा' त मभिलक्ष्य सुहुत मस्तु ‡ । "आकूताद्वा एतदग्रे कर्म समभवत् , तदेवैतदेतस्मै कर्मणे प्रयुङ्क्ते"-इति । एतत्पूर्वं सम्भूतप्रकारेण 'कर्म' चयनाख्यम् 'अग्रे' पुरा 'आकूतात्' प्रकारात् 'समभवत्' सम्पन्न मासीत् , 'तदेव' 'एतत्' इदानीं क्रियमाणप्रकारविशेषम् 'एतस्मै' चयना-ख्याय 'कर्मणे' 'प्रयुङ्क्ते' प्रयुक्तवान् भवति । एव मुत्तराण्यपि व्याख्येयानि ॥ १५ ॥

---

* "विकर्णीं च स्वयमातृण्णाञ्चोपदधाति ०--० सा सप्तमी चितिः"— इतीहैवोपरिष्टात् ८. १. ४. ६ । † का० श्रौ० सू० १६. ४. ३०सू ।

‡ "आकूति मग्निं प्रयुजं स्वाहा"—इति वा० सं० ११. ६६. १ ।

"मनो मेधा मिति *। उपर्युपरि व्यापारशीला मनसो वृत्तिर्मेधा, तद्रूपं यत् 'मनः' अस्ति। विमर्शलक्षणं तदात्मकता मापन्नम् अग्निम्। गत मन्यत्। "मनसो वा एतदग्रे"–इत्यर्थवादोऽपि व्याख्यातप्रायः ॥ १६ ॥

"चित्तं विज्ञात मग्नि मिति †। अनुसन्धानरूपं 'चित्तम्', "अनुसन्धानतश्चित्तं विमर्शात्मन उच्यते"–इति स्मरणात्। गत मन्यत् ॥ १७ ॥

इत्थं मानसव्यापाररूप मापन्नस्य अग्नेः प्रतिपादकं होमसाधनं मन्त्र मनूद्य व्याचष्टे— "वाचो विधृति मग्नि मिति ‡। 'वाचो विधृतिः' वचसो विधर्त्ता, वाचा नियम्यम्, वाग्रूप मापन्न मित्यर्थः। "वाचो वा इत्यादि, गतम् ॥ १८ ॥

"प्रजापतये मनवे स्वाहेतीति §, पञ्चमो मन्त्रः। तत्र प्रजापतेर्मनोश्च वैयधिकरण्यशङ्कां व्युदस्यति— "प्रजापतिर्वै मनुरिति। कथं तस्य मनुत्व मिति तत्राह— "स हीदं सर्वं मनुत इति। 'इदं' 'सर्वं' जगत् 'मनुते' अह मित्यवगच्छते; तस्य विराड्रूपत्वात्। "प्रजापतिर्वा एतदग्रे कर्माकरोत्, त मेवैतत्"–इत्यादि स्पष्टम्। 'कर्म' चयनाख्यम् ॥ १९ ॥

"अग्नये वैश्वानराय स्वाहेतीति ‖। अस्मिन् षष्ठमन्त्रे वैश्वानरशब्दं संवत्सरपरतया व्याचष्टे— "संवत्सरो वा अग्नि-

---

* "मनो मेधा मग्निं प्रयुजं स्वाहा"—इति वा० सं० ११. ६६. २।
† "चित्तं विज्ञात मग्निं प्रयुजं स्वाहा"—इति वा० सं० ११. ६६. ३।
‡ "वाचो विधृति मग्निं प्रयुजं स्वाहा"—इति वा० सं० ११. ६६. ४।
§ "प्रजापतये मनवे स्वाहा"—इति वा० सं ११. ६६. ५।
‖ "अग्नये वैश्वानराय स्वाहा"—इति वा० सं० ११. ६६. ६।

वैश्वानर इति। सवितृप्रदेशे ध्याप्यमानोऽग्निः वैश्वानरः, स च संवत्सरं कृत्वा संवत्सरः *। गत मन्यत् ॥ २० ॥

अथ सप्तमं मन्त्र मनूद्य व्याचष्टे— "अथ सावित्रीं जुहोति, सविता वा एतदित्यादिना। सविता देवता यस्या ऋचः सा 'सावित्री'; "देवस्य नेतुः"-इतिलिङ्गात्। तत्साध्या आहुतिरपि सावित्री। "सविता वा एतदित्यादि, व्याख्यातम् ॥

साकल्येन मन्त्रं पठति— "विश्वो देवस्य नेतुरिति †। व्याख्यातोऽयं तृतीयकाण्डे ‡। सवितुः सख्यं लब्धवतो हिरण्यादिबहुधनशरीरतुष्टिश्च सुलभेत्यय मर्थः उत्तरार्द्धस्य तात्पर्य मित्याह— "यो देवस्य सवितुः सख्यं वृणीते, स द्युम्नं च पुष्टिं च वृणीते"-इति। यद्यपि तत्र द्युम्नवत् पुष्टिशब्दो द्वितीयान्ततया न निर्दिष्टः, तथापि 'पुष्यसे'-इत्यत्र पोषलक्षणं प्रकृत्यर्थं विवक्षित्वा एवं व्याख्यात मिति मन्तव्यम् ॥

अस्तु सख्यं तद्वत् एतत्फलद्वयं तुच्छस्यामर्त्यस्य भगवता सवित्रा सह सख्यं कथ मुपपद्यत इत्यत आह— "एष वा अस्य सख्यं वृणीते, य एतत् कर्म करोतीति। 'यः' पुरुषः 'एतत्' सवितृदेवताकं 'कर्म' 'करोति', 'एषः' खलु 'सख्यं' 'वृणीते' तदीयकर्मसम्पादन मेतत्सख्यलाभहेतुरित्यर्थः। अथ

---

* "सह पित्रा वैश्वानरेणेति। संवत्सरो वै पिता वैश्वानरः प्रजापतिः"-इत्यादि ग्र० ब्रा० १ का० ४ प्र० २ ब्रा० १६ क० द्रष्टव्यम्।

† वा० सं० ११. ६७ (४. ८. १.)।

‡ १प्र० ४ ब्रा० १८, १६ क० (३भा० ४८, ५५ पृ०) द्रष्टव्यम्।

कात्यायनः— "प्राक्तनान्यौदुम्बभणानि हुत्वा समाप्तिकाम्याकूतिमिति प्रतिमन्त्रम्"-इति * ॥ २१ ॥

अथैतेषां मौदुम्भणानां होमविषये केषाञ्चित् पक्ष मनूद्य, तेषा मुपपादनं निराचष्टे—"तान्यु हैके उखाया मेवेत्यादिना †। 'तानि' एतानि औदुम्भणानीति सम्बन्धः। 'एके' महर्षयः 'उखायां' तप्तायां 'जुह्वति', तेषा मभिप्राय माह— "कामेभ्यो वा एतानीति। काम्यन्त इति कामाः स्वर्गादयः। स्वर्गं प्रत्युद्ग्रहणसाधनत्वात् स्वर्गाख्यः कामस्तावदुक्त एव, एव मन्येऽपि। ततोऽर्वाचीन्यः कामा एतेषां सिद्धाः। 'उखा'-इति 'यत्' अस्ति, 'एषः' 'यजमानस्य' 'आत्मा उ' शरीर मेव; शरीरस्योखात्वेन तत्सम्बन्धाग्नेर्यजमानकामत्वेन च संस्कारात्। यद्वा, यजमान-शरीरं यथा यज्ञनिवर्त्तनसाधनम्, एव मुखापीति। तद्धि न्यायेन यजमानशरीरत्व मुखायाः। 'आत्मन्' आत्मनि 'यजमानस्य सर्वान् कामान्'-इति स्पष्टम् ॥

अथ तं पक्षं निषिध्य स्वं पक्षं सोपपत्तिक माह— "न तथा कुर्यादेतस्य वै यज्ञस्येत्यादिना। 'एतस्य वै यज्ञस्य' प्रकृतस्य दीक्षणीयाख्यस्य 'संस्थितस्य' सम्पूर्णस्य 'एतासां' दीक्षाहुतीनां 'यो रसः', 'तदेतत्' अग्निज्वालारूपः आहवनीयात्मना 'दीप्यते'। तप्ताया मुखायाम् औदुम्भणहोमपक्षं निराकृत्य हुतेष्वौदुम्भ-णेषु तेषां यो रसः स्थितः, तेन प्रज्वलिताग्नौ उखाप्रहरणं कर्त्तव्य मिति सिद्धान्तयतोऽय मभिप्रायः— सर्वकामावाप्तिस्तु दीक्षणीयाख्ये यज्ञे सम्पूर्णे, हुतेषु औदुम्भणेषु तेषां यो रसः

* का० श्रौ० सू० १६. ४. ३०।

† का० श्रौ० सू० १६. ४. ३१ क।

स्थित:, तेन प्रज्वलिताग्नौ उखासम्पतनेनापि सम्भविष्यति। तस्मात् दीक्षणीयाख्ये संस्थिते यज्ञे सौदुम्भणेषु सम्बन्धिषु कृतेष्वेव उखाप्रवृञ्जनं कर्त्तव्य मिति॥ २२॥

उखाया अस्या: मुञ्जतृणावस्तरणं विधाय प्रशंसति— "मुञ्जकुलायेनावस्तीर्णा भवतीति। अनेन मुञ्जकुलायावस्तरणस्य दृष्टार्थत्व मेव, न त्वग्रहार्थत्व मित्युक्तं भवति। आदीप्तिस्तु तृणान्तरेणापि भवति, किं मुञ्जनियमेनेति, तत्राह— "यद्वेव मुञ्जकुलायेन योनिरेषाग्नेर्यन्मुञ्ज इत्यादिना। एवकारो भिन्नक्रम:; मुञ्जकुलायेनेति यदस्ति, अत्रोपपत्तिरभिधीयत इति शेष:। मुञ्जस्य क्षुद्रतृणत्वेन शीघ्र मग्निजननसाधनत्वात् अग्नियोनित्वम्। योनेर्गर्भहिंसकत्वाभावसिद्धिर्वैशब्देनोच्यते। जायमानोऽग्नि: स्वयोनेरेव सकाशात् जायत इत्यभिप्रायेण मुञ्जकुलायेनैव भवितव्य मित्यर्थ:॥ २३॥

अथ मुञ्जकुलायादप्यन्तरं शणकुलायावस्तरणं कर्त्तव्य मित्याह— "शणकुलाय मन्तरं भवतीति *। "आदीप्यादिति न्वेवेत्यर्थवाद:, पूर्ववत् †। "यद्वेव शणकुलाय मित्यादि। अन्त: अवस्तीर्यमानं वस्तु भवेदिति यदस्ति, तत्र शण मभिधीयत इति शेष:। पूर्वं 'प्रजापति:' चित्याग्निरूप: 'यस्यै योने:' यस्या: योने: सकाशात् उत्पन्नस्याग्ने: 'उमा:' ‡। औमवस्त्रोपा-

---

* "मुञ्जकुलायावस्तीर्णा मन्तरे शणम्"—इति का० श्रौ० सू० १६. ४. ३१।

† पूर्वकण्डीयाख्यावदित्यर्थ:।

‡ "अतसीस्यादुमा क्षुमा"—इति अम० को० २. ९. २०। अर्थ अतस इति ख्यातस्य धान्यभेदस्य। "विभाषा तिलमाषोमाभङ्गाणुभ्य:" —इति पा० सू० ५. २. ४।

दामभूतास्तृणविशेषा उमाः। ताः उखस्थानीया अभवन्, शणाख्यतृणविशेषा जरायुस्थानीयाः। शिष्टं सुगमम्। 'पूतयः' दुर्गन्धाः ॥ २४ ॥ ३ [ ६. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥

———

( अथ द्वितीयं ब्राह्मणम् . )

तां तिष्ठन् प्रवृणक्ति *। इमे वै लोका उखा तिष्ठन्तीव वा ऽइमे लोका अथो तिष्ठन्वै व्वीर्यवत्तरः † ॥ १ ॥

उदङ् प्राङ् तिष्ठन्। उदङ् ह प्राङ् तिष्ठन् प्रजापतिः प्रजा असृजत ॥ २ ॥

यद्वेवोदङ् प्राङ् तिष्ठन्। एषा ह्युभयेषां देवमनुष्याणां दिग्यदुदीची प्राची ॥ ३ ॥

यद्वेवोदङ् प्राङ् तिष्ठन्। एतस्याᳫं ह दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ् प्राङ् तिष्ठन्नाहुती-

* ग-घ-पुस्तकयोरिह छेदचिह्नं (।) नास्ति।

† 'वीर्यवत्तमः'—इति ग, घ; सायणभाष्यविरुद्धः।

जुहोत्युदङ् प्राङ् तिष्ठन्दक्षिणा नयति द्वारैव तत् स्वर्गस्य लोकस्य व्वित्तं प्रपादयति ॥ ४ ॥

मा सु भित्था मा सु रिष इति। यथैव यजुस्तथा बन्धुरम्ब धृष्णु व्वीरयस्व स्विति योषा वा ऽउखाम्बेति वै योषाया ऽआमन्त्रणᳪ स्विव व्वीरयस्वाग्निश्चेदं करिष्यथ इत्यग्निश्च ह्येतत् करिष्यन्तौ भवतः ॥ ५ ॥

दृᳪहस्व देवि पृथिवि स्वस्तय ऽइति। यथैव यजुस्तथा बन्धुरासुरी माया स्वधया कृतासीति प्राणो वा ऽअसुस्तस्यैषा माया स्वधया कृता जुष्टं देवेभ्य इद मस्तु हव्य मिति या एवैतस्मिन्नग्नावाहुतीर्होष्यन् भवति ता एतदाहानो ऽएषैव हव्य मरिष्टा त्व मुदिहि यज्ञे ऽअस्मिन्निति यथैवारिष्टानार्तैतस्मिन्यज्ञ ऽउदियादेव मेतदाह ॥ ६ ॥

द्वाभ्यां प्रवृणक्ति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैना मेतत् प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्यावान् प्राणश्चात्मा

ण तद्यावानग्निस्तावतैवैना मेतत् प्रवृणक्त्यथो ऽय-ग्निर्वै गायत्रीन्द्रस्त्रिष्टुबैन्द्राग्नो ऽग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैना मेतत् प्रवृणक्तीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैना मेतत् प्रवृणक्ति तयोः सप्त पदानि सप्तचितिकोऽग्निः सप्तऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्-भवति ॥ ७ ॥

तां यदाग्निः सन्तपति । अथैना मर्चिरारोहति योषा वा ऽउखा वृषाग्निस्तस्माद्यदा व्वृषा योषाᳬ सन्तपत्यथास्याᳬ रेतो दधाति ॥ ८ ॥

तद्धैके । यदि चिर मर्चिरारोहत्यङ्गारानेवा-वपन्त्युभयेनैषो ऽग्निरिति न तथा कुर्याद्यस्यन्वान्वाव पशुर्जायतेऽथ तं नाद्य ऽएवास्यन्वन्त मिव न्यृषन्ति रेत इवैव दधति रेत उ ऽएतदनस्थिकं यदर्चिस्त-स्मादेना मर्चिरेवारोहेत् ॥ ६ ॥

तां यदार्चिरारोहति । अथास्मिन्त्समिध माद-धाति रेतो वा ऽएना मेतदापद्यत ऽएषो ऽग्नि-

स्तस्मिन्नेताᳪं रेतसि सम्भूतिं दधाति ॥ १० ॥

सा कार्मुकी स्यात्। देवाश्चासुराश्चोभये प्राजापत्या अस्पर्द्धन्त ते देवा अग्नि मनीकं कृत्वासुरानभ्यायंस्तस्यार्चिषः प्रगृहीतस्यासुरा अग्रं प्रावृश्चंस्तदस्यां प्रत्यतिष्ठत्स क्रमुको ऽभवत्तस्मात्स स्वादू रसो हि तस्मादु लोहितो ऽर्चिर्हि स एषो ऽग्निरेव यत् क्रमुको ऽग्नि मेवास्मिन्नेतत् सम्भूतिं दधाति ॥ ११ ॥

प्रादेशमात्री भवति। प्रादेशमात्रो वै गर्भो विष्णुरात्मसम्मिता मेवास्मिन्नेतत् सम्भूतिं दधाति ॥ १२ ॥

घृते न्युत्ता भवति। अग्निर्यस्यै योनेरसृज्यत तस्यै घृत मुल्ब मासीत्तस्मात्तत् प्रत्युद्दीप्यत ऽआत्मा ह्यस्यैष तस्मात्तस्य न भस्म भवत्यात्मैव तदात्मान मप्येति न वा ऽउल्बं गर्भᳪं हिनस्त्यहिᳪंसाया ऽउल्बाद्वै जायमानो जायत ऽउल्बाज्जायमानो जायाता ऽइति ॥ १३ ॥

ता मादधाति *। द्रून्नः सर्पिरासुतिरिति द्रा-

* 'मादधाति'—इति ग। 'मादधाति'—इति घ।

स्वर्णः सपरिशन इत्येतत् प्रत्नो होता वरेण्य इति सनातनो होता वरेण्य इत्येतत् सहसस्पुत्रो ऽअद्भुत इति बलं वै सहो बलस्य पुत्रो ऽद्भुत इत्येतत्तिष्ठन्नादधाति स्वाहाकारेण तस्योपरि बन्धुः ॥ १४ ॥

तद्वा ऽआत्मैवोखा * । योनिर्मुञ्जाः शणा जरायूल्बं घृतं गर्भः समित् † ॥ १५ ॥

बाह्योखा भवति । अन्तरे मुञ्जा बाह्यो ह्यात्मान्तरा योनिर्बाह्ये मुञ्जा भवन्त्यन्तरे शणा बाह्या हि योनिरन्तरं जरायु बाह्ये शणा भवन्त्यन्तरं घृतं बाह्यꣳ हि जरायन्तर मुल्बं बाह्यं घृतं भवत्यन्तरा समिद्बाह्यꣳ ह्युल्बमन्तरो गर्भ एतेभ्यो वै जायमानो जायते तेभ्य एवैनमेतज्जनयति ॥ १६ ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [६. २.] ॥

---

* 'आत्मैवोखा' – इति ग, घ ।

† 'समित्' – इति ग, घ ।

यदुक्तं सूत्रकृता— "दण्डोक्षयणान्तं कृत्वाध्वर्युयजमानयो-रन्यतर उखा माहवनीयेऽधिश्रयति मुञ्जकुलाय-शणकुलायाव-स्तीर्णा मन्तरे शाणा मा सु भित्था इति तिष्ठन्नुदङ्प्राङ्"-इति *। तद्विधत्ते— "तां तिष्ठन् प्रवृणक्तीमे वै लोका उखेति। अध्व-र्युर्यजमानो वा 'तिष्ठन्' 'प्रवृणक्ति' आहवनीये प्रतितपेत्। "इमे वै लोका उखेति। उखाया लोकत्रयात्मकत्व मुक्तं प्राक् तृतीय-प्रपाठकान्ते †। लोकस्थानां प्राणिना मूर्द्ध मवस्थानादुत्तर-भावाद्वा "तिष्ठन्तीव वेत्युक्तम्। शयानात् आसीनाच्च तिष्ठत्सु पुरुषेषु युद्धादिव्यापारे वीर्यादर्शनात् "तिष्ठन् वै वीर्यवत्तर इत्युक्तम् ॥ १ ॥

उदङ्प्राङ् तिष्ठन्निति ‡। ईशानाभिमुखस्तिष्ठन्नित्यर्थः। पूर्वं प्रजापतिना प्रजासृष्टिकाले प्रागुदङ्मुखेन सृष्टत्वादिदानी मपि तन्मुखेनैव कर्त्तव्य मिति प्रकारान्तरेण तन्मुखत्वं प्रशं-सति— "यद्देवोदङ्ङिति। उत्तरस्यां दिशि प्रायेण मनुष्याणां प्राचुर्यात्, मनुष्यसम्बन्धिदैविकानामकर्मणः + + + प्राङ्-मुखानुष्ठानात्, देवान् प्रति नियतभागत्वाच्च प्राची दिक् देवाना मिति व्यवस्था। अत उभयसम्बन्धात् 'प्रागुदीची' ईशानाशा ॥ २ ॥

प्रकारान्तरेण तां दिशं प्रशंसति— "यद्देवोदङ्प्राङ् तिष्ठ-न्निति। यस्मात् स्वर्गद्वारम्, तस्मात् 'उदङ्प्राङ् तिष्ठन्' सर्वाः 'आहुतीर्जुहोति', तस्मादेव कारणात् तादृङ्मुख एव सन्

---

* का० श्रौ० सू० १६. ४. ३१। 'सुञ्जकुलायावस्तीर्णा मन्तरे प्राणाम्'—इति मुद्रितपाठः।

† अस्मिन्नेव काण्डे उपरिष्टात् (३ प्र० ७ ब्रा० १७ क०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ४. ३१ ख।

'दक्षिणाः' 'नयति' प्रयच्छति । 'तत्' तेन तादृङ्मुखः सन् आहुतिप्रदानेन दक्षिणानयनेन च स्वर्गद्वारेणैव 'वित्तं' आहुतिरूपम्, दक्षिणारूपं धनञ्च 'प्रपादयति' दत्तवान् भवति । अनेनेशानाभिमुख माहुतयो होतव्याः, दक्षिणा च दातव्या इति विधिरुन्नीयते, अपूर्वार्थत्वात् ॥ ३, ४ ॥

उखाप्रहरणमन्त्र द्वौ मन्त्रौ, तत्र प्रथमं मन्त्रं विभज्य व्याचष्टे — "मा सु भित्था मा सु रिष इतीति * । "यथैव यजुस्तथा बन्धुरिति । 'यजुः यथा', 'बन्धुः' अर्थवादोऽपि 'तथा'; पाठ एव व्याख्यान मित्यर्थः । अर्थस्तु— हे उखे ! त्वम् 'मा सु भित्था' सुष्ठु भिन्ना मा स्थ, दृढा भवेत्यर्थः । तथा 'सुष्ठु मा रिषः' हिंसिता मा भूः । द्वितीयभागं व्याचष्टे— "अम्ब धृष्णु वीरयस्व स्वितीति । हे 'अम्ब' मातः उखे ! त्वं 'धृष्णु' प्रगल्भं यथा भवति तथा सुष्ठु एव 'वीरयस्व' अग्निधारणलक्षणात्मकर्म कुरुष्व । "योषा वा इत्यादि स्पष्टम् । तृतीयभागं व्याचष्टे— "अग्निश्चेदं करिष्यथ इतीति, "अग्निश्च हि एतत् करिष्यन्तौ भवत इति । अग्निश्चेति च-शब्दात् हे उखे त्वञ्च इदं कर्म करिष्यथः समाप्तिं प्रापयिष्यन्तौ भवथः ॥ ५ ॥

द्वितीयमन्त्रस्य प्रथमभागं निगदव्याख्यात मिति व्याचष्टे— "दृंहस्व देवि पृथिवि स्वस्तय इतीति † । "यथैव यजुस्तथैव बन्धुरितीति । अक्षरार्थस्त्वयम्— हे 'पृथिवि देवि !' विकारे प्रकृतिशब्दः, हे उखे ! इत्यर्थः । सा त्वं 'स्वस्तये' अविनाशनामैतत्, क्षेमाय 'दृंहस्व' दृढा भव । द्वितीयभागं व्याचष्टे—

---

* वा० सं० ११. ६८ ।

† वा० सं० ११. ६९ ।

"आसुरी माया स्वधया कृतासीतीति। "प्राणो वा असुस्तस्यैषा माया स्वधया कृतेति। असोः सम्बन्धिनी माया प्रज्ञा, तया निर्मितत्वात् उखापि मायेत्युच्यते; सा च स्वधया कृता। "स्वधा"-इत्यन्ननाम *, तद्धेतुत्वात् पृथिव्यपि स्वधा। "ता अग्नि मस्र-जन्त"-इत्यत्र यथाग्निशब्देन पृथिवी विवक्षिता, तद्वत्; तादृ-श्यसि। तृतीयभागे "हव्य"-शब्देन कि मभिप्रेत मिति तद् दर्शयति— "जुष्टं देवेभ्य इद मस्तु हव्य मितीति। "या एव एतस्मिन् अग्नौ आहुतीः होष्यन् भवति, ता एतदाहेति। 'एत-स्मिन्' उखया निष्पाद्ये 'अग्नौ' अन्नाहुतीः सोमपश्वाज्यादि-रूपाः, 'एतत्' एतेन हव्यशब्देन 'आह' 'इति'। नन्विदं व्यवहितं कथ मिद मस्तु हव्य मितीदन्तया व्यपदिश्यत इत्यत्र ब्रूमः— प्रकृतत्वेन बुद्धौ सन्निधानादुपपद्यत इति। चतुर्थभाग माशासनरूप इति व्याचष्टे— "अरिष्टा त्व मुदिहि यज्ञेऽस्मि-न्निति इयथैवारिष्टानार्त्तं तस्मिन् यज्ञ उदियादेव मेतदाहेति। उखे! त्वम् 'अरिष्टा' अहिंसिता सती, 'अस्मिन् यज्ञे' 'उदिहि' उद्गता भव। अरिष्टेत्यस्य व्याख्यान मनार्त्तेति॥ ६॥

मन्त्रगतं द्वित्वं प्रशंसति— "द्वाभ्यां प्रहणक्ति, द्विपाद्यज-मानोऽग्निरित्यादिना। यजमानस्य चीयमानवैश्वानरात्मना संस्का-राद् 'यजमानोऽग्निः'। अथ वा "यजमानः प्रस्तरः"-इति-वत् † अग्नेरपि यागनिर्वर्त्तकत्वात् यजमानत्वम्; अतो यज-मानानिष्ठपादद्वित्वसङ्ख्या तद्रूप्याग्नौ युक्ता। "यावानग्निरिति।

---

* निघ० २ अ० ७ ख० १७ प०।

† तै० सं० १. ७. ४. ८ द्रष्टव्यम्।

यावत्यस्याग्नेर्मात्रा यजमानद्वारकद्वित्वसङ्ख्यारूपा, तावता सर्वेणापि 'एनाम्' उखाम् 'एतत्' एतेन प्रकारेण 'प्रवृणक्ति' ॥

मन्त्रगतं छन्दोविशेषं प्रशंसति— "गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबित्यादिना। प्राण उदानो व्यान इति प्राणस्य वृत्तिभेदेन त्रित्वात्, गायत्र्याश्च पादत्रयात्मकत्वात् प्राण एव गायत्री; आत्मा तु शरीरम्, प्राणस्य आयतनं हि शरीरम्; अतः पादत्रयात्मिकायाः गायत्र्याः पादचतुष्टयात्मिकायां त्रिष्टुभि अन्तर्भावेन त्रिष्टुभः प्राणरूपगायत्रीशरीरत्वात् "आत्मा त्रिष्टुबित्युक्तम्। लोके द्विपाद्रूपश्चतुष्पाद्रूपश्च यः 'पशुः' अस्ति, 'सः' 'एतावान् वै', 'यावान्' 'प्राणः' प्राणशरीरसङ्घात्मकः खलु; तयोरेव प्रत्यक्षतः प्रतीतेः। स्पष्टमन्यत् ॥

इत्थं मन्त्रगतं छन्दः प्राणात्मरूपत्वेन प्रशस्य तदभिमानिदेवताद्वारेणापि प्रशंसति— "अथो अग्निर्वै गायत्रीन्द्रस्त्रिष्टुबिति। "स अग्निर्देवतान्वसृजत गायत्रं छन्दस्त मिन्द्रो देवतान्वसृज्यत त्रैष्टुभं छन्द'-इतिश्रुतत्वात् * प्रजापतिसकाशोत्पन्नत्वेनाग्नेर्गायत्रीत्वम्, इन्द्रस्य च त्रिष्टुप्त्वम्। अत एव अग्निनेन्द्रेण सम्बन्धेन मन्त्रेणोखाप्रवृञ्जनात् 'ऐन्द्राग्नोऽग्निः' यजमानः। "यावानग्निरित्यादि पूर्ववत् ॥

तत्रत्यसर्वदेवतात्मकत्वद्वारेणाभ्यां प्रवृञ्जनं प्रशंसति— "इन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निरित्यादिना। "ते देवा बिभ्यतोऽग्निं प्राविशन्"-इति † श्रुतेः अग्नेः सर्वदेवतात्वम्, इन्द्रस्य च सर्वदेवा-

---

* तै० सं० ७. १. १. ४ द्रष्टव्यम्।

† तै० सं० ६. ६. २. १० द्रष्टव्यम्।

धिपतित्वम् ; अतस्तद्द्वारा अग्निरुख्योऽपि सर्वदेवतात्मकः । गत मन्यत् ॥

मन्त्रद्वयगतपादसङ्ख्याद्वारेणापि मन्त्रद्वयेन प्रहरणं प्रशंसति— "सप्त पदानि, सप्तचितिकोऽग्निरित्यादिना । अग्नेः सप्त चितयः ; षट् चितय इष्टकाः, अथ सप्तमी तु "विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति, हिरण्यशकलैः प्रोक्षति, अग्नि मभ्यादधाति, सा सप्तमी चितिः"–इति * सप्तचितयः । गत मन्यत् ॥

"तावद् तद् भवतीति । तदुखाप्रहरणरूपं कर्म 'तावत्' अग्निमात्रया समं 'भवति' ॥ ७ ॥

सन्तपने सति उखाया या दीप्तिः, सा रेतआत्मना, सन्तापक मग्निं पुरुषात्मना, उखा च योषिदात्मना, सन्तापञ्च सम्भोगात्मना प्रशंसति— "तां यदाग्निः सन्तपत्यथैना मिति ॥ ८ ॥

उखायां चिरारोहणविषये केषाञ्चित् पक्ष मुपन्यस्य निराचष्टे— "तद्धैके यदि चिर मर्चिरारोहतीत्यादिना । 'अर्चिः' सामग्रीप्रोज्ज्वल्याभावेन 'चिरं' कालविलम्बेनारोहेत्, ततः प्रागेव 'अङ्गारानावस्ति' उखां प्रक्षिपेयुः । तेषा माशयः,— 'उभयेन' प्रकारेण अर्चिषा च 'एषः अग्निः' जायत इत्यभिप्रायः । तत्पक्षं निराकरोति— "न तथा कुर्यादिति । तत्पक्षानाश्रयणे कारण माह— "अश्वस्वान्वाव पशुर्जायत इति । 'पशुः' जननकाले 'अश्वस्वान् वाव' अश्वस्वानेव साश्विक एव 'जायते', 'अथ'

---

* उपरिष्टात् ८. १. ४. ६ द्रष्टव्यम् । पूर्वत्र चेह ( ३१६पृ० ७पं ) गतम् ।

तस्मात् कारणात् 'अग्रे एव' जननात् प्राक्काले एव 'अस्यन्व-न्तम् इव' 'न न्यूषन्ति' न स्थापयन्ति लोके। तर्हि किं कुर्व-न्तीत्यत आह— "रेत इवैव दधतीति। रेत एव दधति गर्भे। इत्थं लोकवृत्तान्तं प्रदर्श्य प्रकृते योजयति— "रेत उ एतदिति। 'अर्चिः' इति यत् एतद् अस्ति, तत् 'एतत्' 'रेतः' 'उ' खलु। अतो गर्भाधानकाले एव रेतसा सहाग्नेर्योगात् 'एनं' केवलम् 'अर्चिरेवारोहेत्'। अत्र सूत्रम्— "अनारोहत्यङ्गारानोप्यैके" —इति * ॥ ९ ॥

यदुक्तं सूत्रकृता— "अन्वारूढे त्रयोदशास्यां प्रादेशमात्रीं समिध आदधाति, अनारोहत्यङ्गारानोप्यैके, घृतोन्नां कार्मुकीं इन्न इति वैकङ्कतीं परस्या इति, औदुम्बरीं परमस्या इति, अपरशुवृक्णां यदग्न इति, अधःशयां यदत्तीति, पालाशीः प्रत्यय मह्यरहरिति"—इति †, तदिदं क्रमेण विवक्षुः आदौ कार्मुक्याः समिध आधानं विधाय प्रशंसति— "तां यदार्चिरित्या-दिना। अर्चीरूपस्य केवलरेतस आधाने सति अग्नेः सम्भूत्या आकारविशेषरूपाया अभावात् तथाभावाय समिदाधानं कर्त्तव्य मित्यर्थः ॥ १० ॥

आधातव्यायाः समिधो वृक्षविशेषसम्बन्धमाह— "सा कार्मु-की स्यादिति। धनुरुपादानभूतो वृक्षविशेषः क्रमुकः। तद्वि-कारत्वं समर्थयितु माख्यायिका माह— "देवाश्चासुराश्चेत्या-दिना। स्पर्द्धमानानां मध्ये ते देवाः 'अग्निम्' 'अनीकं' मुखं कृत्वा असुरानभिगताः, तस्मिन् समये असुराः प्रत्याहृत्य

* का० श्रौ० सू० १६. ४. ३४।

† का० श्रौ० सू० १६. ४. ३३—४०। वा० सं० ११. ७०—७५।

अग्नेरर्चिः प्रसृष्य, यावन्मात्रं गृहीत मासीत्, तावन्मात्र मर्चिषोऽयं 'प्रावृश्चन्' छिन्नवन्तः। छिन्नं तदग्रम् अस्यां पृथिव्यां प्रतिष्ठित मभूत्। स च तत्र क्रमुकाख्यो वृक्षः सम्पन्नः। 'क्रमुकः' नाम धनुष उपादानभूतः सारवान् वृक्षविशेषः।

उक्त मर्थं प्रत्यक्षबलेन दृढयति— "तस्मात् स स्वादुरिति। तस्मादित्युक्तम्, कस्मादित्याह— "रसो हीति। यस्मादग्नेः सारांशः, तस्मादित्यर्थः। तस्मिन्नेवार्थे प्रत्यक्षान्तरं दर्शयति— "तस्मादु लोहितोऽर्चिर्हीति। अर्चिषो लोहितवर्णत्वात् तदात्मको वृक्षोऽपि लोहितः। यत एवं 'क्रमुकः' यः अस्ति, 'स एषः अग्निरेव' वृक्षरूपेण परिणामात्। 'एतत्' एतेन क्रमुकसमिदाधानेन 'अग्नि मेव' 'सम्भूतिं दधाति' स्थापितवान् भवति ॥ ११ ॥

समिध इयत्तां विधाय प्रशंसति— "प्रादेशमात्री भवतीति। "प्रादेशमात्रो वै गर्भ इति। 'गर्भः' विष्णुः, यज्ञरूपः प्रादेशमात्रः। गर्भस्य प्रादेशपरिमाणत्वं लोकसिद्धम्। विष्णुरेव वामनावतारः गर्भरूपः प्रादेशमात्रः ॥ १२ ॥

आधेयायाः समिधः प्रवृश्चनं विधाय प्रशंसति— "घृते क्षुता भवत्यग्निर्यस्यै योनेरसृज्यततेति। 'अग्निः' उत्पन्नलक्षणः पूर्वं 'यस्यै' यस्याः 'योनेः' 'असृज्यत', 'तस्यै' तस्याः 'घृतम्' एव 'उल्ब मासीत्', 'तस्मात्' 'तत्प्रति' घृतं प्रति 'उद्दीप्यते'। 'तस्मात्' अन्यवयवत्वादेव 'तस्य' घृतस्य हुतस्य 'न भस्म भवति' इतरकाष्ठादिवत्। भस्माभावे कारण माह— "आत्मेव तदात्मान मप्येतीति। गत मन्यत् ॥ १३ ॥

समिदाधाने मन्त्रं विधाय विभज्य व्याचष्टे— "ता मादधाति

द्रुन्नः सर्पिरासुतिरित्यादिना * । द्रवणात् जङ्गमनात् 'द्रुः' वनस्पतिः, स एव अन्नं यस्य सः, सरणात् 'सर्पिः' घृतम्, तदेव 'आसुतिः' आसवस्थानीयं यस्य स तथोक्तः ।

प्रथमपादं व्याचष्टे— "दार्वन्नः सर्पिरशन इत्येतदिति । द्रुन्न इति पादेन यदुक्तम्, 'तदेतत्' एतदेव 'दार्वन्नः' इत्याद्युक्त मेवेत्यर्थः । अशनशब्देनान्नसामान्यवाचिना अपानलक्षणान्नविशेष उपलक्ष्यते । द्वितीयपादे प्रत्नशब्दं व्याचष्टे— "प्रत्नो होता वरेण्य इति । "सनातनो होता वरेण्य इत्येतदिति । स्पष्टम् । तृतीयं पादं व्याचष्टे— "सहसस्पुत्रो अद्भुत इतीति । "बलं वै सह इति । सहते अभिभवति शत्रु मिति सहो बलम्, मथनकाले बलेनोत्पाद्यमानत्वात् 'बलस्य पुत्रः' इत्युक्तम् । 'अद्भुतः' पूर्व मभूत इव, सर्वदा नूतन इत्यर्थः । अस्मान्ते स्वाहाकारेण समिदाधानं कर्त्तव्यम्, तच्च तिष्ठतैवेति विधत्ते— "तिष्ठन्नादधाति स्वाहाकारेणेति । "तस्योपरि बन्धुरिति । 'तस्य' स्वाहाकारेणाधानस्य 'बन्धुः' अर्थवादरूपो वाक्यशेषः 'उपरि' "स्वाहाकारेण रेतो वा इदं सिक्त मय मग्निरित्यादिना † प्रदर्श्यत इत्यर्थः ॥ १४ ॥

गर्भरूपायाः समिधः सर्वान्तरत्वं प्रशंसति— "तद्वा आत्मैवोखेत्यादिना । 'उखा' 'आत्मैव' स्त्रीशरीर मेव ; इतरस्या मवस्तीर्णानि मुञ्जतृणान्येव योनिः ; ततोऽप्यन्तरत्वात् । एवं शणादयोऽप्युन्नेयाः ॥ १५ ॥

* वा० सं० ११. ७० ।

† इत उत्तरस्मिन् ब्राह्मणेऽस्यत्रकण्डिकायां द्रष्टव्यम् ।

उखादीनां मात्मत्वादिकल्पनाया मुत्पत्तिं स्वय मेव दर्श-यति—"बाह्मोखा भवत्यन्तरे मुखा इत्यादिना। षात्मत्वादि-कल्पनायाः प्रयोजन माह— "एतेभ्यो वै जायमानो जायत इति। 'जायमानो' गर्भः 'एतेभ्यः' शरीरादिभ्यः सकाशात् 'जायते' खलु। जातस्य उत्पद्यमानस्य चाग्नेरपि एतेषा मपेक्षणात् 'एतत्' एतेन उखामुखादीनां मुखक्रमेण सम्पादनेन 'तेभ्य एव' षात्मादिभ्य एव 'एनम्' षग्निं गर्भरूपं 'जनयति'। षत उक्तक्रमेणै-वैतेषा मनुष्ठानं प्रशस्त मिति विधेयस्तुतिः ॥ १६ ॥ ४ [६. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

( षथ तृतीयं ब्राह्मणम् . )

षथ वैकङ्कती मादधाति। प्रजापतिर्या प्रथमा माहुति मजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवत् सैषा प्रथमाहुतिर्यद्विकङ्कतस्ता मस्मिन्नेतज्जुहोति तयैन मेतत् प्रीणाति परस्या षधि संवतोऽवरां २॥ ऽषभ्यातर। यत्राह मस्मि तां२॥ ऽषवेति यथैव यजुस्तथा बन्धुः ॥ १ ॥

षथौदुम्बरी मादधाति। देवाश्चासुराश्चोभये

प्राजापत्या अस्पर्द्धन्त ते ह सर्व्व ऽएव व्वनस्पतयो ऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवा असुरान् जित्वा तेषां व्वनस्पतीनवृञ्जत ॥ २ ॥

ते होचुः । हन्त येषु व्वनस्पतिषूर्ग्यो रस उदुम्बरे तं दधाम ते यद्यपक्रामेयुर्यातयामा अपक्रामेयुर्यथा धेनुर्दुग्धा यथानड्वानूहिवानिति तद्येषु व्वनस्पतिषूर्ग्यो रस आसीदुदुम्बरे त मदधुस्तयैतदूर्जा सर्व्वान् वनस्पतीन् प्रति पच्यते * तस्मात् स सर्व्वदार्द्रः सर्व्वदा क्षीरी तदेतत् सर्व्व मन्नं यदुदुम्बरः सर्व्वे वनस्पतयः सर्व्वेणैवैन मेतदन्नेन प्रीणाति सर्व्वैर्वनस्पतिभिः समिन्द्धे ॥ ३ ॥

परमस्याः परावत इति । या परमा परावदित्येतद्रोहिदश्व इहागच्छेति रोहितो ह्यग्नेरश्वः पुरीष्यः पुरुप्रिय इति पशव्यो बहुप्रिय इत्येतदग्ने त्वं तरा मृध इत्यग्ने त्वं तर सर्व्वान् पाप्मन इत्येतत् † ॥ ४ ॥

---

* 'प्रतिपद्यते'—इति च दृष्टं डा०-वेवरमहोदयेन ।

† 'इत्येतत्'—इति ग, घ ।

अथापरशुवृक्णमादधाति। जायत ऽएष एतद्यच्चीयते स एष सर्व्वस्मा ऽअन्नाय जायत ऽएतद्धैक मन्नं यदपरशुवृक्णं तेनैन मेतत् प्रीणाति यदग्ने कानि कानि चिद्‌ा ते दारूणि दध्मसि। सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव यजुस्तथा बन्धुस्तद्यत् किञ्चापरशुवृक्णं तदस्मा ऽएतत् स्वदयति तदस्मा ऽअन्नं कृत्वापिदधाति * ॥ ५ ॥

अथाधःशयमादधाति। जायत ऽएष एतद्यच्चीयते स एष सर्व्वस्मा ऽअन्नाय जायत ऽएतद्धैक मन्नं यदधःशयं तेनैन मेतत् प्रीणाति यदत्त्युपजिह्विका यद्वम्रो ऽअतिसर्पतीत्युपजिह्विका वा हि तदत्ति वम्रो वातिसर्पति सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्येति यथैव यजुस्तथा बन्धुस्तद्यत् किञ्चाधःशयं तदस्मा ऽएतत् स्वदयति तदस्मा ऽअन्नं कृत्वापिदधाति † ॥ ६ ॥

अथैता उत्तराः पालाश्यो भवन्ति। ब्रह्म वै पलाशो ब्रह्मणैवेन मेतत् समिन्द्धे यद्देव पा-

---

*, † '०दधाति'—इति ख।

साम्यः सोमो वै पलाश एषो ह परमाहुतिर्यत् सोमाहुतिस्ता मस्मिन्नेतज्जुहोति तयैन मेतत् प्रीणाति * ॥ ७ ॥

अहरहरप्रयावं भरन्त इति । अहरहरप्रमत्ता आहरन्त इत्येतदश्वायेव तिष्ठते घास मस्मा ऽइति यथाश्वाय तिष्ठते घास मित्येतद्रायस्पोषेण समिषा मदन्त इति रय्या च पोषेण च समिषा मदन्त इत्येतदग्ने मा ते प्रतिवेशा रिषामेति यथैवास्य प्रतिवेशो न रिष्येदेव मेतदाह ॥ ८ ॥

नाभा पृथिव्याः समिधाने ऽअग्नाविति । एषा ह नाभिः पृथिव्यै यत्रैष एतत् समिध्यते राय-स्पोषाय बृहते हवामह ऽइति रय्यै च पोषाय च बृहते हवामह ऽइत्येतदिरम्मद मितीरया ह्येष मत्तो बृहदुक्थ मिति बृहदुक्थो ह्येष यजत्र मिति यज्ञिय मित्येतज्जेतार मग्निं पृतनासु सासहि मिति जेता ह्यग्निः पृतना उ सासहिः † ॥ ९ ॥

---

* 'प्रीणाति' - इति ख ।

† 'सासहिः' - इति ग, घ ।

याः सेना अभीत्वरीः । दंष्ट्राभ्यां मलिम्लून्ये जनेषु मलिम्लवो यो ऽस्मभ्य मरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो ऽस्मान् धिप्साच्च सर्व्वं त मस्मसा कुर्व्विति ॥ १० ॥

एतद्वै देवाः * । यज्ञैनानह्वेड् यज्ञाद्विषुस्त मस्मा ऽश्मनं कृत्वाप्यदधुस्तेनैन मप्रीणन्नत्र मह्वैतस्याभवद्-दहदु देवानां पाप्मानं तथैवैतद्यजमानो यज्ञेन द्वेष्टि यं च द्वेष्टि त मस्मा ऽश्मनं कृत्वापिदधाति तेनैनं प्रीणात्यत्र मह्वैतस्य भवति दहत्यु यजमानस्य पाप्मानम् ॥ ११ ॥

ता एता एकादशादधाति † । क्षत्रियस्य वा-पुरोहितस्य वा सर्व्वं वै तद्यदेकादशा सर्व्वं तद्यद्-क्षत्रियो वापुरोहितो वा ॥ १२ ॥

द्वादश क्षत्रियस्य वा पुरोहितस्य वा । सर्व्वं वै तद्यद् द्वादश सर्व्वं तद्यत् क्षत्रियो वा पुरोहितो वा ॥ १३ ॥

---

* 'देवाः'—इति ग, घ ।

† '०दधाति'—इति ख, क ।

स पुरोहितस्यादधाति । सᳫंशितम्मे ब्रह्म सᳫं-
शितं वीर्यं बलम् । सᳫंशितं क्षत्रं जिष्णु य-
स्याहमस्मि पुरोहित इति तदस्य ब्रह्म च क्षत्रं
च सᳫंश्यति * ॥ १४ ॥

अथ क्षत्रियस्य । उदेषां बाहू ऽअतिर मुद्व-
र्चो ऽअथो बलम् । क्षिणोमि ब्रह्मणा मित्रानु-
न्नयामि स्वाँ२॥ ऽअहमिति यथैव क्षिणुयादमित्रा-
नुन्नयेत् स्वानेवमेतदाहोभे त्वेवैते ऽआदध्यादयं वा
ऽअग्निर्ब्रह्म च क्षत्रं चेममेवैतदग्निमेताभ्यामुभा-
भ्याᳫं समिन्द्धे ब्रह्मणा क्षत्रेण च ॥ १५ ॥

तास्त्रयोदश सम्पद्यन्ते । त्रयोदश मासाः
संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवैनमेतदन्नेन प्रीणाति ॥ १६ ॥

प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो
विष्णुरयमेतदात्मसम्मितेनैवैनमेतदन्नेन प्री-
णाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न
हिनस्ति यद् भूयो हिनस्ति तद्यत् कनीयो न तद-

* 'सᳫंश्यति'—इति ख ।

भवति तिष्ठन्नादधाति तस्योपरि बभ्रुः स्वाहाकारेण रेतो वाऽइदꣳ सिक्तमथ मग्निस्तस्मिन्यत् काष्ठान्यस्वाहाकृतान्यभ्यादध्याद्धिꣳस्यादेनं ता यत् समिधस्तेन नाहुतयो यदु स्वाहाकारेण तेनाग्नमन्नꣳ हि स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १७ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [६. ३.] ॥

अथ द्वितीयायाः समिधो वैकङ्कतत्वं विधाय प्रशंसति—"अथ वैकङ्कती मादधाति प्रजापतिर्वा यत्प्रथमा माहुति मजुहो-दिति *। पुरा 'प्रजापतिः' प्रजाः सृष्ट्वा, 'यां प्रथमा माहुति मजुहोत्', 'तां' प्रथमभूतां 'हुत्वा' 'यत्र' देशे 'न्यमृष्ट' हुत-शेषं निर्मार्जनं कृतवान्, 'ततः' तस्मात् देशात् 'विकङ्कतः' 'समभवत्'। यत एवम्, अतो विकङ्कतमाख्या आहुतिः 'प्रथमा-हुतिः'। प्रथमाहुतेरंशत्वात् अस्या अतिथिप्रथमाहुतत्वं युक्तम्, अतः 'तां' प्रथमाहुति मेव 'अस्मिन्' उखाग्नौ हुतवान् भवति। 'तया' चाहुत्या 'एनम्' अग्निं 'प्रीणाति'।

तत्र मन्त्रं साकल्येन पठित्वा तस्य निगदव्याख्यानता माह—"अस्या अधीत्यादिना। मन्त्रस्याय मर्थः †,—अग्ने! 'परस्याः' 'संवतः' सङ्ग्रामनामैतत् ‡, सङ्ग्रामस्य 'अधि' उपरि

* का० श्रौ० सू० १६. ४. ३६।

† वा० सं० ११. ७१।

‡ निघ० २ अ० १७ ख० ४६ प०।

'अवरान्' अस्मदीयान् 'अभ्यातर' अभ्यागमय। समनन्तरं 'यत्र' सङ्ग्रामे जनपदे वा 'अहम् अस्मि', 'तान् अव' तान् सङ्ग्रामान् जनपदान् वा रक्ष ॥ १ ॥

तृतीयसमिधो वृक्षविशेषं विधाय प्रशंसति— "अथौदुम्बरी मादधाति देवाश्चासुराश्चेत्यादिना *। देवासुरेषु परस्परं स्पर्धमानेषु सर्वेऽपि 'वनस्पतयः' 'असुरान्' एव 'अभ्युपेयुः' अभ्यगमन्, 'उदुम्बरः' एकः 'एव' 'देवान् न जहौ'। पश्चात् 'देवाः असुरान् जित्वा', 'तेषां' तेभ्यः सकाशात् 'वनस्पतीन्' 'अवृञ्जत' वर्जितानकुर्वन् ॥ २ ॥

"ते होचुरिति। पश्चात् 'ते' देवाः तेषु वनस्पतिषु विश्वास मकृत्वा 'वनस्पतिषु' 'यः ऊर्ग् रसः' सारोऽर्थः, 'तम्' 'उदुम्बरे' स्थापयाम इति परस्पर मुक्त्वा उदुम्बरे एव स्थापितवन्तः। एवं कुर्वता मभिप्राय माह— 'ते यद्यपक्रामेयुः' तदा दुग्धधेनुवत् जठवलीवर्दवच्च गतसारा एवापक्रामेयुः 'इति'। 'तथा' स्थापितयोर्जा 'सर्वान्' 'वनस्पतीन्' 'प्रति' सर्वेषां प्रतिनिधित्वेन 'पच्यते' परिपक्वबहुफलो भवतीत्यर्थः। प्रतेः कर्मप्रवचनीयत्वात् तद्योगात् 'वनस्पतीन्' इति द्वितीया। उक्त मर्थं प्रत्यक्षेण दृढीकरोति— "तस्मादार्द्रः सर्वदा क्षीरीति। स्पष्टम्। सर्ववनस्पतिप्रतिनिधित्वात् सर्वान्नाद्यात्मकः ॥ ३ ॥

तस्याः समिध आधाने मन्त्रं विधाय व्याचष्टे— "पर मस्याः परावत इति †। "या परमा परावदित्येतदिति। हे अग्ने! 'या' 'परमा' उत्कृष्टा, 'परावत्' दूरनामैतत् ‡, अत्यन्तं दूर

---

* का० श्रौ० सू० १६. ४. ३७।

† वा० सं० ११. ७२। ‡ निघ० ३अ० २७ख० ५प०।

मस्ति ; तादृशात् देशात् आगच्छ 'इति', 'एतत्' एतेन मन्त्रभागेनोक्त मित्यर्थः । द्वितीयभागे 'रोहिदश्व'-शब्दाभिधेयत्व मग्नेः कुत इति, तद् दर्शयति— "रोहितो ह्यग्नेरश्व इति । "रोहितोऽग्नेः"-इति निरुक्तम् * । तृतीयभागं व्याचष्टे— "पुरीष्यः पुरुप्रिय इतीति । "पशव्यो बहुप्रिय इत्येतदिति । पुरीष-शब्देन बहुपुरीषाः पशव उच्यन्ते । बहुभ्यः पशुभ्य आहितः पुरीष्यः । 'पुरु'-इति बहुनामसु पाठात् † बहुभ्यो यजमानेभ्यो देवताभ्योऽपि प्रियः । गत मन्यत् । चतुर्थभागे 'मृधः'-इत्येतस्य ‡ सङ्ग्रामनामकत्वात्र पाप मर्थ इति व्याचष्टे— "अग्ने त्वं तरा मृध इतीति । "अग्ने ! त्वं तर सर्वान् पाप्मनः इति एतदिति । तरतिरत्र निरासार्थः ॥ ४ ॥

अथ चतुर्थसमिदाधानं विधाय प्रशंसति— "अथापरशुवृक्ण मादधाति जायत एष एतदित्यादिना § । 'अथ' 'अपरशुवृक्णस्य' परशुना अच्छिन्नस्य वाय्वादिना भग्नस्य । तस्याधाने प्रयोजन माह— "स एष सर्वस्मा इति । कथ मस्यान्नत्व मित्यत आह— "एतद्वेक मन्न मिति । अपरशुवृक्ण मपि अन्नेषु मध्ये 'एक मन्नम्' ।

तत मन्त्रं विधाय तस्य व्याख्यानानपेक्षत्व माह— "यदग्ने कानि कानि चिदित्यादिना ‖ ।

---

* निघ० १ अ० १५ ख० २ प० ।
† निघ० ३ अ० १ ख० ३ प० ।
‡ निघ० २ अ० १७ ख० २० प० ।
§ का० श्रौ० सू० १६. ४. ३८ ।
‖ वा० सं० ११. ७३ ।

मन्त्रस्याय मर्थः,— हे ‘अग्ने !’ ‘यत्’ ‘यानि कानिचिद्’ रूपाणि ‘दारूणि’ ‘ते’ त्वयि ‘आदधसि’ आदध्मः, ‘तत् सर्वं’ ‘घृत मस्तु’ घृतवत् प्रिय मस्तु। ‘तद्’ घृतत्वेन कल्पितं यत् किञ्चित् काष्ठं ‘जुषस्व’ सेवस्व। हे ‘यविष्ठ्य’ युवतम अग्ने! मन्त्रस्यावयवार्थस्पष्टत्वम् “यथैव यजुस्तथा बन्धुः”-इत्यनेनोक्तम्, इदानीं तात्पर्यार्थ माह— “तद् यत् किञ्च अपरशुवृक्णम्, तदस्मा एतत् स्वदयति, तदस्मा अन्नं कृत्वापिदधातीति। ‘अस्मै’ शिशुरूपाय अग्नये। यथा लौकिकशिशोर्नवनीतादिक मन्नं कृत्वा आस्येऽपिदधाति, तथा कृतवान् भवतीति ॥ ५ ॥

अथ सप्तम्याः समिदाधानं विधाय प्रशंसति— “अथाधःशय्र मादधाति जायत एष इत्यादिना *। पूर्ववद् व्याख्येयम्। ‘अधः’ भूमेरुपरि स्वय मेव परितः ‘शयः’ शेते, सः ‘अधःशयः’। पूर्ववत्। तत्र मन्त्रं विधाय, पूर्वार्द्धं व्याख्याय, उत्तरार्द्धस्य स्पष्टार्थता माह— “यदत्त्युपजिह्विकेत्यादिना †। हे ‘अग्ने’ ‘यत्’ काष्ठम् ‘उपजिह्विका’ उपदीका ‘अत्ति’ भक्षयति, ‘वम्रः’ वल्मीको ‘वा’ ‘यत्’ काष्ठम् ‘अतिसर्पति’ आरोहति, ‘सर्वम्’ इत्यादि पूर्ववत्। मन्त्रस्य तात्पर्य माह— “तद्यत् किञ्चाधःशय मित्यादिना। अपरशुवृक्णाधःशययोर्वृक्षविशेषाविधानात् प्रकृत मुदुम्बरत्व मेव तयोरित्यवगन्तव्यम् ॥ ६ ॥

इत्थं पञ्चसमिधो विलक्षणतां विधाय, उत्तरासा मष्टानां समिधां पलाशैकद्रव्यत्व माह— “अथैता उत्तराः पालाश्यो भव-

---

* का० श्रौ० सू० १६. ४. ३६।

† वा० सं० ११. ७४।

त्यौति *। पलाशत्वं ब्रह्मत्वेन सोमत्वेन च प्रशंसति— "ब्रह्म वै पलाश इति, "यद्वेव पालाश्यः सोमो वै पलाशः"-इति च वाक्यद्वयेन †। "देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाशृणोत्"- इतिश्रुतेर्ब्रह्मत्वं पलाशस्य ‡। "तृतीयस्या मितो दिवि सोम आसीत्, तं गायत्र्याहरत् तस्य पर्ण मच्छिद्यत तत्पर्णो- ऽभवत्"-इतिश्रुतेः § पलाशस्य सोमावयवत्वात् "सोमो वै पलाशः"-इत्युक्तम् ॥ ७ ॥

अथ समिदाधानस्य षष्ठमन्त्रं चतुर्धा विभज्य व्याचष्टे— "अह- रहरप्रयावं भरन्त इत्यहरहरप्रमत्ता आहरन्त इत्यादिना ‖। मन्त्रस्य तु ब्राह्मणेनैव विस्पष्टं व्याख्यानात् न पृथगुक्त्यपेक्षास्ति। मिश्रणनिषेधवचनात् 'प्रयाव'-शब्देन तदविनाभूतो प्रमाद- लक्षणोऽर्थो विवक्षित इति ब्राह्मणेन व्याख्यातम्। 'भरन्तः'-इति- शब्दस्य च समिदाहरण मर्थ इत्युक्तम् ॥

द्वितीयभागेनोक्ताग्न्यर्थाहरणस्य दृष्टान्तोऽभिधीयत इति व्याचष्टे— "यथाश्वाय तिष्ठते घास मित्येतदिति। 'एतत्' एतेन मन्त्रभागेनोक्त मित्यर्थः। 'यथाश्वाय तिष्ठते' गृह एव निव- सते अश्वाय 'घासं' वालतृणादिकं प्रतिदिनं हरन्ति, 'तथास्मै अग्नये' इत्यर्थः।

---

* "पालाशीः प्रत्यृच मद्दरहरिति"-इति का० श्रौ० सू० १६. ४. ४०। अष्टभिः प्रत्यृच मष्टौ पालाशीः प्रादेशमिताः समिधः उखेऽग्नावादधातीति तत्सूत्रार्थः।

† पुरस्तात् ३३६ पृ० १६, १७ पं० द्रष्टव्ये।

‡ ब्रा० ब्रा० १ का० २ प्र० ६ अ० १६ क०।

§ तै० ब्रा० १. १. ३. १०।  ‖ वा० सं० ११. ७५।

तृतीयभागे 'रायस्पोषेण'-इत्यत्र 'धनस्य पुष्ट्या' इत्येवं-रूपोऽर्थः प्रतिभाति, तथापि राय इति निर्द्देशबलादेव अपुष्टस्य धनसिद्धेः शरीरादिपोषरूपोऽर्थः पृथगेव विवक्षित इत्यभिप्रेत्य 'रय्या च पोषेण च' इति पृथक्तया ब्राह्मणे व्याख्यातम्। न केवलं रय्या पोषेण च, किन्तु इडान्नेन च। "समदन्तो वयं मा रिषाम"-इत्युत्तरत्र सम्बन्धः।

चतुर्थभागस्य तात्पर्यं माह— "अग्ने मा ते प्रतिवेशा रिषा-मेति। "यथैवास्य प्रतिवेशो न रिष्येत्, एव मेतदाहेति। प्रतिवेशो नाम स्वगृहे अलभ्यमानस्य पदार्थस्यानयनायोचितं स्वगृहनिकटवर्त्ति मित्रादिगृहम्। अत्र तद्वान् विवक्षितः। अग्नेश्चाग्नेरभिमतहविःप्रदाता प्रतिवेशी यजमानः, उक्तलक्षणं तद्गृहं वा 'न रिष्येत्' न हिंस्यात्, एव मनुगृह्णाणीत्येवंरूप मर्थ मयं मन्त्रभाग आहेत्यर्थः ॥ ८ ॥

अथ तेषु सप्तमसमिदाधानमन्त्रं विभज्य व्याचष्टे— "नाभा पृथिव्याः समिधाने अग्नावित्येषा ह नाभिः पृथिव्यै"-इति *। मन्त्रस्याय मर्थः— 'पृथिव्याः' 'नाभा' नाभौ आहवनीयाख्ये 'समिधाने' अग्नौ समिध्यमाने सति 'रायः' धनस्य 'बृहते' महते 'पोषाय' 'हवामहे' आह्वयामः। 'इरम्मदम्' इरया मादयि-तव्यम्, 'बृहदुक्थं' महच्छस्त्रम्, 'यजत्रम्' यष्टव्यम्, 'जेतारं' जयशीलम्, 'पृतनासु' सङ्ग्रामेषु 'सासहिं' सोढारम् 'अग्निं' 'हवामहे' आह्वयामः † ॥

---

* का० श्रौ० सू० १६. ४. ४० ।

† वा० सं० ११. ७६ ।

प्रथमभागं व्याचष्टे— "एषा ह नाभिः पृथिव्यै, यत्र एष एतत् समिध्यत इति । 'यत्र' यस्मिन् देशे 'एषः' अग्निः 'एतत्' एतेन प्रकारेण 'समिध्यते', 'एषः' प्रदेशः 'पृथिव्यै' पृथिव्याः 'नाभिः' उच्यते । द्वितीयभागे रायस्पोषब्राह्मणं प्रागते मन्त्रे व्याख्यातम् * । तृतीयभागं व्याचष्टे— "इरम्मद मितीरया ह्येष मत्त इत्यादिना । 'इरया' घृतादिनान्नेन 'मत्तः' तर्पितः । 'हि'-शब्देन प्रसिद्धिर्द्योत्यते । अग्नेर्बृहदुक्थत्वं प्रसिद्ध मिति दर्शयति— "बृहदुक्थो ह्येष इति । यजत्रशब्दं व्याचष्टे— "यजत्र मिति यज्ञिय मित्येतदिति । चतुर्थभागस्यार्थः प्रसिद्ध इत्याह— "जेता ह्यग्निः पृतना उ सासहिरिति ॥ ९ ॥

अथाष्टमसमिदाधानमन्त्रस्य प्रतीक मुपादत्ते— "याः सेना अभीत्वरीरिति † । तस्यायमर्थः,— 'याः सेनाः' 'अभीत्वरीः' अभीत्वर्यः, अभियायिन्यः । क्वरप्-प्रत्ययान्तस्य "इण् गतौ"-इत्यस्य ‡ रूपम् । याः च 'आव्याधिनीः' आविध्यन्तीत्याव्याधिन्यः, आविध्यन्त्यः । 'उ'-शब्दोऽप्यर्थे । 'उद्गुणाः' उद्गूर्णा गुणा यासां ताः तथोक्ताः । पृषोदरादित्वात् § अभिमतरूपस्वरसिद्धिः । ये च 'स्तेनाः' ये च चौराः, ये च 'तस्कराः' पापकारिणः । "तस्करः, तत् करोति यत् पापक मिति नैरुक्ताः ||"-इति । तान् सर्वान् हे अग्ने ! ते आस्ये भक्षणाय प्रक्षिपामि ॥

---

* पुरस्तादिहैव ( ३४८ पृ० १ पं० ) द्रष्टव्यम् ।

† वा० सं० ११. ७७ ।

‡ अदा० प० ३५ धा० ।

§ पा० सू० ६. ३. १०९ ।

|| निरु० ३. ३. २ ।

अथ नवम्याः समिदाधानमन्त्रप्रतीक मुपादत्ते—"दंष्ट्राभ्यां मलिम्लूनिति *। तस्याय मर्थः,— 'दंष्ट्राभ्यां' 'मलिम्लून्' मलिम्लुचः 'उत' अपि च 'तस्करान्' परद्रव्यापहरणलक्षणपापकारिणः 'जम्भैः' जम्भनार्हैः उपर्यधोवर्त्तिभिः पुरोदन्तैरित्यर्थः। तैः 'खाद'। हे भगवन्! षड्गुणैश्वर्ययुक्त! अग्ने! हनुभ्यां स्तेनान् खादितानेनान् यथा ईषदपि न परिशिष्यते, तथा सुष्ठु खादितान् कृत्वा खादेति॥

अथ दशम्या आधानमन्त्रप्रतीक मुपादत्ते— "ये जनेषु मलिम्लुच इति †। अस्याय मर्थः,— 'ये' 'जनेषु' 'मलिम्लुचः', 'स्तेनासः' स्तेनाः, ये च 'तस्कराः', तथा कक्षेषु नदीपर्वतगह्वरेषु 'अघायवः' पापं परस्मै इच्छन्तः, तान् तव जम्भयोः 'दधामि' स्थापयामि॥

अथैकादश्याः समिधो मन्त्रं पठति— "यो अस्मभ्य मिति ‡। 'यः' जनः 'अस्मभ्यम्' 'अरातीयात्' अरातिवदाचरेत्, 'यः' च जनोऽरातिः 'नः' अस्मान् 'द्वेषते' द्वेष्टि, 'यः' च जनः अस्मान् 'निन्दात्' निन्देत्, निन्दति, तथा 'धिप्सात्' दम्भातिः सन्, थासो लोपः, दम्भितुं हिंसितु मिच्छेत्, 'तं सर्वम्' 'भस्मसा' 'कुरु'। अनुकरणशब्दोऽयम्; यथा भक्षणसमये 'भस्मसा'-शब्दं कुर्वन्ति, तथा कुर्वित्यर्थः॥ १०॥

एतन्मन्त्रं प्रशंसितुं पुरावृत्त माह— "एतद्ध देवा यज्ञेनानित्यादिना। 'एतत्' अनेन प्रकारेण पुरा खलु देवाः 'अभ्यदधुः'–इत्याख्यातेन सम्बन्धः। 'एनान्' यजमानान् 'यत्र जनः'

---

* वा० सं० ११. ७८।

† वा० सं० ११. ७६।  ‡ वा० सं० ११. ८०।

'अहेट्' द्वेषं मकार्षीत्, 'यश्च' जनं यजमानाः 'अद्विषुः' द्वेषं मकुर्वन्। 'तम्' उभयविधम् 'अग्नौ' उत्पन्नाय शिशुरूपाय अग्नये 'अन्नं कृत्वा' 'अप्यदधुः' मुखे स्थापितवन्तः। 'तेन' अन्नेन 'एनम्' अग्निम् 'अप्रीणन्'। कथं तदन्नं भवतीत्याह— "अन्न महैतस्याभवदिति। "अह इति विनिग्रहार्थीयः" *। अन्न मेतस्याग्नेरेऽभवदेव। 'उ' अपि च पश्चात् सोऽग्निः 'देवानां' 'पाप्मानं' द्वेष्यम् 'अदहत्' भस्माकरोत्। तथैवैतद् यजमान इत्याद्यौपघातिकं वाक्य मुपोद्घातवद् व्याख्येयम् ॥ ११ ॥

या एता एकादश समिध उक्ताः, तासां क्षत्रियपुरोहित-व्यतिरिक्तविषयता माह— "ता एता एकादशादधात्यक्षत्रियस्य वापुरोहितस्य वेति †। क्षत्रियादन्यस्त्रैवर्णिकः अक्षत्रियः, तत्रापि 'अपुरोहितस्य' पुरोहितव्यतिरिक्तस्य, पुरोहितक्षत्रियव्यति-रिक्तो यो यागाधिकारी, तस्य 'एकादश आदध्यात्'। अस्यैका-दशसङ्ख्यायोग्यता मुपपादयति— "असर्वं वै तद्यदेकादशासर्वं तद्यदक्षत्रियो वापुरोहितो वेति। क्षत्रियपुरोहितयोः सर्वरक्षा-क्षमवीर्यातिशयदर्शनेन सर्वत्वं प्रसिद्धम्। अत एव तदितरस्य चासर्वत्वम्, एकादशसङ्ख्यायाश्च विषमसङ्ख्यारूपत्वादसर्वत्वम्, अतस्तस्य तदुचितम् ॥ १२ ॥

तर्हि क्षत्रियपुरोहितस्य कियत्य इत्यत आह— "द्वादश क्षत्रियस्य वा पुरोहितस्य वा सर्वं वै तद् यद् द्वादश"-इत्येतत् ‡ पूर्वेणैव व्याख्यातप्रायम् ॥ १३ ॥

---

* निरु० १. २. ४।

† का० श्रौ० सू० १६. ४. ४१।

‡ का० श्रौ० सू० १६. ४. ४२।

तर्हि पुरोहितस्य द्वादश को मन्त्रः क्षत्रियस्य वा क इत्यपेक्षायां तावत् पुरोहितस्याह— "स पुरोहितस्याभिदधाति संशितं मे ब्रह्मेति *। मन्त्रस्य स्पष्टार्थत्वेन विभज्य व्याख्यानानपेक्षणात् साकल्येन पठित्वा तात्पर्यं दर्शयति— "तदस्य ब्रह्म च क्षत्रं च संश्यतीति। मन्त्रे ब्रह्मक्षत्रयोः संशितत्वप्रदर्शनात् 'अस्य' पुरोहितयजमानस्य 'ब्रह्म च क्षत्रं च' उभे जाती 'संश्यति' सम्यक् तीक्ष्णीकरोति †।

मन्त्रस्य त्वक्षरार्थोऽयम्,— 'मे' मम स्वभूतं 'ब्रह्म' ब्राह्मणजातिः 'संशितं' भवति। एतदेव विवृणोति— 'ब्रह्मणः' 'वीर्यं' श्रुताध्ययनादिजनितम्, 'बलं' शारीरम्; तदुभयं संशितं भवतु। तथा 'जिष्णु' जयशीलं 'क्षत्रं' क्षत्रियजातिः; 'संशितं' यस्य क्षत्रस्याहं पुरोहितोऽस्मि, तत् संशितं भवत्विति ॥ १४ ॥

क्षत्रियपक्षे द्वादश्याः समिधो मन्त्र माह— "अथ क्षत्रियस्योदेषा मिति ‡। अस्य मर्थः,— 'एषां' विरोधिनां 'बाहू' भुजौ 'उदतिरम्' उद्धृतवानस्मि। तथा तेषां 'वर्चः' तेजः, 'अथो' 'बलं' शारीरम्, तत् सर्वम् उदतिरम्। किञ्च 'ब्रह्मणा' नियमाधीतेन मन्त्रेण 'अमित्रान्' विरोधिनः 'क्षिणोमि' हिंसितान् करोमि। 'स्वान्' अस्मदीयान् मित्रान् 'अहम्' 'उन्नयामि'। उत्तरार्द्धस्य तात्पर्य माह— "यथैव क्षिणुयादमित्रानुन्नयेत् स्वानेव मेतदाहेति। स्पष्टम् ॥

पुरोहितक्षत्रियव्यतिरिक्तस्य एकादश, तयोस्तु द्वादशैव।

* वा० सं० ११. ८१।

† का० श्रौ० सू० १६. ४. ४३।

‡ वा० सं० ११. ८२।

तथापि उपोत्तमा पुरोहितस्य, उत्तमा क्षत्रियस्येति व्यवस्थापितम् *। इदानीमुपोत्तमोत्तमे उभे अपि सर्वथा माधातव्ये इति सार्थवाद माह— "उभे त्वेवैते इति। तु-शब्दः पूर्वोक्त-व्यवस्थापकं वारयति, एव-शब्दो भिन्नक्रमः। ये 'उभे' पुरोहित-क्षत्रियविषयत्वेनोक्ते, ते उभे सर्वत्रादध्यादेव, न परित्यजेत्। तत्रो-पपत्ति माह— "अयं वा अग्निर्ब्रह्म च क्षत्रं चेति। 'अयम् अग्निः' एव ब्रह्मक्षत्रे; यद् ब्राह्मं क्षात्रं च तेजः, तस्याग्नेयत्वादित्यभि-प्रायः। अतः 'एतत्' एतेन ब्रह्मक्षत्रमन्त्राभ्याम् अग्नौ समिदा-धानेन 'इम मेव' उक्त्य मग्निम् 'एताभ्याम्' ब्रह्मक्षत्राभ्याम् 'उभा-भ्यां' 'समिन्धे' सम्यग् दीपितवान् भवति। तस्मादुभे अप्यवश्यं सर्वविषयतयानुष्ठेयेत्यर्थः।

एतदुक्तं भवति— पुरोहितक्षत्रियव्यतिरिक्ताना मेकादश वा त्रयोदश वा, तयोस्तु द्वादश वा त्रयोदश वेति। अत्र सूत्रम्— "उपोत्तमां क्षत्रियस्येत्त्तमां पुरोहितस्यान्यस्योभे"-इति †। 'अन्यस्य' पुरोहितक्षत्रियाभ्या मन्यस्य, तत्रापि पुरोहितव्यति-रिक्तस्य सक्षत्रियस्य, अन्यस्य क्षत्रियव्यतिरिक्तस्य पुरोहित-स्यान्यस्येत्यर्थः। एवं कर्कोपाध्यायैरपि व्याख्यातम् ॥ १५ ॥

अर्थसिद्धां त्रयोदशसङ्ख्या मनुद्य प्रशंसति— "तास्त्रयोदश सम्पद्यन्ते त्रयोदश मासाः संवत्सर इत्यादिना। 'ताः' समिधः। गत मन्यत् ॥ १६ ॥

समिधां प्रादेशमात्रत्वं विधाय प्रशंसति— "प्रादेशमात्र्यो भवन्ति प्रादेशमात्रो वै गर्भो विष्णुरित्यादिना। गर्भभूतस्य

* का० श्रौ० सू० १६. ४. ४१, ४२।

† का० श्रौ० सू० १६. ४. ४१, ४२, ४३।

यज्ञात्मकस्य विष्णोः प्रादेशमात्रत्वं गर्भाधारस्योदरस्य प्रादेशमात्रत्व मपेक्ष्येत्येतद्बोद्धव्यम्। समिदाख्यं वस्तु 'अन्नम्'; अतः 'एनं' गर्भम् 'आत्मसम्मितेन' आत्मसमप्रमाणेनैवानेन प्रीणाति। आत्म-सम्मितत्वं न्यूनाधिकभावे बाधदर्शनेन स्तौति— "यद्वा आत्म-सम्मित मन्नम्, तदवतीति। 'अवति' तर्पयति। 'कनीयः' चेत् 'न अवति' न तर्पयति, 'भूयः' चेत् अन्तरीषाद्युत्पा-दनेन 'हिनस्ति', अत आत्मसम्मितं प्रशस्तम्। तिष्ठतैवोक्त-समिधा माधानं कर्त्तव्य मिति विधाय, तदर्थवादं वक्ष्यमाण मतिदिशति। "तिष्ठन्नादधाति तस्योपरि बन्धुरिति। 'उपरि' नवमे काण्डे * "तिष्ठन् समिध आदधाति, अस्थीनि वै समिधः"- इत्यत्र उक्थधारणप्रस्तावे "तिष्ठन् वै वीर्यवत्तरः"-इति बन्धु-रुक्त इत्यर्थः॥

यत् समिधा माधान मुक्तम्, तस्य स्वाहाकारान्ततां विधाय प्रशंसति— "स्वाहाकारेण, रेतो वा इत्यादिना। उख्याग्ने-रुत्तरत्रोत्पद्यमानवैश्वानरार्थसिक्तरेतोरूपत्वात् तत्र प्रक्षेप्तव्यानि 'काष्ठानि' 'अस्वाहाकृतानि' चेत् 'अभ्यादध्यात्', 'एनं' रेतोरूप मग्निं हन्युः; सस्वाहाकाराणि चेत् हननं न कुर्युः। ननु केवल-काष्ठानां हिंसकत्वं प्रयुक्तम्, तच्च काष्ठाना माहुतित्वेन प्रक्षेपात् आहुतेश्चान्नत्वात् कथं हिंसकत्व मिति, तत्राह— "ता यत् समिधस्तेन नाहुतय इति। समिधां केवल मग्निसमिन्धन-साधनत्वेनानाहुतिरूपत्वात् नान्याहुतिवत्त्वम्, अतो हिंसकाः स्युरित्यर्थः। तर्हि स्वाहाकारसहितास्ता इति चेत् कथ मन्नाभावे-

---

* ९ प्र० २ ब्रा० ४६ कण्डी द्रष्टव्या।

नाहिंसकत्व मिति, तत्राह— "यदु स्वाहाकारेण तेनान्न मन्नं हि स्वाहाकारस्तथो हैनं न हिनस्तीति। स्वाहाकारेण वषट्-कारेण वा देवेभ्योऽन्नं प्रदीयत इति श्रुतेरन्नप्रदानहेतुत्वादन्न-त्वम्। स्पष्ट मन्यत्। "स्वाहाकारः सर्वासुखायाम्"-इति सूत्रम् * ॥ १७ ॥ ५ [ ६. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम् . )

अथ व्विष्णुक्रमान् क्रान्त्वा। व्वात्सप्रेणोपस्थायास्तमित ऽआदित्ये भस्मैव प्रथम मुद्वपत्येतद्वा ऽएन मेतेनान्नेन प्रीणात्येताभिः समिद्भिस्तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैन मेतद् व्यावर्त्तयति तस्मिन्नपहतपाप्मन्वाचं व्विसृजते व्वाचं व्विसृज्य समिध मादधाति रात्र्या ऽएवैन मेतदन्नेन प्रीणाति रात्रीꣳ रात्री मप्रयावं भरन्त इति तद्योक्तो बन्धू रात्र्या ऽएवैता मरिष्टिꣳ स्वस्ति मा-

* का० श्रौ० सू० १६. ४. ४४।

शास्ते तद्यत् किञ्चातो रात्र्योपसमादधात्याहुति-कृतꣳ हैवास्मै तदुपसमादधाति *॥ १ ॥

अथ प्रातरुदित ऽआदित्ये †। भस्मैव प्रथम मुद्दपत्येतद्वा ऽएन मेतेनान्नेन प्रीणात्येतया समिधा यच्च रात्र्योपसमादधाति तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैन मेतद् व्यावर्त्तयति तस्मिन्नपहत-पाप्मन्वाचं व्विसृजते व्वाचं व्विसृज्य समिध मादधात्यन्न ऽएवैन मेतदन्नेन प्रीणात्यहरहर्-प्रयावं भरन्त इति तस्योक्तो बन्धुरन्न ऽएवैता मरिष्टिꣳ स्वस्ति माशास्ते तद्यत् किञ्चातो ऽन्नो-पसमादधात्याहुतिकृतꣳ हैवास्मै तदुपसमाद-धाति ॥ २ ॥

अहोरात्रे वा ऽअभिवर्त्तमाने संव्वत्सर मापुतः संव्वत्सर इदꣳ सर्व्व माप्नायैवैता मरिष्टिꣳ स्वस्ति माशास्ते ‡॥ ३ ॥

---

* '०समादधाति'—इति ख, ङ ।

† 'ऽआदित्ये'—इति ग, घ ।

‡ 'माशास्ते'—इति ख, ङ ।

अथ यदास्मै व्रतं प्रयच्छन्ति । अथ व्रते न्यज्य
समिध मादधाति न व्रते न्यञ्ज्यादित्यु हैक ऽआहु-
राहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यद्दीक्षित आ-
हुतिं जुहुयादिति ॥ ४ ॥

स वै न्यञ्ज्यादेव * । दैवो वा ऽअस्यैष आत्मा
मानुषोऽयꣳ स यन्न न्यञ्ज्यान्न हैतं दैव मात्मानं
प्रीणीयादथ यन्न्यनक्ति तथो हैतं दैव मात्मानं
प्रीणाति सा यत् समित्तेन नाहुतिर्यदु व्रते न्यक्ता
तेनान्न मन्नꣳ हि व्रतꣳ † ॥ ५ ॥

स वै समिध माधायाथ व्रतयति । दैवो वा
ऽअस्यैष आत्मा मानुषोऽयं देवा उ वा ऽअग्रेऽथ
मनुष्यास्तस्मात् समिध माधायाथ व्रतयति ‡ ॥ ६ ॥

अन्नपतेऽन्नस्य नो देहीति § । अशनपतेऽशनस्य
नो देहीत्येतदनमीवस्य शुष्मिण इत्यनशनायस्य
शुष्मिण इत्येतत् प्र प्र दातारं तारिष इति यज-

---

* न्यञ्ज्यादेव'—इति ग, घ ।

† 'व्रत९'—इति ग, घ ।

‡ 'व्रतयति'—इति ख, 'व्रतयति'—इति क ।

§ 'देहीति'—इति क, ग, घ । 'देहीति'—इति ङ । 'देहीति'—इति ख ।

मानो वै दाता प्र यजमानं तारिष इत्येतदूर्जं नो धेहि द्विपदे चतुष्पद ऽइत्याशिष माशास्ते यदु भिन्नायै प्रायश्चित्ति माहोत्तरस्मिंस्तदन्वाख्यान ऽइति ॥ ७ ॥

यद्येषोखा भिद्येत। याभिन्ना नवा स्याल्युकबिली स्यात्तया मेनं पर्यावपेदार्च्छति वा ऽएषोखा या भिद्यते ऽनार्त्तो वा ऽइयं देवतानार्त्तया मिम मनार्त्तं बिभराणीति तन्नोखायै कपालं पुरस्तात् प्रास्यति तथो हैष एतस्यै स्वायै योनेर्न च्यवते * ॥ ८ ॥

अथ मृद माहृत्य। उखां चोपशयां च पिष्ट्वा संसृज्योखां करोत्येतयैवावृतानुपहरन् यजुस्तूष्णी मेव पक्त्वा पर्यावपति कर्मणिरेव † तत्र प्रायश्चित्तिः पुनस्तत् कपाल मुखाया मुपसमस्योखां चोपशयां च पिष्ट्वा संसृज्य निदधाति प्रायश्चित्तिभ्यः ‡ ॥ ९ ॥

---

* 'च्यवते'—इति क।

† 'कर्मणिरेव'—इति क।

‡ 'प्रायश्चित्तिभ्यः'—इति ख, क।

अथ यद्येष उख्योऽग्निरनुगच्छेत्। गार्हपत्यं ह्येव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्याद्वेवैनं प्राञ्चं मुद्धृत्योपसमाधायोखां प्रवृञ्ज्यादेतयैवावृतानुपहरन् यजुस्तूष्णी मेव तां यदाग्निरारोहति * ॥ १० ॥

अथ प्रायश्चित्ती करोति। सर्व्वेभ्यो वा ऽएष एतं कामेभ्य आधत्ते तद्यद्वेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तद्वेवैतत् सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं चाध्वरस्य पूर्व्वा मथाग्नेस्तस्योक्तो बन्धुः ॥ ११ ॥

स समिधाज्यस्योपहत्य †। आसीन आहुतिं जुहोति विश्वकर्मणे स्वाहेत्यथोपोत्थाय समिध मादधाति पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैरित्येतास्त्वा देवताः पुनः समिन्धता मित्येतद् घृतेन त्वं तन्वं वर्द्धयस्व

---

* '०रारोहति'—इति ख, ङ।

† '०स्योपहत्य'—इति क, ग, घ। '०स्योपहत्य'—इति ख, ङ।

सत्याः सन्तु यजमानस्य कामा इति घृतेनाह त्वं तन्वं वर्द्धयस्व येभ्य उ त्वां कामेभ्यो यजमान आधत्त तेऽस्य सर्व्वे सत्याः सन्त्वित्येतत् * ॥ १२ ॥

अथ यदि गार्हपत्योऽनुगच्छेत् । अरणी ह्येव स गच्छत्यरणिभ्याᳫं हि स आहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति † ॥ १३ ॥

अथ यदि प्रसुत आहवनीयोऽनुगच्छेत् । गार्हपत्यं ह्येव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्यादेवैनं प्राञ्चᳫं साङ्काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति यस्तस्मिन् कालेऽध्वरः स्यात्तमध्वरप्रायश्चित्तिं कुर्यात् समान्यग्निप्रायश्चित्तिः ‡ ॥ १४ ॥

अथ यद्याग्नीध्रीयोऽनुगच्छेत् । गार्हपत्यं ह्येव स गच्छति गार्हपत्याद्धि स आहृतो भवति गार्हपत्यादेवैनं प्राञ्च मुत्तरेण सदो हृत्वोपसमा-

---

* सन्त्वित्येतत'—इति ग, घ ।

† 'करोति'—इति ख ।

‡ '०प्रायश्चित्तिः'—इति ग, घ ।

धाय प्रायश्चित्ती करोत्यथ यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥ १५ ॥ ६ ॥

॥ इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् [६. ४.] ॥

अथ समिदाधानानन्तरं भस्मोद्वपनस्य काल माह— "अथ विष्णुक्रमान् क्रान्त्वा वात्सप्रेणोपस्थायास्तमिते आदित्ये भस्मैव प्रथम मुद्वपतीति *। विष्णुक्रमवात्सप्रयोः स्वरूप मुपरिष्टाद् वक्ष्यते †। 'प्रथमं' रात्रौ कर्त्तव्याया एकस्याः समिधः आधानात् पूर्वं 'भस्म' 'उद्वपन्ति' अपगमयन्ति। उद्वपनं प्रशंसति— "एतद्वा एन मिति। समिदाधान मेव अग्नेः अशेन प्रीणनम्, अतो भक्षितस्य 'अन्नस्य' पापरूपं 'भस्म' 'सीदति' अवशिष्यते। 'एतत्' एतेन पापशमनेनैव 'एनम्' अग्निम् 'तेन' भस्मना 'व्यावर्त्तयति'। यद्वा, 'एतत्' एतेन पापशमनप्रकारेण 'एनं' 'व्यावर्त्तयति', पश्चात् 'तस्मिन्' अग्नौ 'अपहतपाप्मन्' भस्माख्यपापरहिते सति पश्चात् अस्तमयात् प्राक् गृहीतां 'वाचम्', तदा 'विसृज्य' 'समिधम्' आदध्यात्। तत्समिदाधानम् अग्नेः रात्रिभोजन मवस्थानीयम्।

तत्र मन्त्रं विधाय, तद्व्याख्यानं प्रागुक्त मित्यतिदिशति— "रात्रीं रात्री मप्रयावं भरन्त इतीति ‡। "तस्योक्तो बन्धु-

* का० श्रौ० सू० १६. ५. ११, २१; ६. १।

† उपरिष्टात् पञ्चमप्रपाठकीयं चतुर्थं ब्राह्मणं द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ६. २।

रिति। समिदाधानप्रस्तावे "अहरह मप्रयावं भरन्तः"-इत्यत्र *। तात्पर्यं दर्शयति— "रात्र्या एवैता मरिष्टिं स्वस्ति माशास्ते † तद् यत् किञ्चेति। 'अतः' कारणात् तत्राग्नौ यत् किञ्चित् काष्ठादिक मादधाति, 'तत्' सर्वम् 'अस्मै' अग्नये 'आहुतिकृत मेव' 'उपसमादधाति' ॥ १ ॥

रात्रौ यत् कर्त्तव्यं भस्मोद्दपनादि उक्तम्, तत् सर्वं प्रातरपि विधत्ते— "अथ प्रातरुदित आदित्य इत्यादिना, "आहुतिकृतं हैवास्मै तदुपसमादधातीत्यन्तेन ‡। एतत् पूर्ववद् व्याख्येयम्। "अहरहरप्रयावम्"-इति § मन्त्रपाठे विशेषः ॥ २ ॥

रात्रावहनि च क्रियमाणे समिदाधानभस्मोद्दपने समुच्चित्य प्रशंसति— "अहोरात्रे वाभिवर्त्तमाने संवत्सर माप्नुत इति। एतस्य सर्वस्य जगतः संवत्सरोपलक्षितकालाधारत्वात् अहोरात्रस्य सर्वजगदात्मकत्वम्। 'आप्त्यै' संवत्सराय। अत्र कात्यायनः— "उखायां भस्मोद्दपन मस्तमिते पात्रे, वाचं विसृज्य समिदाधानं रात्रीं९ रात्री मप्रयाव मिति, एव मुदिते भस्मोद्दपनादि, अहरहरित्याधानम्"-इति ‖ ॥ ३ ॥

व्रतप्रदानकाले व्रतपयसि समिधं व्याधातव्य मिति, विधत्ते— "अथ यदास्मै व्रत मिति ¶। 'व्रतं' तत्साधनं पयः।

---

* एतत्पूर्वस्मिन् ब्राह्मणेऽष्टम्यां कण्डिकायां (३४० पृ०) द्रष्टव्यम्।

† मन्त्रस्तु वा० सं० ११. ७५. १।

‡ का० श्रौ० सू० १६. ६. ३।

§ वा० सं० ११. ७५. २।

‖ का० श्रौ० सू० १६. ६. १–४।

¶ का० श्रौ० सू० १६. ६. ८।

अत्र केषाञ्चित् पक्ष मुदाहृत्य तं निराकृत्य स्वपक्ष मुपसंहरति— "न व्रते न्यञ्ज्यादित्यु हैक आहुरिति । व्यञ्जनपक्षे दोष माह— "आहुतिं तज्जुहुयादिति । अस्त्वाहुतिः को बाध इत्यत आह— "अनवक्लृप्तं वै तदिति । 'अनवक्लृप्तम्' असमर्थम्, अनधिकृत मित्यर्थः ; "दीक्षितो न जुहोति न ददाति न पचतीति- निषेधात् ॥ ४ ॥

स्वपक्षे युक्ति माह— "स वै न्यञ्ज्यादेव दैवो वा इत्यादिना । 'अस्य' यजमानस्य 'दैवः' देवसम्बन्धी 'आत्मा' शरीरं च इत्याकाङ्क्षाया माह— "एष इति । 'एषः' अग्नि- रित्यर्थः । उत्तरत्र वैश्वानररूपेण यजमानस्योत्पत्तेः 'अयं' पाञ्चभौतिकः आत्मा 'मानुषः', अतो न्यञ्जने अकृते सति देवतासम्बन्धिनं स्वात्मानं न प्रीणीयात् ; न्यञ्जने तु प्रीणात्येव । ननु अवक्लृप्तिदोष उक्तः, तस्य कः परिहार इति, तत्राह— "सा यत् समित् तेन नाहुतिरिति । दैवस्यात्मनः कथं व्रतास्वाद- लाभ इति, तत्राह— "यदु व्रते न्यक्ता, तेनाज मिति । ननु पय एव कथ मन्न मित्यत आह— "अन्नं हि व्रत मिति ॥ ५ ॥

व्रतपरिग्रहस्य समिदाधानानन्तर्यं प्रशंसति— "स वै समिध माधाय व्रतयति दैवो वा इति * ॥ ६ ॥

तत्र मन्त्रं विधाय विभज्य तात्पर्य माह— "अन्नपतेऽन्नस्य नो देहीत्यशनपतेऽशनस्य नो देहीत्यादिना † । 'अमीव'-शब्दो व्याधिवचनः, अत्र बुभुक्षाख्यव्याधिपर इति व्याचष्टे— "अन-

---

* का० श्रौ० सू० १६. ६. ८ ।

† वा० सं० ११. ८३ ।

शनायस्य शुष्मिण इत्येतदिति। चरमपाद आशीःपर इत्याह— "आशिष माशास्त इति। हे 'अन्नपते' अग्ने! 'अन्नस्य' अन्नं 'देहि' प्रयच्छ 'नः' अस्मानित्यर्थः। अन्नं विशिनष्टि— "अनमीवस्य शुष्मिण इति। पुनरशनेच्छारूपो रोगो यस्य नास्ति, तादृशस्य 'शुष्मिणः' बलवतः। उक्तलक्षण मन्नम्, तस्य 'दातारम्' प्रयच्छन्तं 'प्रतारिषः' प्रावर्द्धयत। 'नः' अस्माकं 'द्विपदे चतुष्पदे' उभयविधाय प्राणिने 'ऊर्जम्' अन्नं बलं वा 'धेहि' ॥ ७ ॥

भिन्नाया उखायाः प्रायश्चित्तं कर्त्तव्यम्, "तदुत्तरस्मिन् अन्वाख्याने" आख्यान मनु आख्यायत इति 'अन्वाख्यानम्' ब्राह्मणम्, तदेतत् तत्र प्रदर्श्यत इति यत् प्रतिज्ञातम् *, तदिदानीं प्रदर्श्यत इत्यर्थः। प्रतिज्ञात मर्थं दर्शयति— "यद्येषोखा भिद्येतेत्यादिना †। 'यदि' प्रमादात् 'एषा उखा' 'भिद्येत' भिन्ना भवेत्, तर्हि अभिन्नायां प्रभूतबिलायां नवस्थाल्याम् 'एनम्' अग्निम् उखागतं 'पर्यावपेत्', 'एषा' अभिन्ना 'उखा' 'आर्च्छति वै' आर्त्तिम् नाशलक्षणां प्राप्नोति खलु। किं तत इत्यत आह— "अनार्त्ता वेति। 'इयम्' अग्न्याख्या देवता 'अनार्त्ता' आर्त्तिरहितैव खलु। आर्त्तोखाया अनर्हत्वात् अनार्त्तायां स्थाल्याम् 'अनार्त्तम्' अग्निं 'बिभराणि' इत्यभिप्रायेण प्रभूत-बिल-नव-स्थाल्यां पर्यावपनं प्रशस्तम्। अग्नेरनार्त्तत्व मवा-

---

* पुरस्तात् ५ अ० २ ब्रा० २२ क० (२६६ पृ०) द्रष्टव्यम्।

† का० श्रौ० सू० १६. ७. ८। एतच्चैकोखापक्षे; त्रित्वपक्षे तु द्वयोरेवैकस्या मावपनम्। विहितं तत् पुरस्तात् (५. २. २२.) द्रष्टव्य मिहैव।

मारदीक्षाप्रस्तावे प्रागुक्तम् *। "तत्रोखाया इति। भिन्नोखायाः 'कपालं' 'पुरस्तात्' स्थाल्यां पुरो देशे 'प्रास्यति' प्रक्षिपेत् †। 'तथा' सति अयमग्निः स्वस्य या 'योनिः' उत्पत्तिस्थानम्, ततो 'न च्यवते' प्रच्युतो न स्यात् ॥ ८ ॥

किमेतावता प्रायश्चित्तिः स्यात्? नेत्याह— "अथ मृद मित्यादिना। 'उखां' भिन्नाम्, 'उपशयां' उखानिर्माणकाले प्रायश्चित्तार्थं मुखासमीपे स्थापितां 'च' 'मृदं' पुनः 'पिष्ट्वा'। 'आवृत्' प्रकारः, एतेन पूर्वोक्तेनैव प्रकारेण ‡। मन्त्रस्यापि प्रसक्तावाह— "अनुपहरन् यजुरिति। यजुर्मन्त्र मनुपहरन्। पाकोऽपि 'तूष्णी मेव' कर्त्तव्यः। 'पर्यावपति' स्थाली मेता मग्नौ प्रक्षिपेत्। 'कर्मणिरेव' पुनः करणरूपं कर्मैव 'तत्र' उखा-भेदे प्रायश्चित्तिः। 'पुनः' 'तत्' उखाकपालं स्थाल्यां स्थापितम् 'उखाया मुपसमस्य' तां मुखाञ्चोपशयाञ्च शिष्टां 'पिष्ट्वा संसृज्य निदधाति' पुनः प्रायश्चित्तार्थम् § ॥ ८ ॥

उख्याग्न्यनुगमने प्रायश्चित्त माह— "अथ यद्येव उख्यो-ऽग्निरिति। गार्हपत्य मेव सोऽनुगत उख्योऽग्निः गच्छति; गार्हपत्यादाहृतस्य आहवनीयस्य ज्वालारूपेणोख्याग्नित्वेनोत्पन्न-त्वात्। एतदेवाह— "गार्हपत्याद्धीति। यत एवम्, अतो

---

* ३ का० ४अ० ३ ब्रा० (३ भा० ३४१ पृष्ठतः) द्रष्टव्यम्।

† का० श्रौ० सू० १६. ७. १०।

‡ "उखोपशये पिष्ट्वा मृदा मह्वोखां करोत्यावृता"—इति का० श्रौ० सू० १६. ७. ६। उखाखण्ड मेक मुखायां प्रक्षिप्तम्, द्वितीय मुपशयया सह पिष्ट्वा 'आवृता' आवृच्छब्देन मन्त्रवर्जं क्रियामात्रम्।

§ का० श्रौ० सू० १६. ७. ११।

'गार्हपत्यादेव' 'एनम्' अग्निम् 'प्राञ्चम्' 'उद्धृत्य', 'उपसमाधाय' पुनः 'उखां' 'प्रहरेत्' । 'एतया एव आहुता' पूर्वोक्तोखाप्रहरणप्रकारेण अत्रापि 'अनुपहरन् यजुः' । तर्हि कथम् ? 'तूष्णी मेव' 'ताम्' उखाम् प्रहरेदिति शेषः *। प्रायश्चित्ताहुतेः उखाप्रहरणानन्तरत्व माह— "यदाग्निरारोहतीति ॥ १० ॥

"अथ प्रायश्चित्ती करोतीति । "उभे प्रायश्चित्ती करोतीति † वक्ष्यमाणेन प्रायश्चित्तेन प्रायश्चित्तद्वयं कुर्यादित्यर्थः । उख्याग्नेः सौमिकाग्निकोभयसाधारणत्वात् विहितं प्रायश्चित्तं सर्वकामसन्तानरूपत्वेन स्तौति— "सर्वेभ्यो वा एष एत मिति । सर्वकामाभिप्रायार्थ मग्नेराहितत्वात् तदनुगमे सति यदेवाङ्ग कामानां सम्बन्धि व्यवच्छिद्यते, तेन प्रकारेण सन्ततं व्यवच्छिन्नं करोति । कोऽर्थः ? 'सन्दधाति' इत्यर्थः ॥

उभयविधं प्रायश्चित्तं कर्त्तव्य मित्याह— "उभे प्रायश्चित्ती करोतीति ‡ । अध्वरस्य प्रकारविशेषञ्च दर्शयति— "पूर्वा मथाग्नेरिति । 'तस्य' अर्थवादात्मको 'बन्धुरुक्तः'— "उपायिष्येतत् कर्म, यदग्निकर्मेत्यनेनोक्त इत्यर्थः § ॥ ११ ॥

तत्र आग्निक-प्रायश्चित्तस्य प्रकारविशेषं मन्त्रविशेषं च दर्श-

---

* का० श्रौ० सू० १६. ७. ६ । एतस्य हृत्तिरिहालोच्या विशेषतः ।

† इत उत्तरस्यां कण्डिकायां द्रष्टव्यम् (१४ पं०) ।

‡ का० श्रौ० सू० १६. ७. ७ । अध्वरप्रायश्चित्तिः, आग्निकी प्रायश्चित्तिश्चेति ।

§ पुरस्तात् ३०६ पृ० १७ पं० द्रष्टव्यम् ।

यति— "स समिधाज्यस्योपहत्येत्यादिना *। पूर्वस्य समिदाधाने तिष्ठन्नित्युक्तत्वात् † अत्रापि तथात्वप्रसक्तावाह-- "आसीन इति। आज्यं समिधा आदाय जुहुयादित्यर्थः। तत्र मन्त्रं दर्शयति-- "विश्वकर्मणे स्वाहेतीति ‡।

आज्याहुत्यनन्तरं तत् समिदाधानं समन्त्रक माह-- "अथो-पोत्थाय समिध मिति §। आज्यहोमस्यासीनत्वाभिधानादुपो-त्थायेत्युक्तम्।

मन्त्रस्याय मर्थः ‖,— हे अग्ने! त्वाम् आदित्यादयः 'पुनः' 'समिन्धन्ताम्' दीपयन्तु। तथा 'ब्रह्माणः' ब्राह्मणाः ऋत्वि-गादयः 'समिन्धन्ताम्'। हे 'वसुनीथ!' नीथेति वाङ्नाम, वस्वर्थस्तुत!, यद्वा वस्वर्थं गमयत्। 'यज्ञैः' निमित्तभूतैः 'समि-न्धन्ताम्'। 'त्वं' च 'घृतेन' 'तन्वं' तनुं 'वर्द्धयस्व'। 'यजमानस्य कामाः' 'सत्याः' अवितथाः 'सन्तु'। "एतास्त्वा देवता इति पूर्वार्द्धतात्पर्यप्रदर्शनब्राह्मणं स्पष्टम्। उत्तरार्द्धं मनूद्य व्याचष्टे— "येभ्य उ त्वा मिति। 'येभ्यः' 'कामेभ्यः' निमित्तभूतेभ्यः 'यज-मान आधत्ते', 'ते सर्वे' अपि कामाः 'सत्याः सन्तु' इति।

---

* "प्रायश्चित्ते समिधोपहत्याज्यं विश्वकर्मण इति"—इत्येव माध्य-पाठः। का० श्रौ० सू० १६. ७. १। इह 'उपपूर्वस्य हन्तेर्ग्रह-णार्थो दृष्टोऽन्यत्रापि (३. ४. १. २५.), समिधा करणभूतया स्रुक्-स्थानीयया 'उपहत्य' गृहीत्वा'—इति च तद्वृत्तौ।

† पुरस्तात् ३४३ पृ० १ पं द्रष्टव्यम्।

‡ वा० सं० १२. ४३. २।

§ का० श्रौ० सू० १६. ७. २।

‖ वा० सं० १२. ४४।

आधानस्य सर्वकामनिमित्तत्वात् तस्य कृतत्वात् कामैरपि सर्वै-र्भवितव्य मित्येतत् उत्तरार्द्धेनोक्त मित्यर्थः ॥ १२ ॥

उख्यस्यानुगमप्रसङ्गात् तदाश्रयभूतगार्हपत्यस्याप्यनुगमे प्राय-श्चित्त माह— "अथ यदि गार्हपत्य इति *। अरणीभ्या मग्नि मुत्पाद्य गार्हपत्ये उपसमाधाय आध्वरिकाग्निकोभयप्रायश्चित्ते कुर्यात् ॥ १३ ॥

सुत्यादिने आहवनीयानुगतौ प्रायश्चित्त माह— "अथ यदि प्रसुत आहवनीय इति †। "शालामुखीयेन हुत्वेति। शाला-मुखीयं नाम शालामुखीय मारभ्य सदोहविर्धानमध्यगतपूर्व्वरज्जु मवलम्ब्योत्तरदिक्पर्य्यन्तः प्रागायतरज्जुमार्गः। स्पष्ट मन्यत् ॥

"प्रायश्चित्ती करोतीति ‡। सर्वत्र प्रायश्चित्तद्वय मभि-हितम्, तयोर्व्यवस्था माह— "यस्तस्मिन् कालेऽध्वरः स्यादिति। तत्कालानुरूपां प्रायश्चित्ति मध्वरप्रायश्चित्तिम्, सौमिकी मित्यर्थः। "समान्यग्निप्रायश्चित्तिरिति। 'समानी' एकरूपैव आग्निकी-प्रायश्चित्तिः। ससमिधाज्यस्योपहुत्येत्याद्युक्ते च। अय मर्थः,— सर्वत्रानुगमे अध्वरप्रयोगवेलायां तत्तत्कालचोदितां प्रायश्चित्तिं कुर्यात्, अग्निप्रयोगवेलाया मुक्ता मेकरूपा मेव आग्निकीं कुर्यादिति ॥ १४ ॥

"अथ यद्याग्नीध्रीय इत्यादि। अग्नीध्रमण्डपे भवः 'आग्नी-ध्रीयः'। तस्यापि गार्हपत्यादेव प्रणतत्वात् अनुगतोऽग्निः तत्रैव प्रविष्टो भवति, अतः 'गार्हपत्यात् एव' 'एनम्' अग्निम्

---

* का० श्रौ० सू० १६. ७. ३।

† का० श्रौ० सू० १६. ७. ४।

‡ 'प्रायश्चित्तिरिति अस्य सोमस्य सञ्ज्ञा'—इति का० १६. ७. १ वृ०।

'प्राञ्चम्' 'उत्तरेण सदः' सदस उत्तरदेशतो 'हृत्वा' आग्नीध्रे 'उपसमाधाय' तत्कर्मोचितां प्रायश्चित्तिं कुर्यात् *। सुत्यादिने गार्हपत्यानुगमने प्रायश्चित्तमाह— "अथ यदि गार्हपत्योऽनुगच्छेत् तस्योक्तो बन्धुरिति। "अरणीं वाव स गच्छति"-इत्यादिनोक्त इत्यर्थः † ॥ १५ ॥ ६ [ ६. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ६ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां हस्तिरथं सहिरण्यकलिकारश्चं सायणः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

* का० श्रौ० सू० २६. ७. ५, ६, ७।
† पुरस्तात् २६० पृ० ४ पं० द्रष्टव्यम्।

भाष्योत्थं प्राज्यजन्मा लवणज मनुष: सार्करं चार्कतेजा:,
रत्नाढ्यो रत्नरूपं गिरि मक्षत मुदा पात्तसाक्षिक्षणार्य: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे षष्ठोऽध्याय: समाप्त: ॥ ६ ॥

---

॥ इति षष्ठकाण्डे चतुर्थ: प्रपाठक: समाप्त: † ॥

---

* अथत्याद्दीप्यन्त: पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्या: ।

† इतोऽनन्तर मिह क-ग-घ-पुस्तकेषु "कण्डिकासंख्या १००"–इति, अन्यत्र "कण्डी १००"–इत्येव । तत्र १ ब्रा० ११ क०, २ ब्रा० १७ क०, ३ ब्रा० २४ क०, ४ ब्रा० १६ क०, ५ ब्रा० १७ क०, ६ ब्रा० १५ क०; सङ्कलनया १०० सिद्धम् ॥

अथ

पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

सप्तमेऽध्याये प्रथमं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यꣳ हैतद्यद्रुक्मः सत्यं वा ऽएतं यन्तु मर्हति सत्येनैतं देवा अबिभरुः सत्येनैवैन मेतद् बिभर्त्ति ॥ १ ॥

तद्यत्तत् सत्यम् । असौ स आदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतꣳ हिरण्य ममृत मेष परिमण्डलो भवति परिमण्डलो ह्येष एकविꣳशतिनिर्बाध एकविꣳशो ह्येष बहिष्ठान्निर्बाधं बिभर्त्ति रश्मयो वा ऽएतस्य निर्बाधा बाह्यत उ वा ऽएतस्य रश्मयः ॥ २ ॥

यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वा ऽआदित्य एष रुक्मो नो हैत मग्निं मनुष्यो

मनुष्यरूपेण यन्तु मर्हत्येतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ ३ ॥

यद्देव रुक्मं प्रतिमुच्य बिभर्त्ति। रेतो वा ऽइदᳪ सिक्त मथ मग्निस्तेजो व्वीर्यᳪ रुक्मोऽस्मिंस्तद्रेतसि तेजो व्वीर्यं दधाति ॥ ४ ॥

यद्देव रुक्मं प्रतिमुच्य बिभर्त्ति। एतद्वै देवा अबिभयुर्यद्वै न इम मिह रक्षाᳪसि नाष्ट्रा न हन्युरिति तस्मा ऽएत मन्तिकाद्गोप्तार मकुर्व्वन्नमु मेवादित्य मसौ वा ऽआदित्य एष रुक्म स्तथैवास्मा ऽअय मेत मन्तिकाद्गोप्तारं करोति ॥ ५ ॥

कृष्णाजिने निष्यूतो भवति। यज्ञो वै कृष्णाजिनं यज्ञो वा ऽएतं यन्तु मर्हति यज्ञेनैतं देवा अबिभरुर्यज्ञेनैवैत मेतद् बिभर्त्ति लोमतश्छन्दाᳪसि वै लोमानि छन्दाᳪसि वा ऽएतं यन्तु मर्हन्ति छन्दोभिरेतं देवा अबिभरुश्छन्दोभिरेवैन मेतद् बिभर्त्ति ॥ ६ ॥

अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति। ऋक्सामयोर्हैते रूपे ऽऋक्सामे

वा ऽएतं यन्तु मर्हत ऋक्सामाभ्या मेतं देवा अबिभरुर्ऋक्सामाभ्या मेवैन मेतद् बिभर्त्ति प्राणो रुक्मपाशस्त्रिवृत्त्वस्योक्तो बन्धुः ॥ ७ ॥

त मुपरिनाभि बिभर्त्ति। असौ वा ऽआदित्य एष रुक्म उपरिनाभ्यु वा ऽएषः* ॥ ८ ॥

यद्देवोपरिनाभि†। अवाग्वै नाभे रेतः प्रजाति-स्तेजो व्वीर्यꣳ रुक्मो नेन्मे रेतः प्रजातिं तेजो व्वीर्यꣳ रुक्मः प्रदहादिति ॥ ९ ॥

यद्देवोपरिनाभि‡। एतद्वै पशोर्मेध्यतरं यदुपरि-नाभि पुरीषसꣳहिततरं यदवाङ्नाभेस्तद्यदेव पशो-र्मेध्यतरं तेनैन मेतद् बिभर्त्ति ॥ १० ॥

यद्देवोपरिनाभि§। यद्वै प्राणस्यामृत मूर्द्ध्वं तन्ना-भेरूर्द्ध्वैः प्राणैरुच्चरत्यथ यन् मर्त्यं पराक्तन्नाभि मत्ये-ति तद्यदेव प्राणस्यामृतं तदेन मेतदभिसम्पादयति तेनैन मेतद् बिभर्त्ति‖ ॥ ११ ॥

---

* 'एष'— इति ग, घ।

† 'यद्द्वोपरिनाभि'—इति ख। 'यद्द्वोपरिनाभि'—इति ग, घ।

‡ 'यद्द्वोपरिनाभि'—इति ग। 'यद्द्वोपरिनाभि'—इति घ।

§ 'यद्द्वोपरिनाभि'—इति ग, घ। ‖ 'बिभर्त्ति'—इति ख।

यथैन मासन्द्या बिभर्त्ति। इयं वा ऽआसन्द्यस्याꣳ हीदꣳ सर्व्वं मासन्न मियं वा ऽएतं यन्तु मर्हत्यनयैतं देवा अबिभरुरनयैवैन मेतद् बिभर्त्ति * ॥ १२ ॥

औदुम्बरी भवति। ऊर्ग्वै रस उदुम्बर ऊर्जैवैन मेतद्रसेन बिभर्त्यथो सर्व्वं ऽएते व्वनस्पतयो यदुदुम्बरः सर्व्वं वा ऽएतं व्वनस्पतयो यन्तु मर्हन्ति सर्व्वैरेतं व्वनस्पतिभिर्द्देवा अबिभरुः सर्व्वैरेवैन मेतद्वनस्पतिभिर्बिभर्त्ति † ॥ १३ ॥

प्रादेशमात्र्यूर्ध्वा भवति। प्रादेशमात्रो वै गर्भो व्विष्णुर्योनिरेषा गर्भसम्मितां तद्योनिं करोत्यरत्निमात्री तिरश्ची बाहुर्वा ऽअरत्निर्बाहुनो वै व्वीर्यं क्रियते व्वीर्यसम्मितैव तद् भवति व्वीर्यं वा ऽएतं यन्तु मर्हति व्वीर्येणैतं देवा अबिभरुर्व्वीर्येणैवैन मेतद् बिभर्त्ति ‡ ॥ १४ ॥

चतुःस्रक्तयः पादा भवन्ति। चतुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो दिशो वा ऽएतं यन्तु

---

*, †, ‡ 'बिभर्त्ति' – इति ख।

मर्हन्ति दिग्भिरेतं देवा अबिभरुर्दिग्भिरेवैन मे-
तद् बिभर्त्ति मौञ्जीभी रज्जुभिर्युता भवति त्रि-
वृद्भिस्तस्योक्तो बन्धर्मृदा दिग्धा तस्यो ऽएवोक्तोऽथो
ऽअनतिदाहाय * ॥ १५ ॥

अथैनꣳ शिक्येन बिभर्त्ति। इमे वै लोका एषो ऽग्निर्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं यच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैन मेतद् बिभर्त्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत् तस्योक्तो बन्धुर्मृदा दिग्धं तस्यो ऽएवोक्तोऽथो ऽअनतिदाहाय † ॥ १६ ॥

तस्याप एव प्रतिष्ठा ‡। अप्सु हीमे लोकाः प्रतिष्ठिता आदित्य आसञ्जन मादित्ये हीमे लोका दिग्भिरासक्ताः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥ १७ ॥

यद्वेवैनꣳ शिक्येन बिभर्त्ति। संवत्सर एषो-ऽग्निर्ऋतवः शिक्य मृतुभिर्हि संवत्सरः शक्नोति

---

*, † 'अनतिदाहाय'—इति ख।

‡ 'प्रतिला'—इति ग, 'प्रतिला'—इति घ।

स्थातुं यच्छक्नोति तस्मात्षिळ्क्ष्य ऋतुभिरेवैन मेतद् बिभर्त्ति षड्व्यामं भवति षड्वृतवः ॥ १८ ॥

तस्याहोरात्रे ऽएव प्रतिष्ठा*। अहोरात्रयोर्ह्ययꣳ संवत्सरः प्रतिष्ठितश्चन्द्रमा आसञ्जनं चन्द्रमसि ह्ययꣳ संवत्सर ऋतुभिरासक्तः स यो हैतदेवं वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति तस्य ह वा ऽएष संवत्सरभृतो भवति य एवं वेद संवत्सरोपासितो हैव तस्य भवति य एवं न वेदेत्यधिदेवतम्† ॥ १९ ॥

अथाध्यात्मम्। आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैन मेतद् बिभर्त्ति षड्व्यामं भवति षड्ढि प्राणाः‡ ॥ २० ॥

तस्य मन एव प्रतिष्ठा§। मनसि ह्ययमात्मा प्रतिष्ठितो ऽन्न मासञ्जन मन्ने ह्ययमात्मा प्राणे-

---

* 'प्रतिष्ठा'—इति ग, घ।

† '०देवतम्'—इति ग, घ।

‡ 'प्राणाः'—इति ग, घ।

§ 'प्रतिष्ठा'—इति ग, घ।

रासक्तः स यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति * ॥ २१ ॥

अथैन मुखया बिभर्त्ति । इमे वै लोका उखे-मे वा ऽएतं लोका यन्तु नार्हन्त्येभिरेतं लोकैर्हैवा अबिभरुरेभिरेवैन मेतल्लोकैर्बिभर्त्ति † ॥ २२ ॥

सा यदुखा नाम । एतद्वै देवा एतेन कर्म-णैतयावृतेमांल्लोकानुदखनन् यदुदखनंस्तस्मादुत्खो-त्खा ह वै ता मुखेत्याचक्षते परोऽक्षं परोऽक्ष-कामा हि देवाः ‡ ॥ २३ ॥

तद्वा ऽउखेति द्वे ऽअक्षरे । द्विपाद्यजमानो यज-मानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद् बिभर्त्ति सो ऽएव कुम्भी सा स्थाली तत् षट् षडृतवः संवत्सरः संवत्सरो ऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावत्तद् भवति § ॥ २४ ॥

अथैन मिण्ड्वाभ्यां परिगृह्णाति । असौ वा ऽआदित्य एषो ऽग्निरहोरात्रे ऽइण्ड्वे ऽअमुं तदा-

*, † 'बिभर्त्ति'—इति ख ।

‡ 'देवाः'—इति ग, घ ।

§ 'भवन्ति'—इति ख ।

दित्य महोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहो-
रात्राभ्यां परिगृहीतः ॥ २५ ॥

यद्वेवैन मिराड्भ्यां परिगृह्णाति । असौ वा ऽआदित्य एषोऽग्निरिमा ऽउ लोकाविराडु ऽअमुं तदादित्य माभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती तस्योक्तो बन्धुर्मृदा दिग्धे तस्यो ऽएवोक्तोऽथो ऽअनतिदाहाय ॥ २६ ॥

अथातः सम्पदेव * । आसन्दी चोखा च शिक्यञ्च रुक्मपाशश्चाग्निश्च रुक्मश्च तत् षट् षडृतवः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवतीत्यु तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति † ॥ २७ ॥

अथ सर्व्वसम्पत् । चत्वारः पादाश्चत्वार्यनू-

---

* 'सम्पदेव'—इति ग, 'सम्पदेव'—इति ख।

† 'भवति'—इति ख।

च्यानि शिक्यं च रुक्मपाशश्च यद्‌ किञ्च रुक्म-व्यं शिक्यं तदनुखाग्नी रुक्मस्तत् त्रयोदश त्रयो-दश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावत्तद् भवति * ॥ २८ ॥ १ ॥

॥ इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् [७. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

यदुक्तं कात्यायनेन— "यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डल मेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्ल-कृष्णेषु शणसूत्रे त्रिवृत्यो त मुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति"–इति †, तदिदं वस्तु मादौ रुक्मप्रतिमोकं विधत्ते— "रुक्मं प्रतिमुच्य बिभर्त्तीति। यजमानो रुक्मं सुवर्णमय माभ-रणं कण्ठे बध्वा उरसां धारयेत्। विहितं रुक्मप्रतिमोचन-पूर्वकं धारणं प्रशंसति— "सत्यं हैतद् यद् रुक्म इति। सत्य-स्ताग्निसंयोगेऽपि नाशादर्शनात् रुक्मस्य सत्यत्वम्। 'एतम्' अग्निं 'यन्तु' नियन्तु 'सत्यम्' एव 'अर्हति'। 'देवाः' 'सत्येन' सत्य माश्रयं कृत्वा 'अविभव:' भरण मकुर्वन्। 'एतत्' रुक्माख्यं सत्यम् आदित्यात्मना 'सत्येन' 'एव' 'बिभर्त्ति' ॥ १ ॥

---

* 'भवति'–इति ख।

† का० श्रौ० सू० १६. ५. १।

प्रशंसति— "तस्यासावसौ स आदित्य इति। रुक्मस्य सुवर्णमयतां विधाय प्रशंसति— "स हिरण्मयो भवतीति। हिरण्मयस्य भास्वररूपत्वात् ज्योतीरूपत्वम्, तदेव 'अमृतम्' अविनाशि, 'एषः' रुक्मः 'परिमण्डलः' वर्तुलः भवति। तत्रोपपत्तिः— "परिमण्डलो ह्येष इति। 'एषः' आदित्यः 'एकविंशतिनिर्बाधः'। बिन्दुसदृशाः पुलकाः धारणासमये निर्बाधाः *, यथा बाह्या भवन्ति, तथा धारयेत्। निर्बाधस्य बहिर्भावं प्रशंसति— "रश्मयो वा एतस्य निर्बाधा इति। 'एतस्य' आदित्यात्मकस्य रुक्मस्य ॥ २ ॥

रुक्मधारणं प्रशंसति— "यद्वेव रुक्मं प्रतिमुच्येति। मानुषेण रूपेण अग्नेर्धारणस्यानुचितत्वात् 'एतेन' रुक्माख्येन आदित्येन 'रूपेण' 'एतत्' अग्न्यात्मकं 'रूपं' 'बिभर्त्ति' ॥ ३ ॥

पुनः प्रकारान्तरेण प्रशंसति— "यद्वेव रुक्मं प्रतिमुच्येति। अस्याग्नेः रेतःसेकस्यागीयत्व मुक्तं प्राक्, रुक्मश्च तेजोरूपं वीर्यम्। तथा सति अग्नौ रुक्मसंयोजनेन रेतस्यन्यास्ये 'तेजः' वीर्य मेव स्थापितवान् भवति ॥ ४ ॥

पुनरप्यग्ने रुक्मसंयोग मग्नेर्गोमृत्वरूपेण प्रशंसति— "यद्वेव रुक्मं प्रतिमुच्य बिभर्त्तीति। पुरा 'देवाः' 'इमम्' अग्निम् 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'यह्वे' येनैव प्रकारेण 'न हन्युः', 'एतत्' एतेन विषयभूतेन 'अबिभयुः'। भीतिपरिहारोपायं दर्शयति— "तस्मा एत मन्तिकादिति। 'तस्मै' अग्नये 'एतम्' आदित्यम्। एतच्छब्दार्थ माह— "अमु मेवादित्य मिति। तर्हि

* निर्बाधाः, निर्बाधयन्ति निष्क्राम्यन्ति उन्नतात् स्वरूपाद् बहिर्निःसृता भवन्ति'—इति का० श्रौ० सू० १६. ५. १ वृ०।

मानुषैः कथं गोसारं कर्त्तुं शक्यत इति, तत्राह— "असौ वा आदित्य एष रुक्म इति ॥ ५ ॥

"कृष्णाजिने निष्यूतो भवतीति। नितरां स्यूतः सम्बद्धः भवति। यथा कृष्णाजिनस्योपरि वर्त्तेत, तथा कुर्यादित्यर्थः। "यज्ञो वै कृष्णाजिन मिति। यज्ञसाधनहविराधारत्वात् यज्ञ इत्युच्यते। शिष्टं गतप्रायम्। निषीवन मपि 'लोमतः' लोमप्रदेशे कर्त्तव्यम्। कृष्णाजिनस्य यज्ञत्वविधानात् तल्लोम्नां यज्ञावयवच्छन्दोरूपत्वं युक्तम्। गत मन्यत् ॥ ६ ॥

तत्रापि शुक्लकृष्णलोमरेखयोरुपरि निष्यूतेन भवितव्य मिति दर्शयति— "अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवतीति। उभयविधानां लोम्नाम् 'अभि' उपरि। "ऋक्सामयोर्हैते रूपे इति। 'ह'-शब्दः "ऋक्सामयोः शिल्पे"–इत्यादि * मन्त्रप्रसिद्धिद्योतनार्थः। गत मन्यत्। "शाणो रुक्मपाशस्त्रिवृदिति। रुक्मसम्बन्धनरज्जुः 'शाणः' शणतृणनिर्मितः, 'त्रिवृत्' त्रिगुणितः। "तस्योक्तो बन्धुरिति। शणार्थवादः— "शणकुलायमन्तरं भवतीत्यत्रोक्तः †, त्रिवृदर्थवादस्तु "त्रिवृदग्निरित्यादिनोक्तः ‡ ॥ ७ ॥

रुक्मधारणप्रदेशं विधाय प्रशंसति— "त मुपरिनाभि बिभर्त्त्यसौ वा आदित्य इति। "उपरिनाभ्यु वा एष इति। 'एषः'

---

* वा० सं० ४. ६। "कृष्णाजिनयोः सन्धि मालभत ऋक्सामयोरितीति का० श्रौ० सू० ७. ३. ३३। "यद्वै प्रतिरूपं तच्छिल्प मिति चेह पुरस्तात् (३. २. १. ५) द्रष्टव्यम्।

† पुरस्तात् (६ अ० १ ब्रा० २४ क०) द्रष्टव्यम्।

‡ पुरस्तात् (१ प्र० १ ब्रा० १४ क०) द्रष्टव्यम्।

चादित्य: 'उपरिनाभि' नाभेरुपरिप्रदेशे ; तत्र मध्ये ध्येयत्वात्, रश्मिवर्षनाभेरुपरि वर्त्तमानत्वाद् वा, जाठरवह्न्यात्मकस्य तस्य नाभेरुपरि वर्त्तमानत्वाद् वा ॥ ८ ॥

उक्त मुपरिनाभित्वं बहुधा प्रशंसति— "यद्देवोपरिनाभ्यवाङ् वै नाभेरित्यादिना। रेतस: 'प्रजाति:' उत्पत्ति: नाभेरर्वाक्प्रदेशे खलु, अत: 'तेज:' वीर्यरूप: 'रुक्म:' तां 'प्रजातिं' प्रदहेत्, तत् 'नेत्' नैवेष्टम्। "नेत्मेव इदित्यनेन सम्प्रयुज्यते परिभये"–इति * निरुक्तम् ॥ ९ ॥

प्रकारान्तरेण प्रशंसति— "यद्देवोपरि नाभीति। 'एतद्वै पशोर्मेध्यतरं' यन्नाभेरुपरिष्टाद् वर्त्तमानं हृदयादिकम्। 'नाभे:' 'अवाङ्' अर्वाक्देशे 'यत्' अङ्गम्, 'तत्' 'पुरीषसंहिततरम्' अत्यन्तं पुरीषेण सहितम्। "तद्यदेवेत्यादि, स्पष्टम् ॥ १० ॥

उपरिधारण ममृतस्योपरिधारणतया प्रशंसन् गतिभेदेन मृतामृतविभाग माह— "यद्देवोपरिनाभि यद्वै प्राणस्येति। प्राणस्य द्वावंशौ, अमृतांशो मृतांशश्च, तत्रामृताख्यो योऽंशोऽस्ति नाभेरूर्ध्वप्रदेशे, स: 'ऊर्ध्वै: प्राणै:' 'उच्चरति' उद्गच्छति ; य: मर्त्योऽंश:, स: नाभे: 'पराङ्' अवाङ्मुखं 'तं नाभिम्' 'अत्येति' अतिगच्छति। विभागप्रदर्शनप्रयोजन माह— "तद् यदेवेति। 'तत्' 'प्राणस्य' 'अमृतम्' अंशम् 'एनम् अभि' आयुष्यान्नेरुपरि 'सम्पादयति'। 'एतत्' एतेन, नाभेरुपरि सम्पादनेन 'एनम्' अग्निम् 'तेन' अमृतेन 'बिभर्त्ति' ॥ ११ ॥

उखाग्नेरूक्मस्योपरि धारणं विधाय तत्राप्यासन्द्यां धारणं

---

* निरु० १. ३. ६।

कर्त्तव्य मित्याह— "अथैत मासन्द्या मिति *। आसन्दीमहत्त्व-निमित्तं पृथिव्यां सम्पादयन् तदात्मकत्वसम्पादनद्वारेण प्रशंसति —"इयं वा आसन्दीति। आसीदत्यत्राग्निरित्यासन्दी, इयं पृथिव्यपि सर्वस्यापि पदार्थस्यासदनयोग्यत्वात् आसन्दी ; तथा च सती अस्या मेव भूतवान् भवतीत्यर्थः। "इयं वा एतं यन्तु मित्यादि, पूर्ववत् ॥ १२ ॥

आसन्द्या औदुम्बरत्वं विधाय प्रशंसति— "औदुम्बरी भवति ऊर्ग्वै रस इति। ऊर्ग्रूपत्वं सर्ववनस्पत्यात्मकत्वञ्च उदुम्बरसमिदाधानप्रस्तावे प्रागुक्तम् †। "सर्वे वा इत्यादि, पूर्ववत् ॥ १३ ॥

ऊर्ध्वप्रमाणं विधाय स्तौति— "प्रादेशमात्रीति। गर्भरूपिणो यज्ञस्य विष्णोरेषा आसन्दी अपि तदाधारभूता, अतः प्रादेशप्रमाणां 'योनिं' 'गर्भसम्मितां' गर्भसमपरिमाणां 'करोति'। तिर्यक्प्रमाण माह— "अरत्निमात्रीति। "तिरश्चीति। द्विप्रादेशोऽरत्निः, द्वयोररत्न्योर्बाहुः। किं तत इत्याह— "बाहुनो वै वीर्यं क्रियत इति। 'बाहुना उ' बाहुनैव। 'तत्' तस्मात् बाहुः 'वीर्यसम्मिता' 'भवति' प्रहारसमये तथा दर्शनात् ॥ १४ ॥

"चतुःस्रक्तय इति। स्रक्तिचतुष्टयोपेताः स्युः, 'अनूच्यानि' अपि चतुर्द्वाराणि स्युः। पादाग्रेषु आयततिर्यक्-काष्ठानि अनूच्यानीत्युच्यन्ते। स्पष्ट मन्यत्। 'त्रिवृद्भिः' त्रिगुणाभिः 'रज्जुभिः' 'व्युता' विविधं सन्तता। "व्येञ् तन्तुसन्ताने" ‡। "तस्योक्तो बन्धुरिति। मौञ्ज्यार्थवादः, मृदाहरणस्यादौ तदाहरणार्थं पद्म-

* का० श्रौ० सू० १६. ५. २।

† पुरस्तात् ६ अ० ६ ब्रा० २ क० ( १३७ पृ० ) द्रष्टव्यम्।

‡ भ्वा० उ० १००७ धा०।

त्रयवत्सुनरज्जुप्रस्तावे— "ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति, अग्निर्देवेभ्य उदक्रामत् स मुञ्जं प्राविशत्"–इत्यादिनोक्तः *; त्रिवृत्त्वं तु "त्रिवृदग्निरित्यत्र— "यैवाग्नेस्त्रिवृत्ता"–इत्युक्तम् †। आसन्दी 'मृदा दिग्धा' आलिप्ता स्यात्, 'तस्यो' तस्या अपि 'बन्धुः' मृत्स्तावकोऽर्थवाद उक्तः ‡। दृष्टप्रयोजनं च दर्शयति— "अथोऽमतिदाहायेति ॥ १५ ॥

"अथैनं मिति। 'एनम्' उख्याग्निम्। 'शिक्येन बिभर्त्ति' शिक्यवत्या मासन्द्याम् उखां बिभर्त्तीत्यर्थः §। उक्तमर्थमधिदैवताध्यात्मभेदेन प्रशंसति— "इमे वै लोका एषोऽग्निरित्यादिना। उख्याग्नेर्लोकत्रयात्मकत्वं मुखाद्वारा ‖। उखायाश्च लोकत्रयात्मकता "यो वा एष निधिः प्रथमोऽयं स लोकः"–इत्यादिना प्रागुक्तः ¶। तस्या दिशः शिक्यम्। किं तत इत्यत आह— "दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातु मिति। तस्माच्छिक्येन भरणं युक्तम्। प्रसङ्गाच्छिक्यशब्दनिर्वचनं दर्शयति— "यच्छक्नुवन्ति तस्माच्छिक्य मिति। स्वाधिष्ठितवस्तुधारणसमर्थत्वात्। शिक्यरूपकल्पनायाः प्रयोजनं दर्शयति— "दिग्भिरेवैन मिति। "षड्द्यामं भवतीति। ऊर्द्ध्वाधोविवक्षया दिशां षट्त्वम्। उक्तानि दामानि उद्यामानि, तेषां षट्त्वेनोपेतं कर्त्तव्यम्; सूत्रे

* पुरस्तात् २ प्र० ३ ब्रा० २६ क० (१३८ पृ०) द्रष्टव्यम्।

† पुरस्तात् १ प्र० ३ ब्रा० १८ क० द्रष्टव्यम्।

‡ ३ प्र० १ ब्रा० १ क० (१७६ पृ०) द्रष्टव्यम्।

§ का० श्रौ० सू० १६. ५. २।

‖ "त्रयो वा इमे लोकाः"–इत्यादि २६६ पृ० ६ पं० द्रष्टव्यम्।

¶ पुरस्तात् ६. ७. २२ (३६६ पृ० १० पं०) द्रष्टव्यम्।

षडुद्याम मिति पठितत्वात् *। यद्वा, उद्यमनसाधनत्वात् उद्याम-शब्देन शिक्यदामान्युच्यन्ते।

पाशानां मौञ्जत्रिवृत्तार्थवादः प्रागुक्तः †, उद्यमनानां षड्विधत्वार्थवादोऽपि प्रागुक्तः ‡, इत्यतिदिशति— "तस्यो एवेति। 'तस्य' मृदालेपनस्यापीति ॥ १६ ॥

"तस्याप एव प्रतिष्ठेति। 'तस्य' शिक्यस्य 'आपः' उदकान्येव 'प्रतिष्ठा' आस्पदम्; लोकसृष्टेः प्राक् उदकस्य सृष्टत्वात्। शिक्यस्याधस्तादवर्त्ती उद्यामाधारः पाशरचितोऽवयवविशेषः, स एवात्र 'प्रतिष्ठा'-शब्देनोक्तः। "आदित्य आसञ्जन मिति। आसज्यते बध्यते शिक्य मत्रेति 'आसञ्जनम्' शिक्याधारः काष्ठविशेषः। यद्वा, आसज्यत इत्यासञ्जनम्, शिक्यस्योर्द्धावयवः आदित्योऽत्र तत्स्थानीयः। उक्तार्थज्ञं प्रशंसति— "स यो हैतदेवं वेदेति ॥ १७ ॥

प्रकारान्तरेण प्रशंसति— "यद्वेवैनं शिक्येन बिभर्त्तीति। एतत् पूर्वकण्डिकावद् व्याख्येयम्। अग्नेः संवत्सररूपत्वं संवत्सरभरणात्, शिक्यस्य स्वाश्रिताधारकत्वनियमात् संवत्सरस्याग्निरूपत्वेन ऋतूनां संवत्सराधारत्वात् तेषां शिक्यत्वं युक्तम् ॥ १८ ॥

"तस्याहोरात्रे एव प्रतिष्ठेति। "चन्द्रमा आसञ्जन मिति। संवत्सरस्य चन्द्रकृतपक्षमासादिरूपत्वात् संवत्सरस्य चन्द्रासञ्जनरूपत्वम्। संवत्सरात्मकत्वप्रयुक्त मर्थवाद माह— "तस्य ह वा एष संवत्सरभृत

---

* "शिक्यपाशं प्रतिमुञ्चते षडुद्यामं त्रिवृता रूपाणीति"—इति का० श्रौ० सू० १६. ५. ६।

† पुरस्तात् ३८४ पृ० टीप्पणीद्वयं ( *, † ) द्रष्टव्यम्।

‡ पुरस्तात् ३७५ पृ० ३ पं० द्रष्टव्यम्।

इति । 'यः' 'एवम्' अग्नेः संवत्सरात्मकत्वम्, शिक्यस्य ऋत्वात्मकतां च 'वेद' जानीयात्, 'तस्य' 'एषः' उख्योऽग्निः 'संवत्सरभृतः' संवत्सरादर्वाचीनकाले धारणेऽपि कृत्स्नं संवत्सरं भृतवान् भवति । उक्तविज्ञानप्रशंसार्थ मविज्ञातुरुक्तफलाभावं दर्शयति — "संवत्सरोपासितो हैवेति । संवत्सर मुपासित एव भवति, परं न तूक्तरूपेण भृतः । उक्तवक्ष्यमाणयोः साङ्कर्यपरिहाराय उक्तस्याधिदैवतपरतां व्यवस्थापयति— "इत्यधिदैवत मिति ॥ १९ ॥

"अध्यात्म मिति । प्रदर्श्यत इति शेषः । "आत्मैवाग्निरिति । आत्मात्र देहव्यतिरिक्तो मनउपाधिकः । 'प्राणाः' शीर्षण्याः 'शिक्यम्' । ननु निरवयव मात्मानं प्रति धारकत्वेन कथं प्राणानां शिक्यत्वयोग्यतेति, तत्राह— "प्राणैर्ह्यय मात्मा शक्नोति स्यातु मिति । "प्राणाधिपः सञ्चरति स्वकर्मभिः"-इत्यादिश्रुतेः * प्राणोपाधिकत्वेन देहाख्यगृहेऽवस्थानसम्भवात् । अतः शक्नोत्यनेन अवस्थातु मिति । वर्णव्यापत्त्या शिक्यशब्दो निष्पन्नः † । 'प्राणानां' चक्षुःश्रोत्रनासारन्ध्रवर्त्तिनां षट्सङ्ख्यायोगात् "षड्ढि प्राणाः"-इत्युक्तम् ॥ २० ॥

शिक्यस्याधस्ताद्वर्त्तिन मवयवं दर्शयति— "तस्य मन एव प्रतिष्ठेति । एतत् समर्थयते— "मनसि ह्यय मात्मा प्रतिष्ठित इति । मनसा परिच्छेद्यत्वात् मनसि प्रतिष्ठितत्वम् । शिक्यस्योपर्यवयवं दर्शयति— "अन्न मासञ्जन मन्ने ह्यय मात्मा प्राणेरासक्त इति । अन्नाभावे सोपाधिकस्यात्मनो भोगाभावात् प्राण-

---

* श्वेता० उप० ५. ७ ।

† तदेवं शक्नोतेः शिक्य मिति रूपं निष्पद्यत इत्याशयः ।

शरीरेणावप्राणतो भवति। आत्मरूपोऽग्निर्मनश्चक्षुरादिभिः प्राणाख्यैः इन्द्रियैरन्नं भुञ्जानो वर्त्तत इत्यभिप्रायः। "स यो हैतदिति। 'एतत्' अग्निप्राणात्मकं वस्तु 'एवम्' उक्तप्रकारेण अग्नेरात्मत्वम् प्राणानां शिक्यत्वाद्यात्मकतां च 'वेद', सः 'एतेनेत्यादि, व्याख्यातम् * ॥ २१ ॥

उख्ययैव धारणं प्रशंसति— "अथैन मुख्ययेति। 'एनम्' अग्निम् 'इमे लोकाः' 'यन्तुं' धारयितुम 'अर्हन्ति' ॥ २२ ॥

उखां 'उख'-शब्दप्रवृत्तिनिमित्तप्रदर्शनद्वारा प्रशंसति— "सा यदुखा नामेत्यादिना। 'सा' स्थाली 'यद्' यस्मात् उखानाम भूतवती, तदभिधीयत इति शेषः। "एतद्वै देवाः उदखनन्" -इति सम्बन्धः। तत्प्रकार मभिनीय दर्शयति— "एतेन कर्मणेति। 'एतेन' परिदृश्यमानप्रकारेण। तद्द विशिनष्टि— "एतयैवावृतेति। 'आवृत्' प्रकारविशेषः। उद्धिमत्या उखाया लोकत्रयात्मकत्वस्योक्तत्वात् † उखोत्खनन मेव लोकत्रयोरखनन मित्यर्थः। खनन मत्र निर्माण मभिप्रेतम्। उत्खन्यमानत्वात् 'उखा'। स्पष्ट मन्यत् ॥ २३ ॥

भरणीया मुखां तद्गताक्षरसङ्ख्यया प्रशंसति— "तद्वा उखेति द्वे अक्षरे इत्यादिना। यजमानस्य चीयमानाग्न्यात्मना संस्कर्त्तव्यत्वात् 'यजमानोऽग्निः' इत्युच्यते। "यावानग्निरिति। द्वित्वपरिमाणवान्। 'अत्र' यजमानाभिन्नस्याग्नेः 'यावती मात्रा' अवयवः पादगतसङ्ख्या, 'तावता' कालेनापि 'एनम्' 'एतेन'

---

* १७५, १८४ पृ० १६ कण्डी द्रष्टव्या।

† ६ प्र० ७ ब्रा० ४, ५ क० (२६०, २६१ पृ०) द्रष्टव्यम्।

प्रकारेण 'बिभर्त्ति' धृतवान् भवति यजमानः। एवमन्यत्रापि ग्रावाग्निरित्येतद् व्याख्येयम्।

पर्यायान्तरं समुच्चित्य तद्गतसङ्ख्याद्वारेणोखाभरणं स्तौति— "सो एव कुम्भी स स्थाली तत् षडित्यादिना। 'सो एव' उखा, सैव, 'उ'-शब्दोऽनर्थकः। 'कुम्भी' कुम्भीत्यपि व्यवह्रियते, 'सा' एव 'स्थाली'। अत्र 'तत्' सर्वाणि मिलित्वा 'षट्'। गतमन्यत् ॥ २४ ॥

उख्याग्नेरिण्ड्वाभ्यां परिग्रहं प्रशंसति— "अथैनं मिण्ड्वाभ्या मिति *। 'इण्ड्वः' इति तत्रोखाधारणसाधनभूतौ परिमण्डलौ पदार्थविशेषौ; ताभ्याम् 'एनम्' उखाग्निं परिगृह्णाति। एकस्यैव तेजसः चित्यादिष्वग्न्याद्यात्मनावस्थानात् "त्रेधात्मानं व्याकुरुत"-इत्यादिश्रुतेः † एषोऽग्निरेव असौ आदित्यः। परिभ्रमतः आदित्यस्य पुरस्तात् पश्चाच्चावस्थिते 'अहोरात्रे' एव इण्ड्व-स्थानीये, अत इण्ड्वाभ्या मग्निपरिग्रहेण अहोरात्राभ्याम् अमुम् आदित्यं परिगृहीतवान् भवति। उक्त मर्थं लोकप्रसिद्ध्या द्रढ-यति— "तस्मादेष इति ॥ २५ ॥

इत्थमिण्ड्वे अहोरात्रात्मना प्रशस्य द्युपृथिव्यात्मलोकद्वयात्मनापि प्रशंसति— "यद्वेवैन मिति। तयोर्वर्तुलत्वं प्रशंसति— "परिमण्डले भवतः परिमण्डलौ हीमौ लोकाविति। इण्ड्वोर्मुञ्जविकृतित्वं त्रिवृत्त्वं च विधाय तदर्थवाद मुक्त मतिदिशति— "मौञ्जे त्रिवृती तस्योक्तो बन्धुरिति। "त्रिवृदग्निरित्या-

---

* का० श्रौ० सू० १६. ५. ३।

† अत्रैवोपरिष्टादाम्नास्यते ( १० का० ६ अ० ५ ब्रा० ३ क० )।

दिनेत्यर्थः *। तयोर्वह्निदाहपरिहाराय मृद्दिग्धत्वं विधाय तद्वाक्य-शेषं मप्यतिदिशति— "मृदा दिग्धे तस्यो एवोक्ता इति † । अत्र सूत्रम्— "इण्डुशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः, परि-मण्डलाभ्यां मिण्डुाभ्यां मुखां परिगृह्णाति"–इति ‡ ॥ २६ ॥

भर्त्संयस्याग्नेर्यावन्तः साधनपदार्थाः प्रागुक्ताः, तेषां या सङ्ख्यास्ति, तां सङ्ख्यां प्रशंसति— "अथातः सम्पदेवासन्दी चोखा चेत्यादिना । इतः परं सम्पत्सम्पत्तिरेवोच्यते, न तु नूतनः कश्चित् पदार्थोऽभिधीयत इत्यर्थः । शिक्यादयः षट्, ऋतवो-ऽपि षट्, तदात्मकः संवत्सरोऽग्निः; 'अतः' उक्तार्थसम्पा-दनेनैक एवाग्निः संवत्सरसम्मितो भवतीति 'सम्पत्' । उक्त-पदार्थसङ्ख्यया इण्डुसङ्ख्या मपि समुच्चित्य सम्पत्यन्तरं दर्श-यति— "इण्डु तदष्टाविति । अग्नेर्गायत्रत्वाच्च प्रजापतिमुखात् सहोत्पन्नत्वोपाधिनैकत्वम् § ॥ २७ ॥

इत्थं प्रधानपदार्थगतसङ्ख्यासम्पत्ति मुक्त्वाथ सर्वविषयां सम्पदं दर्शयति— "अथ सर्वसम्पदिति । उच्यत इति शेषः । 'चत्वारः पादाः' आसन्द्यां सन्ति, तस्याश्चतुर्दिक्ष्ववस्थितानि 'चत्वारि अनूच्यानि', तन्मिलित्वाष्टौ । शिक्यवत्कपाशौ द्वौ । ननु शिक्या-वयवा बहवः सन्ति, कथं न गण्यन्त इत्याह— "यद्‌ किञ्च

---

* पुरस्तात् ( १३८ पृ० १४ पं० ) द्रष्टव्यम् ।

† पुरस्तात् ( ३७५ पृ० ३ पं० ) द्रष्टव्यम् ।

‡ का० श्रौ० सू० १६. ५. ३ । 'उखा याभ्यां गृह्यते तौ इण्डू शिक्यं प्रसिद्धम्, आसन्दी च, अनुरक्ता रज्जवो मृद्दिग्धा भवन्ति । मृद्दिग्धाः कर्दमलिप्ताः'—इति तत्र वृत्तिः ।

§ तै० सं० ७. १. २. ४ द्रष्टव्यम् ।

रज्ज्वर्थं * शिक्य मिति। 'तदनु' शिक्य मनु 'उखा' भवति, सैका 'अग्निः'। एताभ्यां सह 'त्रयोदश'। "त्रयोदश मासाः संवत्सर इत्यादि, स्पष्टम् ॥ २८ ॥ १ [ ७. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

तं तिष्ठन् प्रतिमुञ्चते। असौ वा ऽआदित्य एष रुक्मस्तिष्ठतीव वा ऽअसावादित्योऽथो तिष्ठन् वै वीर्यवत्तर उदङ् प्राङ् तिष्ठंस्तस्योक्तो बन्धुः ॥ १ ॥

दृशानो रुक्म उर्व्या व्यद्यौदिति। दृश्यमानो ह्येष रुक्म ऊर्व्या विद्योतते दुर्मर्ष मायुः श्रिये रुचान इति दुर्मरं वा ऽएतस्यायुः श्रियो ऽएष रोचतेऽग्निरमृतो ऽअभवद्वयोभिरिति सर्व्वैर्व्वा ऽएष वयोभिरमृतो ऽभवद्यदेनं द्यौरजनयदिति द्यौर्वा ऽएत मजनयत् सुरेता इति सुरेता ह्येषा यस्या एष रेतः † ॥ २ ॥

---

* "मौञ्जं त्रिवृद् रज्ज्वर्थं भवति"—इति का० श्रौ० सू० १७. २. ६।
† 'रेतः'—इति ग, घ।

अथैनं शिक्याभ्यां परिगृह्णाति। नक्तोषासा समनसा विरूपे इत्यहोरात्रे वै नक्तोषासा समनसा विरूपे धापयेते शिशुमेकᳮसमीची इति यद्वै किञ्चाहोरात्रयोस्तेनैनमेव समीची धापयेते द्यावाक्षामा रुक्मो ऽअन्तर्विभातीति इरमेतद्यजुर्जपतीमे वै द्यावापृथिवी द्यावाक्षामा ते ऽएष यदन्तरा विभाति तस्मादेतद्यजुर्जपति देवा अग्निं धारयन् द्रविणोदा इति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्त ऽएत मग्र ऽएव मधारयंस्तैरेवैन मेतद्धारयति * ॥ ३ ॥

अथ शिक्यपाशं प्रतिमुञ्चते। विश्वा रूपाणि प्रतिमुञ्चते कविरित्यसौ वा ऽआदित्यः कविर्विश्वा रूपा शिक्यं प्रासावीद्भद्रं द्विपदे चतुष्पद ऽइत्युद्यन्वा ऽएष द्विपदे च चतुष्पदे च † भद्रं प्रसौति वि नाकमख्यत् सविता वरेण्य इति स्वर्गो वै लोको नाकस्त मेष उद्यन्नेवानुविपश्यत्यनु प्रयाण

---

* मेतद्धारयति'—इति ख।

† ग-घ-पुस्तकयोः 'द्विपदे चतुष्पदे च'—इत्येव पाठः।

मुषसो विराजतीत्युषा वा ऽअग्रे व्युच्छति तस्मा ऽएष व्युष्टिं विराजन्ननूदेति * ॥ ४ ॥

अथैनं मतो व्विकृत्या व्विकरोति । इद मेवैतद्रेतः सिक्तं व्विकरोति तस्माद्योनौ रेतः सिक्तं व्विक्रियते ॥ ५ ॥

सुपर्णो ऽसि गरुत्मानिति । व्वीर्यं वै सुपर्णो गरुत्मान् व्वीर्यं मेवैन मेतदभिसंस्करोति त्रिवृत्ते शिर इति त्रिवृत मस्य स्तोमꣳ शिरः करोति गायत्रं चक्षुरिति गायत्रं चक्षुः करोति बृहद्रथन्तरे पक्षाविति बृहद्रथन्तरे पक्षौ करोति स्तोम आत्मेति स्तोम मात्मानं करोति पञ्चविꣳशं छन्दाꣳस्यङ्गानीति छन्दाꣳसि वा ऽएतस्याङ्गानि यजूꣳषि नामेति यदेन मग्निरित्याचक्षते तदस्य यजूꣳषि नाम साम ते तनूर्व्वामदेव्य मित्यात्मा वै तनूरात्मा ते तनूर्व्वामदेव्य मित्येतद्यज्ञायज्ञियं पुच्छ मिति यज्ञायज्ञियं पुच्छं करोति धिष्ण्याः शफा इति धिष्ण्यैर्व्वा ऽएषो ऽस्मिंल्लोके प्रतिष्ठितः सुप-

---

* '०मनूदेति'—इति ख ।

र्णोऽसि गरुत्मान् दिवं गच्छ स्वः पतेति तदेनᳫं सुपर्णं गरुत्मन्तं कृत्वाह देवान् गच्छ स्वर्गं लोकं पतेति ॥ ६ ॥

तं वा ऽएतम् * । अत्र पक्षपुच्छवन्तं व्विकरोति यादृग् वै योनौ रेतो व्विक्रियते तादृग् जायते तद्यदेत मत्र पक्षपुच्छवन्तं व्विकरोति तस्मादेषो-ऽमुत्र पक्षपुच्छवान् जायते ॥ ७ ॥

तᳫं हैके । एतया व्विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वोभयतः प्रउगं † वा समुह्यपुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत् तादृक्तत् तस्मादेनᳫं सुपर्णचित मेव चिनुयात् ॥ ८ ॥

स मेतया व्विकृत्या । इत ऊर्द्ध्वं प्राञ्चं प्रगृह्णात्यसौ वा ऽआदित्य एषो ऽग्निरमुं तदादित्य मित ऊर्द्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्द्ध्वः

* 'ऽएतम्'—इति ग, घ ।

† 'उभयतःप्रउगं'—इति च इष्टः डा०-वेबरमहोदयेन ।

प्राङ् धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येष इतोऽथैन मुपावहरति त मुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ९ ॥

अथ व्विष्णुक्रमान् क्रमते। एतद्वै देवा व्विष्णुर्भूत्वेमांल्लोकानक्रमन्त यद्विष्णुर्भूत्वाक्रमन्त तस्माद् व्विष्णुक्रमास्तथैवैतद्यजमानो व्विष्णुर्भूत्वेमांल्लोकान् क्रमते ॥ १० ॥

स यः स व्विष्णुर्यज्ञः सः *। स यः स यज्ञोऽय मेव स योऽय मग्निरुखाया मेत मेव तद्देवा आत्मानं कृत्वेमांल्लोकानक्रमन्त तथैवैतद्यजमान एत मेवात्मानं कृत्वेमांल्लोकान् क्रमते ॥ ११ ॥

उदङ् प्राङ् तिष्ठन्। एतद्वै तत् प्रजापतिर्व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन् प्रजा असृजत तथैवैतद्यजमानो व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन् प्रजाः सृजते ॥ १२ ॥

व्विष्णोः क्रमोऽसीति। व्विष्णुर्हि भूत्वा क्रमते सपत्नहेति सपत्नान् ह्यत्र हन्ति गायत्रं छन्द

---

* 'सः'—इति ग, घ।

आरोहेति गायत्रं छन्द आरोहति पृथिवी मनु विक्रमस्वेति पृथिवी मनु विक्रमते प्रहरति पादं क्रमत ऽऊर्ध्व मग्नि मुद्गृह्णात्यूर्ध्वो हि रोहति ॥ १३ ॥

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमतेऽभिमातिहेत्यभिमातीर्हात्र हन्ति त्रैष्टुभं छन्द आरोहेति त्रैष्टुभं छन्द आरोहत्यन्तरिक्ष मनु विक्रमस्वेत्यन्तरिक्ष मनु विक्रमते प्रहरति पादं क्रमत ऽऊर्ध्व मग्नि मुद्गृह्णात्यूर्ध्वो हि रोहति ॥ १४ ॥

विष्णोः क्रमोसीति । विष्णुर्हि भूत्वा क्रमते ऽरातीयतो हन्तेत्यरातीयतो ह्यात्र हन्ति जागतं छन्द आरोहेति जागतं छन्द आरोहति दिव मनु विक्रमस्वेति दिव मनु व्विक्रमते प्रहरति पादं क्रमत ऽऊर्ध्व मग्नि मुद्गृह्णात्यूर्ध्वो हि रोहति ॥ १५ ॥

विष्णोः क्रमोऽसीति । विष्णुर्हि भूत्वा क्रमते शत्रूयतो हन्तेति शत्रूयतो ह्यात्र हन्त्यानुष्टुभं छन्द आरोहेत्यानुष्टुभं छन्द आरोहति दिशोऽनु विक्रमस्वेति सर्व्वा दिशोऽनु वीक्षते न प्रहरति

पादं नेदिमांल्लोकानतिप्रणश्यानीत्यूर्द्ध मेवाग्नि मुद्गृह्णाति सꣳ स्त्रारोहति ॥ १६ ॥ २ ॥

॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [७. २.] ॥

अथ यदुक्तं सूत्रकृता तिष्ठन्नुदङ्प्राङ्रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च"–इति *, तदिदं विधाय प्रशंसति— "तं तिष्ठन् प्रतिमुञ्चतेऽसौ वा आदित्य एष रुक्म इति। रुक्मस्यादित्यत्वं रुक्मस्य सत्यत्व मभिधाय तद् यत् तत् सत्य मसौ स आदित्य इत्यादिनोक्तम्। उपर्युपर्यारोहणात् आदित्यः तिष्ठतीव वर्त्तते। "उदङ् प्राङ् तिष्ठन् तस्योक्तो बन्धुरिति। "एषा ह्योभयेषां देवमनुष्याणां दिक् †"–इत्यादिनेत्यर्थः ॥ १ ॥

तत्र मन्त्रं विधाय व्याचष्टे— "दृशानो रुक्म उर्व्या व्यद्यौदिति दृश्यमानो ह्येष रुक्म इत्यादिना ‡। आदित्यात्मकः 'एष रुक्मो' 'दृशानः' दृश्यमानः 'उर्व्या' महद्दीप्त्या 'व्यद्यौत्' विद्योतते। यस्य रुक्मस्य 'आयुः' जीवनोपलक्षितः कालः 'दुर्मर्षम्' दुर्मरम्, अविनाश्य मित्यर्थः। यः 'श्रिये' जगतः श्रीनिमित्तं 'रुचानः' रोचमानः भवति। आदित्ये रोचमाने सति जगत् शोभते इति प्रसिद्धम्। किञ्च 'अग्निः' 'वयोभिः' अन्नैः 'सर्वैः' अपि 'अमृतः' अमरणधर्मा 'अभवत्'। 'यद्'

* का० श्रौ० सू० १६. ४. ३१, ३२।

† पुरस्तात् ६. २. ३ ( ३२४ पृ० १४ पं० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ५. १।

यस्माद् 'द्यौः' 'एनम्' अग्निम् 'अजनयत्' उदपादयत्। कीदृशी द्यौः ? 'सुरेताः' शोभनाभ्यास्यरेतोयुक्ता * ॥

प्रथमपादब्राह्मणं स्पष्टम्। दुर्मर्षं मित्येतद् व्याचष्टे— "दुर्मर मिति। वयोभिरिति बहुवचनं सार्थक मित्याह— "सर्वैर्वा एष वयोभिरमृतोऽभवदिति। अग्नेः सर्वभक्षत्वात् सर्वं मप्यस्यान्नम्। अस्य दिवः सकाशात् उत्पत्तिः प्रसिद्धेति दर्शयति— "द्यौर्वा एत मजयदिति। 'सुरेताः'–इति द्यु-विशेषणम्। कथं तस्य तथात्व मिति, तत्राह— "सुरेता ह्येषा यस्या रेत इति ॥ २ ॥

अस्याग्नेरिष्टुभ्यां परिग्रहणं विधत्ते— "अथैन मिष्टुभ्यां परिगृह्णाति नक्तोषासा समनसा विरूपे इति †। "अहोरात्रे वै नक्तोषासेति। कृत्स्नाया ऋचोऽय मर्थः—

'नक्तोषासा' उषःशब्देन कृत्स्न महर्विवक्ष्यते, रात्र्यहनी। 'समनसा' समानमनसौ, 'विरूपे' विविधरूपे, शुक्लकृष्णभेदेन द्वैविध्यम्, 'समीची' सम्यगञ्चने, यथा लोके 'एकं शिशुं धापयेते' हिताचरणेनानुगच्छतः, एव मेक मग्न्याख्यं शिशुं धापयेते, स्थावरस्थितैः प्राणिभिः अग्निहोत्रादिकर्मद्वारेणानुगतं शिशु मग्निं परिगृह्णामीति शेषः। किञ्च यौ 'द्यावाक्षामा' द्यावापृथिव्यौ 'अन्तः' तयोर्मध्ये 'रुक्मः' रोचमानः अग्निः 'विभाति' दीप्यते, त माहरामीति शेषः। यम् 'अग्निं' द्रवि-

---

* वा सं० १२. १।

† का० श्रौ० सू० १६. ५. ३। "उखा याभ्यां गृह्यते तौ इष्टु्वौ"–इति तद्वृत्तौ।

णोदाः’ धनस्य दातारो देवाः ‘धारयन्’। तं धारयामीति शेषः *।

अत्र प्रथमभागेनाहोरात्रौ विवक्षिताविति दर्शयति— “अहोरात्रे वै नक्तोषासेति। द्वितीयभागेनाहोरात्रकर्तृकं धापनं स्वनिष्ठ-त्वप्राणिद्वारेति दर्शयति— “यद्दै किञ्चाहोरात्रयोस्तेनैत मेव समीची धापयेते इति। स्पष्ट मेतत्। तृतीयभागस्य विनियोग माह— “द्यावाक्षामा रुक्मो अन्तर्विभातीति †।

एनं मन्त्रं व्याचष्टे— “इमे वै द्यावापृथिवीति। ‘क्षामा’ -इति पृथिवीनाम ‡। ‘अन्तरा’-शब्दप्रयोगात् ‘ते’-इति द्वितीया §। ‘तस्मात्’ उक्तविनियोगानुकूलार्थत्वात् तद्यजुरीरण-काले जपेत्। ऋचश्चतुर्थांशस्य विनियोगं दर्शयति— “देवा अग्निं धारयन् द्रविणोदा इति परिगृह्य दधातीति। आह-वनीयस्य पुरस्तात् शिक्यवत्या मासन्द्यां स्थापयेत्। ‘द्रविणोदाः’ द्रविणोदगुणविशेषिता देवा अत्र ‘प्राणाः’ विवक्षिताः। ‘ते’ ‘एतम्’ अग्निम् ‘अग्रे’ ‘एवम्’ ‘अधारयन्’। एतन्मन्त्रेण धृते सति ‘तैरेव’ ‘एनम्’ अग्निम् ‘धारयति’ यजमानः ॥ ३ ॥

यदुक्तं सूत्रे “शिक्यपाशं प्रतिमुञ्चते षड्यामं विश्वारूपाणीति ‖, तदेतद् दर्शयति— “अथ शिक्यपाश मिति। तत्र विश्वारूपाणीति मन्त्रः।

---

* वा० सं० १२. २।

† “हरति द्यावाक्षामेति”—इति का० श्रौ० सू० १६. ५. ४।

‡ निघ १. १. ५।

§ पा० सू० २. ३. ४।

‖ का० श्रौ० सू० १६. ४. ६।

तस्याय मर्थः *— 'कविः' क्रान्तप्रज्ञः, उख्याग्निः 'विश्वा' विश्वानि रूपाणि प्रतिमुञ्चते। शिक्याख्यस्य रूपस्य बहुदामोपेतत्वात् बहुवचनम्। स च 'द्विपदे' मनुष्यादिकाय, 'चतुष्पदे' गवादिकाय च 'भद्रं' कल्याणं 'प्रासावीत्' प्रायच्छत्, 'सविता' सर्वस्य प्रेरयिता 'वरेण्यः' सर्व्वैर्वरणीयः, सः 'नाकं' नास्मिन् कं दुःख मस्तीति नाकं स्वर्गम् 'व्यख्यत्' प्रकाशयति, अन्तरिक्षे धृतत्वात्। तादृशोऽग्निः 'उषसः प्रयाणम् अनुविराजति' प्रत्यहं दीप्यत इत्यर्थः॥

अथ मर्थो ब्राह्मणेन अग्नेः सवितुश्च अभेदं विवक्षित्वा स्पष्टं व्याख्यातः— "असौ वा आदित्यः कविर्विश्वा रूपेति †। अर्ध्वाधोदिग्भिरुपेताश्चतस्रो दिशः 'शिक्यम्' इत्यभिप्रायः। कृत्स्नस्य प्राणिनो भद्रप्रसवः उषोदयेन भवतीति प्रसिद्ध मिति दर्शयति— "उषा वा अग्रे व्युच्छति, तस्या एव व्युष्टिं विराजननूदेतीति। विराजन्नेव व्युष्टि मनूदेतीति सम्बन्धः॥ ४॥

"अथैन मतो विकृत्या विकरोतीति ‡। "सुपर्णोऽसीत्ययं मन्त्रो विकृतिरुच्यते, अग्नेः पक्षपुच्छादिमत्सुपर्णरूपेण तत्र विकारप्रतिपादनात्। 'एनम्' अग्निम् 'अतः' अस्मात् पूर्वावस्थितात् सन्निवेशाद्। विकारप्रतिपादकमन्त्रेणाभिमन्त्रण मेवात्र विकरणम्। तेनेद मेवोखायां सिक्त मग्न्याख्यं रेतोविकारयुक्तं कृतवान् भवति। उक्त मर्थं मिदानीन्तनरेतोविकारप्रसिद्ध्या द्रढयति— "तस्माद् योनाविति॥ ५॥

---

* वा० सं० १२. ३।

† ३९१ पृ० १३ पं० द्रष्टव्यम्।

‡ का० श्रौ० सू० १६. ५. ७।

विकारमन्त्र मुक्त्वा विभज्य व्याचष्टे— "सुपर्णोऽसि गरुत्मा-
निति वीर्यं वै सुपर्णो गरुत्मानित्यादिना * । मन्त्रस्याय मर्थः—

हे अग्ने ! त्वं गरुत्मान् प्रबलपक्षोपेतः सुपर्णाख्यः पक्षी
असि । यज्ञ एव पक्ष्यात्मनोच्यते । तथाभूतस्य 'ते' 'त्रिवृत्'
स्तोमः † 'शिरः' मस्तकम् ; आदौ स्तूयमानत्वेन मुख्यत्वात् ।
गायत्र्या शंसितं 'ते' 'चक्षुः' । 'बृहद्रथन्तराख्ये सामनी ‡ ते
पक्षौ', सकलयागनिर्वाहकत्वात् तयोः । महाव्रतस्तोत्रवद-
स्यापि पञ्चविंशः 'स्तोमः' § 'आत्मा' । 'छन्दांसि' गाय-
त्र्यादीनि 'ते' 'अङ्गानि' । यजूंषि' शुक्लकृष्णाख्यानि प्रश्लिष्ट-
वाक्यानि, तत्रत्यः अग्निशब्दः 'ते' 'नाम' आख्या । 'वाम-
देव्यम्' "कया नश्चित्र आ भुवत्"–इत्यस्या मुत्पन्नं 'साम' ‖,
'ते' 'तनूः' शरीरम् । 'यज्ञायज्ञियम्' "यज्ञायज्ञा वो अग्नये"
–इत्यस्या मुत्पन्नं 'साम' ¶, 'ते' 'पुच्छम्' अन्त्यत्वसाम्यात् ।
'धिष्ण्याः' तत्तदायतनस्था अग्नयः 'शफाः' प्रतिष्ठासाधनावय-
वाः । एवंविधः सुपर्णः सुपतनः गरुत्मान् असि । अतस्त्वं 'दिवं
गच्छ' द्युलोकं गच्छ । तदेव विशिनष्टि— 'स्वर्गं पत' इति ॥

सुपर्णोऽसीति मन्त्रभागपाठस्य प्रयोजन माह— "वीर्यं मेवैन

---

* वा० सं० १२. ४ ।

† मा० ता० ब्रा० २ प्र० १, २, ३ ख० ।

‡ सा० छ० ३. १. ५. २ ऋषि आ० १. १. २७ साम 'बृहत्' ।
सा० छ० ३. १. ५. १ ऋषि आ० २. १. २१ साम 'रथन्तरम्' ।

§ तै० ब्रा० १. ३. ६ सा० भा० द्रष्टव्यम् ।

‖ सा० छ० २. २. ३. ५ ऋषि गे० ५. १. २५ साम ।

¶ सा० छ० १. १. ४. १ ऋषि गे० १. २. २५ साम ।

| | Rs. | As. |
|---|---|---|
| Nyāyavārtika (Text) Fasc. 1-5 @ /10/ | 3 | 12 |
| *Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisāra, Fasc. 2-5, @ /10/ each | 2 | 8 |
| Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each | 4 | 6 |
| Nityacraāpradiph, Fasc. 1-8 @ /10/- | 5 | 0 |
| Nyāyabinduṭikā, Fasc 1 | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 2-6, Vol. II, Fasc. 1-3 @ /10/ each | 5 | 0 |
| Padumawati, Face. 1–5 @ 2/ | 10 | 0 |
| Pariciṣta Parvan, Fasc. 3–5 @ /10/ each | 1 | 14 |
| Prāk ta - Paingalam, Fasc. 1–7 @ /10/ each | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1–5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II Fasc 1, @ 1/- | 1 | 0 |
| Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1–8 ; Vol. II, Fasc. 1–6 ; Vol. III, Fasc. 1–6 @ /10/ each | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1–3 @ 1/4/ each | 3 | 12 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7–10 ; II, 1–6 ; III, 1–7 ; IV, 1–6 ; V, 1-8 ; @ /10/ each | 19 | 6 |
| Sānkhya Sūtra V tti, Fasc. 1-4 @ /10/ | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vejay, Fasc. 2–3 @ /10/ | 1 | 4 |
| Shaddarsana-Samuccaya, Fasc. 1-2 @ /10/ | 1 | 4 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 | 3 | 12 |
| Sucruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 | 2 | 8 |
| *Taittereya Saṁhitā, Fasc. 27-45 @ /10/ each | 11 | 14 |
| * Ditto Brāhman, Fasc. 6-25 @ /10/- | 12 | 8 |
| Ditto Prātisākhya, Fasc. 1 3 @ /10/- | 1 | 14 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 6-19 @ /10/ each | 6 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9 ; Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattvārthādhigama Sutrom, Fasc. 1 3 | 1 | 14 |
| Tiŗkāṇda-Maṇdanom, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tul'si Satsai Fasc. 1-5 @ /10/ | 3 | 2 |
| Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ | 6 | 0 |
| Vallāla Carita, Fasc. 1 | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6 ; Vol. II, Fasc. 1-7, @ /10/ each | 6 | 14 |
| Vidhāno Pārigāt, Fasc 1-8 : Vol II Fasc 1 | 5 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| V hat Sayambhū Purāṇa, Fasc. 1-6 | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each | 1 | 14 |

*Tibetan Series.*

| | Rs. | As. |
|---|---|---|
| Pag-Sam Thi Śiṅ, Fasc. 1-4 @ 1/ each | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6 @ 1/ each | 14 | 0 |
| Rtogs brjod dpag hkhari Śiṅ ( *Tib. & Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each | 11 | 0 |

*Arabic and Persian Series.*

| | Rs. | As. |
|---|---|---|
| Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each | 8 | 2 |
| Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each | 34 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-4 @ 1/4/ | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger | 0 | 10 |
| *Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ | 11 | 14 |
| Catalogue of Arabic Books and Manuscripts 1-2 | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each | 3 | 0 |
| Conquest of Syria, Fasc. 1-9 @ /10/ | 5 | 10 |
| Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- | 31 | 8 |

* The other Fasciculi of these works are out of stock, and complete copies can not be supplied.

Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/8/ each ... Rs 21 0
Fihrist-i-Ṭūsī, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4 0
Futūḥ-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... ... 5 10
Ditto of Azādī, (Text) Fasc. 1-4 @ /10/ each ... ... 2 8
Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... ... 1 14
Iṣābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51 0
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... 35 0
Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... ... 3 2
Muntakhabu-t-Tawārīkh, Fasc. 1-15 @ /10/ each ... ... 9 6
Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... 0 10
Niẓāmī's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... 1 8
Riyāẓu-s-Salāṭīn Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5 0
Tabaqāt-i-Nāṣirī, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc. 1-7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūshāhi, of Shams-i-Sirāj Alīf, Fasc. 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... ... ... ... 1 0
Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3 2
Ẓafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vols. XIX and XX @ 10/ each ... ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members and Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... ... ... 4 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar ... ... ... ... 8 0
12. Kacmīracabdāmṛta, parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāsī and edited with notes by Major D. C. Phillott. ... ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N. B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

BOOKS ARE SUPPLIED BY V.-P.-P.

BIBLIOTHECA INDICA:

A

# Collection of Oriental Works

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1191.

## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆĀCĀRYA.




EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMI.

*Lecturer of Sanskrit in the University of Calcutta.*

VOL. VI, FASCICULUS III.

CALCUTTA:

PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1908.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

NO, 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, London, W.*,

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasramī ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... | 2 | 8 |
| Aphorisms of Sāṇdilya, (English) Fasc. 1 ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| *Ātharvana Upanishad, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Bālam Bhaṭṭī, Vol I Fasc 1-2, Vol II Fasc I @ /10/ ... | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3, Vol II Fasc I @ /10/ each ... | 2 | 8 |
| *Bhāmatī, Fasc 4-8 @ /10/- ... | 3 | 2 |
| Bhāṭṭa Dipikā Vol. I, Fasc. 1-5 @ /10/- ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/- ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... | 3 | 2 |
| Çatadusani, Fasc. 1-2 ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each; Vol. IV, Fasc. 1-6 ... | 36 | 14 |
| Çlokavārtika, (English) Fasc. 1-6 @ 1/4/- ... | 7 | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... | 5 | 10 |
| Ditto Ācvālāyan, Fasc 4-11 @ /10/ each ... | 5 | 0 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @ /10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7 ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-3 ... | 1 | 14 |
| Gobhiliya Gṛhyo Sutrum, Fasc. 4-12 @ /10/ ... | 5 | 10 |
| Kāla Viveka, Fasc. 1-7 ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... | 3 | 2 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Mahā-bhāṣya-pradīpodyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... | 16 | 14 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... | 9 | 0 |
| * Ditto (Text) Fasc 5-7 @ /10/ ... | 1 | 14 |
| *Mīmāṁsā Darcana, (Text) Fasc. 6-19 @ /10/ each ... | 8 | 12 |

BIBLIOTHECA INDICA:

A

# Collection Of Oriental Works

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES NOS. 1189, 1189 & 1191.

---

# THE ÇATAPATHA BRAHMAṆA

## OF THE WHITE YAJURVEDA

WITH THE

## COMMENTARY OF SAYANA ACARYA

EDITED BY

ACARYA SATYAVRATA SAMAS'RAMI.

*Lecturer of Sanskrit in the University of Calcutta.*

*Associate Member of the Asiatic Society of Bengal, Member of the Philological Committee, A. S. B; Examiner of the Veda & Philosophy &c., Editor, Author, Commentator, Annotator, Compiler, Translator, & Publisher of different Vedic Works &c. &c.*

VOL. VI. KANDA VI.

CALCUTTA:

PRINTED BY HITAVRATA CHATTOPADHYAYA;

AT THE SATYA-PRESS, NO, 27, Ghose's Lane,

1908.

# ॥ शतपथब्राह्मणम् ॥

॥ शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् ॥

श्रीमत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्येण

सहितम् ।



वङ्गदेशीयास्यायितिकसमितेरनुमत्या व्ययेन च,

सामश्रमीतियशोनामाचार्यसत्यव्रतशर्म्मणा।

यथामति संशोध्य सटीक्य च सम्पादितम् ।

॥ ६ भा० । ६ का० ॥

( षष्ठकाण्डात्मकः षष्ठो भागः )



कलिकाता-राजन्वत्याम् ,

१८६५-संवत्सरायां सत्ययन्त्रेण यत्नतो मुद्रितम् ॥

## ॥ अथ सम्पादकोक्तिः ॥

---

अथैतस्य षष्ठकाण्डस्याभिधान मुखासम्भरण मिति। उखा नाम स्थाली, पाकपात्रविशेषः; यस्या मुखायां मांसानि पच्यन्ते, सोच्यते मांसपचनीति। तद्यथा ऋक्संहितायाम् (१. १६२. १३.)— "यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि"-इत्यर्द्धर्चः। तस्या उखायाः सम्भरणं सम्पादन मेतस्मिन् काण्डे विहित मतो याज्ञिका एतदुखा-सम्भरण मित्याचक्षते।

तत्सम्भरणप्रकारोपदेशस्त्वितः स्फुटतर माम्नातस्तैत्तिरीयकैः स्वसंहितायाम्। तत्र हि, चतुर्थकाण्डीयप्रथमप्रपाठके एतदीय-मन्त्राः समाम्नाताः, ततः पञ्चमकाण्डीयप्रथमप्रपाठके त्वेत-द्ब्राह्मणानीति। तदत्र सङ्ग्रहश्लोकाः—

"उखासम्भरणे मन्त्राः प्रथमे पाठके श्रुताः।
एकादशानुवाकाः स्युस्तदर्थास्तु क्रमादमी।
अभ्र्यादानम्, मृदाक्रान्तिः, खननं, हरणं तथा।
उखानिर्म्माणसंस्कारौ, सामिधेन्यस्तथाप्रियः।
अग्न्युत्पादो धारणञ्च याज्या इत्यनुवाकगाः"-इति,
"एकादशानुवाकाः स्युराद्येऽर्थास्त्वेव मीरिताः।
सावित्राहुतिरभ्र्येश्च स्वीकारः प्रथमे भवेत्।
द्वितीये मृत्खननं गच्छन्नश्वेनाक्रामयेद् भुवम्।

तृतीये तृणक्रमण्यायां भूसंस्कारो जलादिभिः ।
चतुर्थे तु मृदं खात्वा सम्भरेच्चर्मपत्रयोः ।
पञ्चमे सम्भृता मेतां यज्ञभूमौ समाहरेत् ।
षष्ठे तृखां निर्मिमीते सप्तमे संस्करोति ताम् ।
अष्टमे पश्चवो वह्नेरुख्यस्य नवमे जनिः ।
उख्यं दधीत दशमे— -- — —"-इति च ।

तस्यैतस्य पाठान्तरादिसम्पादनाय सङ्गृहीताना मादर्श-पुस्तकाना मेवं नामधेयानि कल्पितानि—

क= स्यात्पञ्चशताब्दीपूर्वलिखितं ११८-पत्रात्मकमन्त्यपत्रहीनम् ।
ख= स्यात्पञ्चशताब्द्यधिकपूर्वलि० १०५-पत्रात्मकमन्त्यपत्रहीनम् ।
ग= डा०-वेबर्-सम्पादितम् ( खृ० १८४९-मुद्रितम् ) पूर्णम् ।
घ= आजमेर-प्रकाशितम् ( सं० १९५९-मुद्रितम् ) पूर्णम् ।
ङ= १६५४-संवल्लिखितं ८०-पत्रात्मकं (क० सं० क०) पूर्णम् ।
च= आख्यायिकसमितितो लब्धं (ग० इ०) ८४-पत्रात्मकं पूर्णम् ।

षट्स्वेषु चरमपुस्तकमात्र मेतत्कात्यायनीयभाष्यस्येत्यत एवै-तच्छोधनादावतीवायासः स्वीकृतः , तथाप्येतत् सर्वतो निर्दोषता मुपगतं न वेति संशयो मेऽस्त्यापीति विदुषा मिह क्षमैवाभ्यर्थ-नीयेति शम् ॥

कालीकोठा-राजम्वती । } श्रीसत्यव्रतशर्म्मा ।
सं० १९६५ । खृ० १९०८ । } ( आवसथः , सामश्रमी , आचार्य्यश्च . )

# शतपथब्राह्मण-षष्ठकाण्डस्य सूचीपत्राणि ।

## ॥ अथ प्रपाठकसूची ॥



---

## ॥ अथाध्यायसूची ॥



---

## ॥ अथ ब्राह्मणसूची ॥

# ॥ अथ विषयसूची ॥

(१ प्र० १ ब्रा०)

हिरण्यगर्भकर्तृक सृष्टेराम्नानम्। तत्र असदर्थनिरूपणम्, ऋषिशब्दार्थनिरूपणम्, मध्यमप्राणस्य सर्वेन्द्रियपोषणद्वारा इन्द्रशब्दवाच्यत्वम्, एकस्मिन् पुरुषे सप्तपुरुषसन्निवेशनम्, सप्तपुरुषसम्मितस्य विराडात्मकस्य चित्याग्नेः शिरसः प्रदर्शनम्, आहवनीयस्य शिरोरूपत्वञ्च। विराडुत्पत्तिः, तस्य चित्याग्निरूपत्वम्, पुनश्चयनोपयुक्तसृष्टेराम्नानम्, तत्र पृथिव्याद्युत्पत्तिवर्णनञ्चेति।

(१ प्र० २ ब्रा०)

वाय्वन्तरिक्षादिसृष्टिः, प्रजापतेश्चित्याग्निरूपता, इष्टकाशब्दप्रवृत्तिनिमित्तादयः, इष्टकानां मन्त्रैरुपधेयत्वादि, पञ्चेष्टकाविचारः, पञ्चेष्टकादिवर्णनम्, मृत्तिकादीना मिष्टकासाधनत्वञ्चेति।

(१ प्र० ३ ब्रा०)

चयनोपयुक्ताना मग्न्यादीना मष्टरूपाणा माम्नानम्, कुमारोत्पत्तिः, तस्यापराष्टनामानि, संवत्सरपर्यन्तमुख्याग्नेर्धारणविधानञ्चेति।

(१ प्र० ४ ब्रा०)

पुरुषाश्वगोऽव्यजात्मकपञ्चपश्वालम्भनविधिः। तत्र चतुर्विंशतिः सामिधेन्यः, वैश्वानरः पशुपुरोडाशः, कामपदयुक्ता याज्यानुवाक्याश्च। ततः अप्सु पशुचतुष्टयकायप्रासनम्, इष्टकाकरण-

कालप्रदर्शनम्, पशुशीर्षोपधानम् इष्टकोपधानम्, पशुशिरः-कबन्धसन्धानम्, पशूना मग्न्यात्मकत्वम्, पशुबन्धनार्थं रशनानां विधानम्, पशुष्वेव पश्वेष्टकासम्पादनम्, सामिधेनीमन्त्राणां नवाना मेवैकार्थताप्रतिपादनम्, आप्रीमन्त्राणां प्रदर्शनम्, तेषा मेकाभिधेयताभिधानम्, कुणपमर्त्यत्वदोषपरिहाराय हिरण्य-शीर्षोपधानविधिपद्यादिकश्चेति ॥

---

( २ प्र० १ ब्रा० )

प्रजापतिदेवत्यपश्वनुष्ठाने सम्प्रदायनामप्रदर्शनम्, प्राजापत्य-पशुपक्षप्रदर्शनम्, वायव्यपशुपक्षप्रदर्शनम्, पञ्चपशुस्थाने एकस्यैव वायव्यपशोर्विधानम्, पश्वालम्भकालविधानम्, ततोपांशुत्वस्य प्रशंसनम्, अग्निधारणायोखासम्भरणविधिः, चयनसहितसोम-यागस्य दीक्षाकालविधिः, पञ्चपशु-प्राजापत्यपशु-वायव्यपशु-पक्षेषु क्रमात् सम्पत्तिकथनम्, पशुयागानन्तरं चयनकर्म्मणि यजमानकर्त्तव्यानां नियमानां मीमांसादि, दक्षिणादान-विधिश्चेति ।

( २ प्र० २ ब्रा० )

उपधास्यमानानां चितीना मृषिदेवतासम्बन्धेनोत्पत्तिप्रकार-वर्णनम्, स्वयमातृण्णेष्टकानां स्थानविशेषप्रदर्शनम्, तत्र चिति-शब्दनिरुक्तिश्चेति ।

( २ प्र० ३ ब्रा० )

चयनमन्त्राणां विनियोगाभिधानम्, अषाढ़ाया इष्टकात्वम्, तत्र पुरुषादीनां चतुर्णां पशूनां कायप्राशनं कृतम् तत एव

प्रदेशात् उखाषाढेष्टकाकरणार्थं मृदः आनयनविध्यादि, अनद्धा-पुरुषस्य पुरुषप्रतिनिधित्वम्, रासभस्य च गवाश्योः प्रतिनिधित्वम्, तेषां त्रयाणां पशूनां मौञ्जीबन्धनविधानम्, रशनायास्त्रिवृत्त्वम्, आहवनीयस्य दक्षिणेऽवस्थापनञ्च, अग्नेः वैष्णवीत्वादिविधिश्चेति।

( २ प्र० ४ ब्रा० )

पूर्वविहितानां पञ्चपशूना मभिमन्त्रणादिविधान मिति॥

———

( ३ प्र० १ ब्रा० )

मृदाहरणार्थं ब्रह्माध्वर्युयजमानाना मभिगमनम्, अनद्धा-पुरुषनिरीक्षणादि, अश्वपदे आहुतिद्वयविध्यादि, तत्र मन्त्र-द्वयविधिव्याख्यानादि, ततः पिण्डखननविधिश्चेति।

( ३ प्र० २ ब्रा० )

मृत्खननमन्त्रद्वयविधानादि, कृष्णाजिनास्तरणम्, तत्र पुष्करपर्णनिधानम्, तत्रैव मृत्पिण्डसम्भरणम्, तदभिमर्शनम्, तत्र मन्त्रादिविधानञ्चेति।

( ३ प्र० ३ ब्रा० )

समन्त्रकमृत्पिण्डाभिमर्शनविधानादि।

( ३ प्र० ४ ब्रा० )

समन्त्रकोदकनिनयनविध्यादि।

( ३ प्र० ५ ब्रा० )

समन्त्रकपञ्चपश्वभिमन्त्रणविध्यादि। तत्र, त्रयाणां पशूना मुपरि समन्त्रकं पिण्डधारणविध्यादिकञ्चेति।

( ३ प्र० ६ ब्रा० )

मृत्पिण्डे समन्त्रकपलाशपर्णक्वथितोदकसिञ्चनादि । तत्र उदकसेचनम्, फेनासेचनम्, सम्मिश्रणम्, अजलोममिश्रणम्, लोमसम्मिश्रणम्, शर्कराश्मायोरसचूर्णैः सम्मिश्रणम्, ततो मन्त्रविधानादि चेति ।

( ३ प्र० ७ ब्रा० )

उखाया अधस्तात् पर्याप्तमृत्पिण्डादानविध्यादि, विस्तारितायां निधिमृद उपरि मृत्पिण्डप्रक्षेपमन्त्रविध्यादि, निधेरुच्छ्रयस्य च समन्त्रं समीकरणविधानम्, उखाया ऊर्ध्वपरिमाणविध्यादि, उखाया उत्तरभागे वर्त्तिकरणविधिः, रास्नाकरणविधिः, वर्त्तीनां मन्त्रे स्तनोन्नयनविधिः, उखानिधानविधिः, उखासङ्ख्याविचारादिकञ्चेति ॥

---

( ४ प्र० १ ब्रा० )

अषाढेष्टकाया निर्म्माणम्, उखाया निर्म्माणम्, विश्वज्योतिराख्यानां तिसृणा मिष्टकानां निर्म्माणम्, अधिदैवतं व्याख्यानम्, अध्यात्मव्याख्यानञ्च । अपि यदेतासा मषाढादीनां मन्त्राहृतमृदोत्पन्नत्वम्, यच्चाषाढादिनामवत्त्वम्, यदपि पादमात्रादिपरिमाणवत्त्वम्, तदेतत् सर्वं मितरेष्टकावैलक्षण्य मिति निरूपणम्, अवशिष्टाया मृदो विनियोगाख्यानम्, अश्वशकृद्भिर्धूपनञ्चेति ।

( ४ प्र० २ ब्रा० )

उखादिस्थापनार्थं मवटखननम्, तत्र उखादीना मवनि-

धानम् , पचनम् , उपावहरणम् , प्रक्षेपोत्क्षेपयोः कालनियमः , गर्त्तादुद्धरणम् , पात्रे स्थापनम् , पयआसेचनञ्चेति ।

( ४ प्र० ३ ब्रा० )

दीक्षणीयाप्रयोगः , हविषोरधिदैवताध्यात्मव्याख्याने , औद्ग्रभणहोमविधिनिर्वचनादि , सप्तौद्ग्रभणयजुषां विधिव्याख्यानादि, मुञ्जतृणावस्तरणम् , शणकुलायास्तरणञ्चेति ।

( ४ प्र० ४ ब्रा० )

उखाया आहवनीयेऽधिश्रयणम् , प्रवृञ्जनम् , समिदाधानम् , उखादीना मात्मत्वादिकल्पनाया मुत्पत्तिप्रदर्शनञ्चेति ।

( ४ प्र० ५ ब्रा० )

द्वितीयायाः समिधो वैकङ्कतत्वविध्यादि , त्रयोदशसमिधां मन्त्राणां विधिव्याख्याने , प्रादेशप्रमाणत्वविधानम् , तदाधाने मन्त्राणां स्वाहाकारान्ततानिधानञ्चेति ।

( ४ प्र० ६ ब्रा० )

भस्मोद्वपनकालादिविधिः , व्रतपरिग्रहादि , उखाभेदे प्रायश्चित्तम् , उखाग्न्यनुगमने प्रायश्चित्तम् , सुत्यादिने आहवनीयानुगतौ प्रायश्चित्तादि चेति ॥

---

( ५ प्र० १ ब्रा० )

रुक्मप्रतिमोकः , रुक्मधारणप्रशंसा , रुक्मधारणप्रकारादि , आसन्द्या औदुम्बरीत्वविधानादि , शिक्यविध्यादि , उखाशब्दनिरुक्तिः , उख्याग्नेरिण्ड्वाभ्यां परिग्रहविधानादि चेति ।

( ५ प्र० २ ब्रा० )

रुक्मप्रतिमुञ्चनप्रकारादि, शिक्यपाशप्रतिमुञ्चनप्रकारादि, सुपर्णोऽसीतिविकृतिमन्त्रेण हस्ताभ्यामग्नेः प्रग्रहणं धारणञ्चेति।

( ५ प्र० ३ ब्रा० )

विष्णुक्रमणविधिः, विष्णुक्रमणेनाग्नेरूर्द्धबाहुनोद्ग्रहणविध्यादि, तस्यास्याग्नेरवरोहणप्रत्यवरोहणे, तत्र तत्र विहितमन्त्राणां विधिव्याख्याने चेति।

( ५प्र० ४ ब्रा० )

वात्सप्रवर्णनादि। तत्रोपस्थानमन्त्रत्रयविधिव्याख्याने, उत्तरमन्त्रेषु तदतिदेशनम्, विष्णुक्रमवात्सप्रयोः जगदुत्पादकतया स्तुतिः, दीक्षाप्रथमदिवसे विष्णुक्रमवात्सप्रयोः समसनविध्यादि, तथा संवत्सरानुष्ठानफलकथनादि, तत्र चरमदिवसकर्त्तव्यनिरूपणादि चेति।

( ५ प्र० ५ ब्रा० )

उख्याग्नेर्गार्हपत्यचयनार्थं देवयजनदेशप्रापणादिविधानम्। तत्र पुराकल्पाख्यानम्, वनीवाहनविधिः, तत्फलकथनञ्च गार्हपत्यचयनदेशं प्रत्यग्नेः प्रणयनम्, अनस उपरि उख्याग्नेः स्थापनादि, पुनस्समिदाधानादिविधानञ्चेति।

( ५ प्र० ६ ब्रा० )

भस्मोद्वपनशेषः, अप्सु प्रक्षेपमन्त्रविधिव्याख्याने, अङ्गाः पुनरीषङ्गस्मादानविध्यादि, उपस्थानविधिः, द्विविधप्रायश्चित्तविधानादिकञ्चेति॥

———

## ॥ अथ स्मर्तव्यालोच्यवचनसूची ॥

"अप्सु ह्वीमे लोकाः प्रतिष्ठिताः" ५. १. १७.

"अयं वा अग्निर्ऋतम्" ३. ५. १०.

"अयं वा अग्निर्ब्रह्म च क्षत्रञ्च" ४. ५. १५.

"अयं वै वायुर्मित्रो योऽयं पवते" ४. २. १४.

"अप्सुर्हं वै त मश्व इत्याचक्षते" १. १. ११.

"अश्वः पशूनां भगितमः" ३. १. १३.

"असद्वा इदं मग्र आसीत्" १. १. १.

"असावादित्यः सत्यम्" ३. ५. १०.

"असावादित्यो देवः सविता" २. ३. १८, १९.

"असौ वा आदित्य एष रुक्मः" ५. १. ३.

"असौ वा आदित्य एषोऽग्निः" ३. २. ८.

"असौ वा आदित्य एषोऽश्वः" २. ३. २९; ३. १. १०.

"असौ वा आदित्यो दिव्यो गन्धर्वः" २. ३. १९.

"असौ वा आदित्यो बृहज्ज्योतिः" २. ३. १५.

"असौ वा आदित्यो हंसः शुचिषत् ५. ३. ११.

"असौ वै चन्द्रः पशुयं देवाः पौर्णमास्या मालभन्ते" २. १. १७.

"असौ वै चन्द्रः प्रजापतिः २. १. १६.

"असौ स आदित्यः स हिरण्मयो भवति" ५. १. २.

"अहोरात्राणि वै वरुत्रयः" ४. २. ६.

"अहोरात्रे वा अभिवर्त्तमाने संवत्सर माप्नुतः" ४. ६. ३.

"आत्मनो ह्येवेयं वाङ् महिषी" ४. १. ४.

"आत्मा वै यज्ञः" १. ४. ७.

"आदित्य आसञ्जनम् आदित्ये ह्वीमा लोका दिग्भिरासक्ता" [ ५. १. १७.

"आदित्येन दिवं मिथुनं समभवत्" १. २. ४.

"आपोऽब्रुवन् ०—० फेनोऽब्रवीत् ०—० मृदब्रवीत् ०—० सिकताः ०—० शर्कराः ०—० अश्मा ०—० अयः ०—० हिरण्यम् ०—०" १. ३. ६.

"आपो वै जनयोऽङ्गो हीदं सर्वं जायते" ५. ६. ३.

"आपो वै पुष्करं प्राणोऽथर्वा" ३. ३. २.

"आयुर्वा अग्निरायुरेवैतदात्मन् धत्ते" ५. ३. ७.

"आसुरी माया स्वधया कृतासीति, प्राणो वा असुस्तस्यैषा माया स्वधया कृता" ४. ४. ६.

"इण्ड्वाभ्यां परिगृह्णाति, असौ वा आदित्य एषोऽग्निः, अहोरात्रे इण्ड्वे अमुं तदादित्य महोरात्राभ्यां परिगृह्णाति ०—० आभ्यां लोकाभ्यां परिगृह्णाति" ५. १. २५, २६.

"इन्द्राग्नी वै सर्वे देवाः" ४. ४. ७.

"इन्धो ह वै त मिन्द्र इत्याचक्षते" १. ?

"इमे वै लोका गौः" १. ३. ३५.

"इमे वै लोका रजांसि" २. ३. १८.

"इयं गायत्री" १. १. १५.

"इयं वा अदितिः" ४. २. २.

"इयं वा आसन्दी, अस्यां हीदं सर्वं मासन्नम्" ५. १. १२.

"इयं ह्यग्निः" १. १. १४.

"उत्तर मुष्टि मादधाति ०—० द्यौर्हैष उष्टिः" ३. ७. ४.

"उत्तरस्मिंस्तदन्वाख्याने" ४. ६. ७.

"उपांशु वै रेत: सिच्यते" २. १. २२.

"ऋतव: संवत्सर:" १. ४. ३६.

"एतस्यां ह दिशि ( ऐशान्यां ) स्वर्गस्य लोकस्य द्वारम्" ४. ४. ४.
"एष लोको निधि:" ३. ७. ३.
"एष ह वा अनद्धापुरुषो यो न देवानवति न पितॄन् न मनुष्यान्" २. ३. २४.
"एषा ह नाभि: पृथिव्यै यत्रैष एतत् समिध्यते" ४. ५. ८.
"एषा ह संवत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी, योत्तरैषोत्तमा" २. १. १८.
"एषा ह्योभयेषां देवमनुष्याणां दिग् यदुदीची-प्राची" ४. ४ ३.

"ओषधय: ०—० एतद्वैतासां समृद्धं रूपं यत् पुष्पवत्य: सुपिप्पला:" ३. ५. १७.
"ओषधयो वै देवानां पत्न्य: ४. २. ४.

"को हि प्रजापति:" २. १. ५.
"क्रन्दतीव हि पर्जन्य:" ५. ३. २. [ ३. ५. १२.
"क्षत्रं वा अन्वक्षो वैश्यश्च शूद्रश्चानु रासभो ब्राह्मण मज:"
"क्षत्रियं प्रथमं यन्त मितरे त्रयो वर्णा: पश्चादनुयन्ति ०—० ब्राह्मणं प्रथमं यन्त मितरे त्रयो वर्णा: पश्चादनुयन्ति ०—० न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च पश्चादन्वित:" ३. ५. १३।

"गायत्रोऽग्निः" ३. ६. १२.
"गीते वा रमते" ३. १. १५.

"घृतभाजना ह्यादित्याः" ४. ३. ११.

"चतुःस्रक्तिरेष कूपो भवति" ३. १. २६ ; ४. २. ३.
"चन्द्रमा उ वै सोमः" ३. ६. १.

"छन्दांसि वै ग्नाः" ४. २. ७.

"ज्योतिर्वै हिरण्यम्" ५. १. २.

"तद् भूमिरभवत् ता मप्रथयत् सा पृथिव्यभवत्" १.१.१५, २.७.
"तद्यत्राग्नेयं तदेतदग्नोऽधिजनयति, अनयानया वै भेषजं क्रियते" ५. ६. ६.
"तद् या अमूराप एकं रूपं समद्रवन्त ०—० यदेव तत्फेनो द्वितीयं रूप मसृज्यत ०—० सैव मृद् यत् तत् तृतीयं रूप मसृज्यत" ३. ६. ३.
"तस्मिन्नेतस्मिन् सर्वे देवाः श्रिताः ०—० शिरः" १. १. ७.
"तस्य तदेव ब्राह्मणं यत् पुरश्चरणे" ४. ३. ५.
"तानाप्रीतान् पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत्" १. ४. ६.
"तिर इव वै योनौ रेतः सिच्यते ०—० स्वया जायया तिर इवैव चिचरिषति" ३. ५. १८.
"तिष्ठन् वै वीर्यवत्तमः" ४. ४. १.

"ते हेमे लोका मित्रगुप्ताः" ४. २. १४.

"त्रयो वै प्राणाः प्राण उदानो व्यानः" ३. ३. ५.

"त्रिवृद्धि प्रजातिः ,— पिता माता पुत्रः" ४. १. ५.

"त्रेधा विहिता हि वाग् ,— ऋचो यजूंषि सामानि" ४. १. ४.

"दक्षिणतो वा उदग् योनौ रेतः सिच्यते" ३. ३. १०.

"दश प्राणाः" ५. ६. १२.

"देवानां वै विधा मनु मनुष्याः" ५. ४. ८.

"द्यौर्वै तृतीयं रजः" ५. ४. ५.

"द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एक-
विंशः , एष प्रजापतिः" २. १. ३.

"द्विः संवत्सरस्यान्नं पच्यते ४. २. ८.

"नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं
यन्ति , तेषा मेतानि ज्योतींषि , नक्षत्रैरेवैना मेतत्
पचति ४. २. ८.

"नव प्राणाः" ५. ६. १०.

"नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ" ३. ३. ५.

"न वा उल्वं गर्भं हिनस्ति" ४. ४. १३.

"न वै जरायुर्गर्भं हिनस्ति" ४. ३. २४.

"न वै मित्रः कञ्चन हिनस्ति, न मित्रं कश्चन हिनस्ति" ४.२.१०.

"न वै योषा कञ्चन हिनस्ति" २. ३. ३८.

"पञ्चर्त्तवः संवत्सरः" ३. ६. १२.

"पर्णकषायनिष्पक्वा एता आपो भवन्ति स्थेम्ने" ३. ६. १.

"परिमण्डलो ह्येष एकविंशतिनिर्बाधः" ५. १. २.

"पशवो वै पुरीषम्" २. ३. ३८.

"पशुः स्वाय रूपायाविर्भवति गौर्वा गवे ऽश्वो वाश्वाय पुरुषो वा पुरुषाय" २. ३. २२.

"पाप्मा वै मृधः" ३. १. ८.

"पाप्मा वै वृत्रः" ३. ३. ३.

"पुत्रस्य जातस्य नाम कुर्यात्" १. ३. ८.

"पुरुहं नामासुररक्षस मास" ५. ५. १४.

"पुरुषः प्रजापतिः" २. ३. ४.

"पूर्वं मुद्धि मादधाति ०—० अन्तरिक्षं ह्येष उख्रिः" ३. ७. ४.

"पृथिवी ह्येष निधिः" ३. ७. ३.

"प्रजापतिं सन्त मग्निरित्याचक्षते" १. २. १३, २१.

"प्रजापतिः प्रथमां चितिं मपश्यत्, प्रजापतिरेव तस्या आर्षेयम्" २. ३. १०.

"प्रजापतिरग्निः" २. १. ३.

"प्रजापतिरेषोऽग्निः उभयस्वेतत् प्रजापतिर्यञ्च देवा यच्च मनुष्याः" ५. ५. ४.

"प्रजापतिर्वै भरतः स हीदं सर्वं बिभर्ति" ५. ५. १४.

"प्रजापतिर्वै हिरण्यगर्भः" २. २. ५.

"प्रजापतिस्त्रय्या विद्यया सहापः प्राविशत्" २. ३. १०.

"प्रजापतेर्वै शोकादजा समभवत्" ४. २. १६.

"प्राची हि दिगग्नेः" ५. ५. ८.

"प्राणा अग्निः, यावानग्निर्यावत्यस्य मात्रा तावत् तद्" [ ५. ६. १२.

"प्राणा वा ऋषयः" १. १. १.

"प्राणो वा अङ्गिराः" १. २. २८.

"प्राणो वा अथर्वा" ३. ३. १.

"प्राणो वै नृषत्" ५. ३. ११.

"प्राणो वै ब्रह्म" २. ३. १७.

"प्राणो वै मित्रः" ३. ६. ५.

"प्रादेशमात्रो वै गर्भो विष्णुः" ४. ४. १२.

"बाहुर्वा अरत्निः" ५. १. १४.

"बाह्यत उ वा एतस्य रश्मयः" ५. १. २.

"ब्रह्म वै पलाशः" ४. ५. ७.

"भूतानि ऋतवः ०—० भूतानाम्पतिः संवत्सरः ०—० उषाः पत्नी" १. ३. ८.

"मनसि ह्यय मात्मा प्रतिष्ठितः" ५. १. २१.

"मनो वै पाथ्यो वृषा" ३. ३. ४.

"मनो वै सविता" २. ३. १३.

"मर्त्याः कुणपा अनपहतपाप्मानः" ५. ६. १.

"मृण्मयीष्टका ०—० पश्विष्टका ०—० हिरण्येष्टका ०—० वानस्पत्येष्टका ०—० अश्मं पञ्चमीष्टका" १. २. ३०.

"यं जातं कामयेत सर्व मायुरियादिति वात्सप्रेणैन मभिमृशेत्, तदस्मै जातायायुष्यं करोति" ५. ४. २.

"यः कपाले रसो लिप्त आसीत् सोऽजोऽभवत्" १. १. ११.

"यच्चिनोति तस्माच्चितयः" १. २. १८.

"यज्ञो वै मखः" ३. ७. १.

"यज्ञो वै महिमा" २. ३. १८.

"यत् कपाल मासीत् तदन्तरिक्ष मभवत्" १. २. २.

"यत् कपाल मासीत् सा द्यौरभवत्" १. २. ३.

"यत् कपाल मासीत् सा पृथिव्यभवत्" १. १. ११.

"यथा महान्त मध्वानं विमोकं समश्नुवीत तादृक् तत्" ५. ४. १२.

"यदरसदिव स रासभोऽभवत्" १. १. ११.

"यदरोदीत् तस्माद् रुद्रः" १. ३. १०.

"यद् भिषाये प्रायश्चित्तिरुत्तरस्मिंस्तदन्वाख्याने" ३. ७. २२.

"यद्वा अस्ये घृतं विलिष्ट मङ्गिर्वै सन्धीयते" ३. ४. १.

"येव प्रथमा वित्ता सा महिषी" ४. १. १.

"येषु वनस्पतिषूर्ग् यो रस उदुम्बरे तं दधाम" ४. ५. ३.

"योनिरविच्छेद माहरति रेतसोऽविच्छेदाय" ३. ३. १०.

"योनिर्मुञ्जाः, शणा जरायु, उल्वं घृतं, गर्भं समित्" ४. ४. १५.

"योनिर्वै पुष्करपर्णम्" ३. २. ७.

"योनिर्ह्येतदग्नेः समुद्र मभितः पिन्वमानम्" ३. २. ८.

"यो वाव कर्म करोति स एव तस्योपचारं वेद" ४. २. १७.

"यो वै पुत्राणां राध्यते तेन पितरं पितामहं पौत्रमाचष्टे"१.२.१३

"योषा वै सिनीवाली एतद् वै योषायै समृद्धं रूपं यत् सुकपर्दा
सुकुरीरा स्वौपशा समर्धयति" ३. ६. १०.

"रश्मयो वा एतस्य निर्बाधाः" ५. १. २.

"रश्मयो वा एतस्याश्वय:" ३. ४. १०.

"रसो वै मधु, रसवतीरयक्ष्मत्वाय' ३. ४. २.

"रुद्र:, सर्व:, पशुपति:, उग्र:, अशनि:, भव:, महान् देव:, ईशान:, तान्येतान्यष्टावग्निरूपाणि, कुमारो नवम:"।
"अग्निर्वै रुद्र:, आपो वै सर्व:, ओषधयो वै पशुपति:, वायुर्वा उग्र:, विद्युद्वा अशनि:, पर्जन्यो वै भव:, प्रजापतिर्वै चन्द्रमा:, प्रजापतिर्वै महान् देव:, आदित्यो वा ईशान:" १. ३. १०—१८।

"रेतो वा आज्यम्" ३. १. १८.

"रोहितो ह्याग्नेरश्व:" ४. ५. ४.

"रौद्रा वै पशव:" ४. ४. ७.

"लोम त्वङ् मांस मस्थि मज्जा ता एवैता: पञ्चचितय:" १.२.१७.

"वज्रो वा आज्यम्" ३. १. १८।

"वज्रो वै पशव:" ३. ५. ६.

"वरुण्या वै यज्ञे रज्जु:" ३. ४. ८; ७. १३.

"वाक् पुष्करपर्णम्" ३. २. ७.

"वाग्वा अग्नि: प्राण इन्द्र: ( इन्द्राग्नी )" १. २. २८.

"वाग् वा इदं कर्म, प्राणो वाचस्पति:" २. ३. १९.

"वाग्वै दध्यङ्ङाथर्वण:" ३. ३. ३.

"वाग्वै धिषणा" ४. २. ५.

"वाग्वै मन्त्र:" ३. २. ७.

"वाघतस्तान् ( रश्मीन् ) एतदेतदाह" ३. ४. १०.

"वायुनान्तरिक्षं मिथुनं समभवत्" १. २. ३.

"वायुर्वै वसुरन्तरिक्षसत्" ५. ३. ११.

"वारुणो वै पाशः" ५. ३. ८.

"विष्णुर्यज्ञः विष्णुर्हि भूत्वाक्रमते" ५. २. ११—१६.

"वृत्रं पाप्मानम्" २. १. १९.

"शक्त्या हि स्वर्गं लोक मेति" ६. ३. १४.

"शाणो रुक्मपाशः" ५. १. ७.

"संवत्सरः प्रजापतिः" २. १. ५.

"संवत्सरा ऋषयः" १. ४. २६.

"संवत्सरो वा अग्निर्वैश्वानरः" ४. ३. २०.

"स एतान् पञ्च पशूनपश्यत्—पुरुष मश्वं गा मवि मजम्" [१. ४. २.

"स एतान् पञ्च पशून् प्राविशत्" १. ४. ३.

"स एषोऽग्निरेव यत् रुक्मः" ४. ४. ११.

"सप्तैतस्य एता देवताः" ४. १. १७.

"सप्तर्तवः संवत्सरः" ४. ३. १४ ; ४. ७.

"सर्वाणि हि चित्राण्यग्निः" १. ३. २०.

"सवितैषोऽग्निः" २. २. ६. [१. ४. ७.

"स शीर्षाण्येवोत्कृत्योपाधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावत्"

"सा चतुस्तना भवति। चतुस्तना हि गौः, तां हैके द्विस्तनां
कुर्वन्ति, अथो अष्टस्तनाम्। न तथा कुर्यात्। ये वै गोः
कनीयस्तनाः पशवो ये भूयस्तनाः, अनुपजीवनीयतरा
वा अस्यैते अनुपजीवनीयतराण्ँ हैनां ते कुर्वते। अथो

इ ते न गां कुर्वते, शुनीं वा, अविं वा, वडवां वा।
तस्मात् तथा न कुर्यात्" ३. ७. १८.

"सोमो वै पर्णः" ३. ६. १.

"सोमो वै पलाशः" ४. ५. ७.

"स्वर्गो वै लोको नाकः" ३. १. १४.

"हिरण्य ममृतम्" १. १. २.

---

## ॥ अथ कण्डिकासूची ॥

| कण्डिकाप्रतीकम्. | पृष्ठे |
|---|---|

| कण्डिकाप्रतीकम्. | पृष्ठे |
|---|---|



| कण्डिकाप्रतीकम. | पृष्ठे |
|---|---|

| कण्डिकाप्रतीकम्. | पृष्ठं |
|---|---|



| कण्डिकाप्रतीकम्. | पृष्ठं |
|---|---|

| कण्डिकाप्रतीकम्. | पृष्ठे |
|---|---|

## ॥ अथ कर्मसूची ॥

## ॥ अथ ऋषिनामसूची ॥

मिति । सुपर्णात्मना भावनया तस्य वीर्य्य मेवाभिसंस्कृतवान् भवति । त्रिवृदादयः शब्दा मन्त्रव्याख्यानावसरे एव व्याख्याताः । सुगम मन्यत् ॥

यजुषां कथ मग्नेर्नामधेयत्व मित्याशङ्का तद् व्याचष्टे—"यजूंषि नामेति । "यद्देन मग्निरित्याचक्षत इति । यः सर्वै-रुच्यमानोऽग्निरिति शब्दोऽस्ति, तस्यापि यजुरन्तःपातित्वात् यजुष्ट्वम् । 'तत्' तत एव । नाम्न एकस्यापि बहुषु प्रदेशेषु चाम्ना-नात् यजूंषीति बहुवचनम् । दिव मित्यनेन तत्रस्था देवा विवक्षिता इति व्याचष्टे— "देवान् गच्छेति । "तद् एनं सुपर्णं गरुत्मन्तं कृत्वा चाहेति मन्त्रशेषः । कि माह ? देवान् गच्छेत्या-र्थ्य माहेति । अथवा मन्त्रोच्चारयिता सुपर्णोऽसीत्यादिना 'एनम्' अग्निं 'सुपर्णं गरुत्मन्तं कृत्वा' 'आह' ब्रूते । कि मिति ? 'देवान् गच्छ'–इति ॥ ६ ॥

उक्तं विकारं पक्षपुच्छाद्यात्मकम्, भाविनोऽग्निजननस्य उप-योगितया प्रशंसितु मनुवदति— "तं वा एत मिति । वक्ष्य-माणोपयोगिनं लोकन्यायं दर्शयति— "यादृग् वै योनाविति । यादृग्विधं सिच्यते, तादृग् जायते, इति लोकमर्यादा । 'यद्' यस्मात् 'पक्षपुच्छवन्तं विकरोति' 'अत्र' उखाधारणसमये । तस्मात्' 'एषः' अग्निः 'अमुत्र' आहवनीयदेशे चयनानन्तरं तादृगेव 'जायते', चयनेन सुपर्णाकार एव जायत इत्यर्थः । अनेनाभिमन्त्रणचयनयोर्वै सादृश्याभाव उक्तः ॥ ७ ॥

प्रसङ्गात् केषाञ्चित् पक्ष मुदाहृत्य निराचष्टे— "तं हैक एकया विकृत्याभिमन्त्रयान्यां चिति मित्यादिना । 'एतया' सुप-र्णोऽसीत्याद्युक्तरूपया । 'अन्याम्' इत्यस्य विवरणम्— "द्रोण-

चित मित्यादिकम् *। द्रोणादयोऽग्नेरेवाकाराः। "समुह्य पुरीषं वेति। प्रतिदिशं पुरीष माहृत्याहृत्य, तेनैव चयनं 'समुह्य', पुरीषाख्या चितिः। इतराः स्पष्टाः। निषेधोपयोग-सिद्धये निषेध्यस्य प्रतिकूलता माह— "यथा पशुपुच्छवन्तं गर्भं परिहरेत्, तादृक् तदिति। स्वपक्ष मुपसंहरति— "तस्मा-देनं सुपर्णचित मेवेति ॥ ८ ॥

यदुक्तं सूत्रकृता— "अग्निकं प्राञ्चं प्रगृह्णाति सुपर्णोऽसीति पिण्डवद् धारणञ्चेति"-इति †। च-शब्दोऽवधारण मिति पिण्ड-वदेव; उखार्थं मृत्पिण्डधारणं यद्वत्, तद्वदित्यर्थः। तदिदं विधत्ते— "त मेतया विकृत्येत ऊर्ध्वं प्राञ्चं प्रगृह्णातीति। 'इतः' अस्मात् धृतप्रदेशात् 'प्राञ्चं' प्राङ्मुखं सूर्यस्याग्नेश्च यथा मध्ये व्यवधानं न भवति, तथेत्यर्थः। एतत् प्रशंसति— "असौ वा आदित्य एषोऽग्निरिति। अग्नेरादित्यात्मकत्वं प्रागु-क्तम्। आदित्यस्य प्रागुर्ध्वगति प्रसिद्धया उक्तार्थ मुपोद्बलयति— "तस्मादसावादित्य इति। प्रग्रहणे प्रकारविशेष माह— "परो-बाहु प्रगृह्णातीति। बाह्वोः 'परः' ऊर्ध्ववर्त्ती यथा भवति तथेत्यर्थः। 'एषः' आदित्यः 'इतः' 'अस्मात्' भूस्थानात् 'परो-बाहुः'; सर्वेषां बाह्वोरूर्ध्वप्रदेशवर्त्तित्वात् तद्वतिभिन्नस्याप्यस्य तथा ग्रहणं युक्त मित्यर्थः। बाह्वोरुपरिधृतस्याग्नेः प्रत्यवरो-

---

* "एतया विकृत्याभिमन्त्र्यान्यचितिं चिन्वन्ति, द्रोणचिद्रथ-चक्रचितप्रउगचिदुभयतः प्रउगः समुह्य पुरीषः"—इति का० श्रौ० सू० १६. ५. ६। 'एते अग्निविशेषाः, तदाकाराश्चिन्वन्त्येके, एके सुपर्णचितम्' इत्यादि तत्र वृ०।

† का० श्रौ० सू० १६. ५. ७, ८।

हणम्, तदनन्तरम् नाभेरुपरि प्रदेशे धारणं विधत्ते— "अथैन मुपावहरतीति। "तस्योक्तो बन्धुरिति। उपरिनाभिधारणार्थवाद उक्तो रुक्मधारणप्रस्तावे * इत्यर्थः॥ ९॥

अथ विष्णुक्रमक्रमणं विधाय, तत् निर्वचनद्वारेण प्रशंसति— "अथ विष्णुक्रमानिति †। विष्णुभूतैर्देवैः क्रान्तत्वात् विष्णुक्रम इति नाम सम्पन्नम्। यथा देवैस्तथैव 'एतत्' एतेन समन्त्रकपादाक्रमणेन 'इमान् लोकान्' विष्णुर्भूत्वा क्रान्तवान् भवति यजमानः॥ १०॥

ननु मनुष्यस्य यजमानस्य कथं विष्णुभावेन आक्रमणं सङ्गच्छत इत्याशङ्क्याह— "स य इति। 'सः' 'यः' प्रसिद्धः 'विष्णुः' अस्ति, 'सः' 'यज्ञः'। पुनश्च 'सः' 'यः' प्रसिद्धो 'यज्ञः' अस्ति, 'अयम् अग्निरेव'। अग्र मिति कः? यः 'उखायां' वर्त्तते, सोऽग्निरेव विष्णुरित्यर्थः। प्रतिपादितस्य विष्णोः स्वरूपप्राप्तिं देवानां दर्शयति— "एत मेव तद्देवा इति। "तथैवैतद्यजमान मित्यादिकं स्पष्टम्। उखाग्निं धृत्वा क्रमण मेव विष्णुक्रमण मित्युक्तम् भवति॥ ११॥

क्रमणप्रकारं विधाय प्रशंसति— "उदङ् प्राङ्ङित्यादिना ‡। अत्र लोकत्रयप्रतिनिधित्वेन त्रिवाराक्रमणम्, तस्य त्रयो मन्त्राः, दिशो विक्रमार्थं § पादाक्रमणाभावेऽपि एको मन्त्रः ‖॥ १२॥

---

* पुरस्तात् (७ १. ८-११.) ३७३ पृ० द्रष्टव्यम्।

† का० श्रौ० सू० १६. ५. ११।

‡ का० श्रौ० सू० १६. ५. १४।

§ का० श्रौ० सू० १६. ५. १३।

‖ का० श्रौ० सू० १६. ५. १२।

तदेवं मन्त्रचतुष्टयं विक्रमणेन विधाय व्याचष्टे— "विष्णोः क्रमोऽसीति *। "विष्णुर्हि भूत्वा क्रमत इत्यादिना। प्रथममन्त्रस्याय मर्थः— हे आक्रम्यमाण ! पादनिधानस्थान ! त्वं 'विष्णोः क्रमोऽसि' 'इति' एतत् प्रसिद्ध मेव, तद् दर्शयति— "विष्णुर्हि भूत्वेति। 'अत्र' आक्रमणकाले 'सपत्नान्' शत्रून् 'हन्ति' हिनस्ति खलु; अतः 'सपत्नहा' इति विशेषणं युक्तम्। 'गायत्रं छन्दः'–'पृथिवी मनु'–इत्येतयोर्ब्राह्मणं स्पष्टम्। क्रमणप्रकार माह— "प्रहरति पाद मिति। पादं पुरोदेशं प्रति नयेत्, नीत्वा च 'क्रमते' पादं प्रक्षिपेत्। तदनन्तरम् 'अग्निम्' 'ऊर्द्धं' नाभेरुपरिदेशं प्रति 'उदुग्रह्णीयात्', ऊर्द्धमुखं ग्रह्णीयात्। 'हि' यस्मात् 'ऊर्द्धः' भूलोकादुपरिदेशं प्रति 'रोहति' विष्णुक्रमणेन, अतोऽग्नेरप्यूर्द्धदेशप्रापणं युक्त मित्यर्थः॥ १३॥

एव मुपरितनं मन्त्रब्राह्मण मपि व्याख्येयम्। 'सपत्नहा'–इत्यस्य स्थाने क्रमेण 'अभिमातिहा'–'अरातीयतो हन्ता'–इति विशेषः †। तथा गायत्र मित्यस्य स्थाने क्रमेण 'त्रैष्टुभम्', 'जागतम्', 'आनुष्टुभम्' इति विशेषः। एवम् 'अन्तरिक्षं', 'दिवं', 'दिशम्'–इति च। इतरत् समानम्॥ १४, १५॥

दिग्विक्रमणे विशेष माह— "दिशोऽनुविक्रमस्वेति ‡। सर्वा दिशोऽनुवीक्ष्य पादं न प्रहरेत्। पादप्रक्षेपाकरणस्य प्रयोजन माह— "नेदिमानिति। 'नेत्'–इति परिभये; एतेषां त्रयाणां

---

* वा० सं० १२. ५. १।

† चतुर्दशकण्डिकायाम् 'अभिमातिहा'–इति, तत उत्तरत्र 'अरातीयतो हन्ता'–इत्येवमादि बोद्धव्यम्।

‡ वा० सं० १२. ५. ?।

लोकाना मतिक्रमः परिभयम् ; अतस्तत्कर्त्तव्य मिति तस्या-भिप्रायः । पादप्रहारवत् अग्नेरुद्ग्रहणस्यापि निवृत्तिप्रसक्ता-वाह— "ऊर्ध्व मेवाग्नि मिति । 'एव'-शब्दो भिन्नक्रमः ; उद्-गृह्णात्येव । तत्र प्रयोजनं दर्शयति— "सꣳ्शारोहतीति । समारोहणसम्भवात् तत्प्रयोज्य मप्युद्ग्रहणं कर्त्तव्य मेवे-त्यर्थः ॥ १६ ॥ २ [ ७. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

षष्ठकाण्डे सप्तमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

अथैन मिति प्रगृह्णाति । एतद्वै देवा अका-मयन्त पर्जन्यो रूपꣳ् स्यामेति त ऽएतेनात्मना पर्जन्यो रूप मभवंस्तथैवैतद्यजमान एतेनात्मना पर्ज-न्यो रूपं भवति * ॥ १ ॥

अक्रन्ददग्नि स्तनयन्निव द्यौरिति । क्रन्दतीव हि पर्जन्य स्तनयन् क्षामा रेरिहद्वीरुधः समञ्जन्निति क्षामा वै पर्जन्यो रेरिह्यमाणो वीरुधः समनक्ति

---

* 'भवति'— इति ग, घ. ङ ।

सद्यो जज्ञानो व्वि हीं मिमो ऽअव्यदिति सद्यो वा ऽएष जज्ञान इदᳪ सर्व्वं व्विख्यापयत्या रोदसी भानुना ऽऽभात्यन्तरितीमे वै द्यावापृथिवी रोदसी ते ऽएष भानुनाभाति परोबाहु प्रगृह्णाति परोबाहु हि पर्जन्यः * ॥ २ ॥

अथैन मुपावहरति। एतद्वै यो ऽस्मिंल्लोके रसो यदुपजीवनं तेनैतत् सहोर्द्ध्व इमांल्लोकान् रोहत्यग्निर्वा ऽअस्मिंल्लोके रसोऽग्निरुपजीवनं तद्यत् तावदेव स्यान्न हास्मिंल्लोके रसो नोपजीवनᳪ स्यादथ यत् प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रस मुपजीवनं दधाति ॥ ३ ॥

यद्देव प्रत्यवरोहति। एतद्वा ऽएतदिमांल्लोकानित ऊर्द्ध्वो रोहति स स पराङिव रोह इय मु वै प्रतिष्ठा तद्यत्तावदेव स्यात् प्र हास्माल्लोकाद्यजमानश्च्यवेताथ यत् प्रत्यवरोहतीमा मेवैतत् प्रतिष्ठा मभिप्रत्यैतस्या मेवैतत् प्रतिष्ठायां प्रतितिष्ठति ॥ ४ ॥

---

* 'पर्जन्यः'—इति क, ग, 'पर्जन्यः'—इति ख, ङ।

यदेव प्रत्यवरोहति। एतद्वा ऽएतदिमांल्लोकानित ऊर्द्ध्वो जयति स स पराङिव जयो यो वै पराङिव जयत्यन्ये वै तस्य जितमन्ववस्यन्त्यथ य उभयथा जयति तस्य तत्र कामचरणं भवति तद्यत् प्रत्यवरोहतीमानेवैतल्लोकानितस्योर्द्ध्वानमुतस्यार्वाचो जयति * ॥ ५ ॥

अग्नेऽभ्यावर्त्तिन्। अभि मा निवर्त्तस्वाग्ने ऽअङ्गिरः पुनरूर्जा सह रय्येत्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्व ऊर्द्ध्वो रोहति तद्यावत्कृत्व ऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥ ६ ॥

. अथैन मभिमन्त्रयते। आयुर्वा ऽअग्निरायुरेवैतदात्मन् धत्त ऽआ त्वाहार्ष मित्या ह्येनं हरन्त्यन्तरभूरित्यायुरेवैतदात्मन् धत्ते ध्रुवस्तिष्ठाविचाचलिरित्यायुरेवैतद् ध्रुव मन्तरात्मन् धत्ते विशस्त्वा सर्वा वाञ्छन्त्वित्यन्नं वै विशोऽन्नं त्वा सर्व्वं वाञ्छ-

* 'जयति'—इति ख।

त्वित्येतन्मा त्वद्राष्ट्रमभिभ्रशदिति श्रीर्वै राष्ट्रं मा त्वच्छ्रीरभिभ्रशदित्येतत् * ॥ ७ ॥

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते। वारुणो वै पाशो वरुणपाशादेव तत् प्रमुच्यते वारुण्यऽर्चा स्वेनैव तदात्मना स्वया देवतया वरुणपाशात् प्रमुच्यत ऽउदुत्तमं वरुण पाशमस्म-द्वाधमं वि मध्यमꣳ श्रथायेति यथैव यजुस्तथा बन्धुरथा वयमादित्य व्रते तवानागसो ऽअदितये स्यामेतीयं वा ऽअदितिरनागसस्तुभ्यं चास्यै च स्या-मेत्येतत् † ॥ ८ ॥

अथैनमिति प्रगृह्णाति। एतद्वा ऽएनमदो विकृत्येत उर्द्धं प्राञ्चं प्रगृह्णाति तं तत इति प्रगृह्णाति तद्यत्तावदेवाभविष्यद्यत्र हैवैष व्यरꣳ-स्यताथ यदेनमिति प्रगृह्णाति तस्मादेष इतीत्वा-थेति पुनरेति ‡ ॥ ९ ॥

अग्ने बृहन्नुषसा मूर्द्धा ऽअस्थादिति। अग्ने ह्येष

* '०दित्येतत्'—इति ग, घ।

† 'स्यामेत्येतत्'—इति ग, घ।

‡ 'पुनरैति'—इति ग, घ।

बृहन्नुषसा मूर्द्धस्तिष्ठति निर्ज्जगन्वान्तमसो * ज्योति-
षागादिति निर्ज्जगन्वान् वा ऽएष रात्र्यै तमसो-
ऽह्ना ज्योतिषैत्यग्निर्भानुना रुशता स्वङ्ग इत्यग्निर्व्वा
ऽएष भानुना रुशता स्वङ्ग आ जातो विश्वा
सद्मान्यप्रा इतीमे वै लोका विश्वा सद्मानि ता-
नेष जात आपूरयति परोबाहु प्रगृह्णाति परो-
बाहु ह्येष इतो ऽथैन मुपावहरतीमा मेवैतत् प्र-
तिष्ठा मभिप्रत्यैत्यथा मेवैतत् प्रतिष्ठायां प्रति-
तिष्ठति जगत्या जगती हेमांल्लोकानमुतोऽर्व्वाचो
व्यश्नुते † ॥ १० ॥

हꣳसः शुचिषदिति। असौ वा ऽआदित्यो
हꣳसः शुचिषद् वसुरन्तरिक्षसदिति वायुर्वै वसु-
रन्तरिक्षसद्धोता वेदिषदित्यग्निर्वै होता वेदिषद-
तिथिरिति सर्व्वेषां वा ऽएष भूताना मतिथिर्दु-
रोणसदिति विषमसदित्येतन्नृषदिति प्राणो वै
नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्नि-

* 'निर्ज्जगन्वां तमसो'—इति म पाठो दृष्टः डा०-वेबरमहोदयेन।

† 'व्यश्नुते'—इति क।

स्त मेतदाह व्वरसदिति सर्व्वेषु ह्येष व्वरेषु सन्न ऋतसदिति सत्यसदित्येतद् व्योमसदिति सर्व्वेषु ह्येष व्योमसु सन्नोऽब्जा गोजा इत्यब्जाश्च ह्येष गोजाश्चऽर्त्तजा इति सत्यजा इत्येतदद्रिजा इत्यद्रिजा ह्येष ऋत मिति सत्य मित्येतद् बृहदिति निदधाति बृहद्ध्येष तद्यदेष तदेन मेतत् कृत्वा निदधाति ॥ ११ ॥

द्वाभ्या मक्षराभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतन्निदधाति * ॥ १२ ॥

अथैन मुपतिष्ठते । एतद्वा ऽएन मेतल्लघूयतीव यदेनेन सहेति चेति चेमांल्लोकान् क्रमते तस्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ १३ ॥

यद्वेवोपतिष्ठते । एतद्वै देवा अबिभयुर्यद्वै नोऽय मिमांल्लोकानन्तिकान्न हिꣳस्यादिति तदेभ्य एवैन मेतल्लोकेभ्योऽशमयंस्तथैवैन मय मेतदेभ्यो लोकेभ्यः शमयति ॥ १४ ॥

---

* 'मेतन्निदधाति'—इति ख ।

सीद त्वं मातुः। अस्या उपस्थेऽन्तरग्ने रुचा त्वꣳ शिवो भूत्वा मह्यमग्ने ऽथो सीद शिवस्त्व मिति शिवः शिव इति शमयत्येवैन मेतदहिꣳसायै तथो हैष इमांल्लोकाञ्छान्तो न हिनस्ति ॥ १५ ॥

त्रिभिरुपतिष्ठते। त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा ऽएतन्निह्नुतेऽथो तावतैवैन मेतद्भ्यो लोकेभ्यः शमयति ॥ १६ ॥ ३ ॥

॥ इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् [७. ३.] ॥

अथ यदुक्तं विष्णुक्रमेणाग्नेरुद्ग्रहणं युक्तम्, तस्य तथेवोर्ध्वबाहुना धारणप्रकारं हस्तेनाभिनीय विधत्ते— "अथैन मिति प्रगृह्णातीति। 'इति'-शब्दविवक्षितोऽर्थः सूत्रे व्याख्याय दर्शितः— "धारणञ्च पिण्डवत्"-इति *। उखाया उपादानभूतस्य मृत्पिण्डस्य धारणं यथा प्रागुक्तम् †, ऊर्ध्वबाहुत्वविशिष्टम्, एतादृगत्रापीत्यर्थः। एतत् प्रशंसति— "एतद्वै देवा इति। एतदिति कामनाविषयस्य सङ्केतेन प्रदर्शनम्। एत-

* का० श्रौ० सू० १६. ५. ८ ।

† पुरस्तात् ( ४. ४. ६. ११ ) २३१ पृ० द्रष्टव्यम् ।

च्छन्दार्थं माह— "पर्जन्यो रूपं स्यामेतीति । यः 'पर्जन्यः' मेघो-ऽस्ति, तद्रूपं 'स्याम इति', मेघरूपो भवेमेत्यर्थः ॥ १ ॥

"अक्रन्ददग्नि स्तनयन्निवेति * । उपमानोपमेयभाव औपचारिकः । 'द्यामा' अवर्षणेन सर्वक्षयकारी पर्जन्यात्मा अग्निः 'रेरिहत्' भृशं लेहन् 'वीरुधः' लतागुल्मादीन् 'समञ्जन्' सम्यगार्द्रीकुर्वन् 'अक्रन्दद्' इति पूर्वेणान्वयः । अथवा ब्राह्मणानुसारेण 'वीरुधः समनक्ति' इति व्याख्येयम् । पर्जन्यात्मा अग्निः 'सद्यः' तदानीमेव 'जज्ञानः' जायमानः 'इद्धः' समिद्धः सन् 'इदं सर्वं' विख्यापयति' 'रोदसी' द्यावापृथिव्यौ 'अन्तः' तयोर्मध्ये 'भानुना' प्रकाशेन 'आभाति' सर्वतः प्रकाशते † ।

प्रथमपादं व्याचष्टे — 'पर्जन्यः' अग्न्याख्यः स्तनयन्, वृष्टिलिङ्गशब्दं कुर्वन् 'क्रन्दतीव' आक्रोशतीव वर्त्तते । क्षामशब्देनात्र पर्जन्यो विवक्षित इति व्याचष्टे— "जज्ञान इद८ँ सर्वं विख्यापयतीति । "इमे वै द्यावापृथिवी इत्यादि चतुर्थपादब्राह्मणं स्पष्टम् । "परोबाहु प्रग्रह्णातीति । एष सार्थवादः उख्याग्निधारणप्रस्तावे व्याख्यातः ‡ ॥ २ ॥

ऊर्ध्वं धृतस्याग्नेरवरोहणं सार्थवादं दर्शयति— "अथैनमुपावहरत्येतद्वा इति § । 'यः अस्मिन् लोके' 'रसः' सारभूतोंऽशः, 'यत्' यस्य सर्वप्राणिनामुपजीवनम्, 'तत्' सर्वम् 'एतद् वै' अग्निः । यद्वा, 'एतत्' इति वक्ष्यमाणार्थस्य सामा-

* का० श्रौ० सू० १६. ५. १४ ।

† वा० सं० १२. ६ ।

‡ पुरस्तात् ७. २. ६ कण्डी द्रष्टव्या ।

§ का० श्रौ० सू० १६. ५. १५ ।

च्यत: सङ्ख्याभिधानम्। 'तेन' स्वभूतेनोपजीवनेन 'स:' यजमान: 'एतत्' एतेन अग्नेरूर्ध्वप्रापणप्रकारेण 'ऊर्ध्वम्' 'इमान् लोकान्' 'आरोहति'। यो रसो यदुपजीवनञ्चोक्तम्, तद् विशिनष्टि— "अग्निर्वा इति। अग्ने: रसत्व मुपजीवनत्वञ्च दाहपाकाद्युपकारितया सर्वप्रसिद्धम्। 'तत्' पूर्वोक्तं 'यद्' यदि 'तावदेव' ऊर्ध्वं छुत मेव 'स्यात्', तर्हि 'अस्मिन् लोके' रसोपजीवने न स्त:। 'अथ' आरोपणानन्तरं 'यद्' यदि 'प्रत्यवरोहति' अग्निं पृथिव्याम्, तदुभयं भूलोके पुन: स्थापयति ॥ ३ ॥

प्रकारान्तरेण प्रत्यवरोहणं प्रशंसति— "यद्वेव प्रत्यवरोहत्येतद्वा इति। पूर्ववत्। "इमांल्लोकानिति। 'ऊर्ध्वो रोहति' विष्णुक्रमव्याजेन 'स:' 'पराङ्' प्रतिनिवृत्त: 'रोह:' आरोहणम्। लोकानां बहुत्व मपेक्ष्य 'स: स:' इति वीप्सा प्रतिरूपे। भूलोकं प्रति प्रत्यारोहणाभावे न प्रच्युति: स्यात्। 'ह' प्रसिद्धौ। "अथ यत् प्रत्यवरोहतीत्यादि गतम् * ॥ ४ ॥

पुनस्तदेव प्रकारान्तरेण प्रशंसति— "यदेव प्रत्यवरोहतीत्यादिना। 'रोहति' इत्यस्य स्थाने 'जयति' इत्येतद् विशेष:। शिष्टं पूर्ववत्। अस्तु पराजय: तस्य को बाध इत्यत आह— "अन्ये वै तस्य जित मन्ववस्यन्तीति। 'अन्ये' शत्रव: 'तस्य' 'जितं' स्थानम् 'अन्ववस्यन्ति' अनुक्रमेण क्रमते। अथोक्तवैपरीत्येन यदि 'उभयथा जयति', पराजितं पुन: प्रत्यङ् गमयतीत्यर्थ:, 'तस्य' उभयथा जयत: 'तत्र' जितप्रदेशे 'कामचरणं भवति'; अन्यैरप्रतिबद्धत्वात्। उभयथा जयप्रकार माह—

* पुरस्तात् तृतीयकण्डिकायां ( ४०६ पृ० ) द्रष्टव्यम्।

"तद्यत्प्रत्यवरोहतीति । 'इतश्च ऊर्ध्वान्' अस्माद् भूलोकादुपर्यवस्थितान् पराङ् प्रापणेन जयति, 'अमुतश्च अर्वाचः' अमुष्मात् द्युलोकात् अधोवर्त्तिनो लोकान् प्रत्यग्गमनेन 'जयति' ॥ ५ ॥

आरोहणस्य यथा आरोहस्थानभेदेन मन्त्रचतुष्टयं "विष्णोः क्रमोसि"-इत्यादिक मुक्तम्, एव मवरोहणीयाना मपि दिक्-सहितानां लोकानां चतुष्टादेवावरोहणस्यापि मन्त्रचतुष्टयस्य प्रतीक मुपादाय सङ्गृह्य तात्पर्यं माह— "अग्नेऽभ्यावर्त्तिन्नित्या-दिना * । "अग्ने अङ्गिरः शतं ते सन्त्वा वृतः"-इति † द्वितीयः, "पुनरूर्जा निवर्त्तस्व"-इति ‡ तृतीयः, "सहरय्या निवर्त्तस्व" -इति § चतुर्थः । 'एतेन' सर्वेण मन्त्रेण यावन्तः आयुर्वर्च-प्रभृतय उक्ताः, तेन 'सर्वेण' अपि सहितो 'निवर्त्तस्व' 'इति' 'एतत्' सर्वमन्त्रेषु प्रतिपादितम्; न ततोऽधिक मित्यर्थः ।

स्थानभेदेनैव यत् सिद्धं चतुष्कृत्वः प्रत्यवरोहणम्, तदनूद्य प्रशंसति— "चतुष्कृत्वः प्रत्यवरोहतीति । तत्रोपपत्ति माह— "चतुर्हि क्षत्त्र इति । फलित मर्थं दर्शयति— "तद् यावत्कृत्व ऊर्ध्व इति । 'त मुपावहृत्य' पूर्वं यस्मिन् नाभिप्रदेशे धृतम्, तत्रैव धारयेत् । उक्त मुपरिनाभिधारणार्थवाद मति-दिशति— "तस्योक्तो बन्धुरिति । रुक्मधारणप्रस्तावे उक्त इत्यर्थः ‖ ॥ ६ ॥

---

* वा० सं० १२. ७ ।

† वा० सं० १२. ८ ।

‡ वा० सं० १२. ६ ।

§ वा० सं० १२. १० ।

‖ पुरस्तादनुपद मेव सूचितम् (४०३ पृ०) ।

यदुक्तं सूत्रकृता— "उपरिनाभि धारयन्त्वा त्वाहार्षं मित्य-भिमन्त्रयते"-इति *, तदेतद् विधत्ते— "अथैन मभिमन्त्रयते इति। 'अथ' नाभ्युपरिधारणानन्तरम्। "आयुर्वा अग्निरिति। यावन्तं कालं जठराग्निर्जठरेऽस्ति, तावत्पर्यन्त मायुषोऽव-स्थानात् आयुषोऽग्निनिमित्तत्वात् "आयुर्वा अग्निः"-इत्युच्यते।

तत्र मन्त्रं विधाय व्याचष्टे— "अन्त्वाहार्ष मिति †। अय मर्थः,— हे अग्ने! 'त्वा' त्वाम् 'आहार्षम्' आहृतवानस्मि मध्यदेशं प्रति, त्वं च देहस्य 'अन्तः' मध्ये नाभिदेशे 'अभूः' स्थाः। तदनन्तरम् अन्यैरचालितः 'अविचाचलिः' 'ध्रुवः तिष्ठ'। त्वां 'सर्वा विशः' प्रजाः 'वाञ्छन्तु' इच्छन्तु, अन्न-कारणत्वात्; अन्नं सर्वदा अस्मासु तिष्ठतु इति हि वाञ्छन्ति। 'त्वत्' त्वत्तः सकाशात् 'राष्ट्रं' राज्यम् 'मा अभिभ्रशत्' अधिकं भ्रंशम् मा प्राप्नुयात्। "आ ह्येनं हरन्तीति आहार्ष मित्यस्य मन्त्रभागस्याभिप्रायः। "अन्तरभूः"-इत्येतस्य तात्पर्य-कथनम्— "आयुरेवैतदन्तरात्मन् धत्त इति। द्वितीयपादेन तस्यायुषो ध्रुवत्वप्रार्थनम्। अन्नदातृत्वात् अन्नोपजीवित्वाद्वा विशः अन्न मिति "अन्नं वै विशः"-इत्युक्तम्। अतो विशा मन्नरूपत्वात् 'सर्वा विशः' 'त्वा' त्वाम् अन्नं 'सर्वं वाञ्छन्तु' -इत्येतदेव। राष्ट्रवृद्धिभावाभावस्य श्रियोऽन्वयव्यतिरेकायत्तत्वात् 'श्रीर्वै राष्ट्रम्'-इत्युपचारेणाह ॥ ७ ॥

"अथ शिक्यपाश मित्यादि ‡। 'अथ' उपस्थानानन्तरम्,

---

* का० श्रौ० सू० १६. ५. १६।

† वा० सं० १२. ११।

‡ का० श्रौ० सू० १६. ५. १७क।

शिक्यरुक्मयोः सम्बद्धं पाशम् 'उन्मुञ्चते' अर्धं विस्रंसयेत्। उत्क्षस्य बन्धनसाधनस्य पाशस्य वरुणदेवताकत्वप्रसिद्धिः "वारुणो वै पाशः"-इत्यत्र 'वै'-शब्देन द्योत्यते। पाशोन्मोके वरुणदेवताका मृचं विधाय प्रशंसति— "वारुण्यर्चेति। 'तत्' तेन वारुण्यर्चा पाशविमोकेन 'स्वेनैव आत्मना' पाशस्य वास्तवेन रूपेण 'स्वया' स्वकीयया पाशाभिमानिन्या 'देवतया' 'वरुणपाशात् प्रमुच्यते' यजमानः।

ता मृचं दर्शयति— "उदुत्तम मिति *। पूर्वार्द्धस्य स्पष्टार्थता माह— "यथैव यजुस्तथा बन्धु रिति। यजुःशब्देन मन्त्रो विवक्षितः। मन्त्रो यादृश मर्थं प्रकाशयति, 'बन्धुः' तद्ब्राह्मण मपि तादृगर्थप्रकाशक एव; नात्र व्याख्यातव्यो गूढोऽर्थोऽस्तीत्यर्थः। मन्त्रभागे उत्तमादिभेदभिन्नस्य त्रिविधस्य पाशविश्रथनस्य स्पष्टं प्रतिपादनादित्यभिप्रायः।

उत्तरार्द्धस्य तात्पर्यं माह— "अथा वय मादित्य व्रत इत्यादिना। ख्यातायाः पृथिव्याः अचिरादेव पूर्त्तिदर्शनात् अखण्डनरूपस्य स्वार्थस्य पृथिव्या विद्यमानत्वात् "इयं वा अदितिः"-इत्याह। "अनागसः तुभ्यञ्च अस्यै च स्याम इत्येतदिति। 'तुभ्यम्' आदित्याय, 'अस्यै च' अदितये 'अनागसः' अपापाः 'स्याम' 'इत्येतत्', मन्त्रेणोक्त मिति शेषः : मन्त्रार्थः स्पष्ट एव ॥ ८ ॥

यदुक्तं सूत्रकृता— "पिण्डवत् प्राग्दक्षिणा प्रगृह्यास्यन्ने हृदक्षिति"-इति †, तदेतद् विधाय प्रशंसति— "अथैन मिति

---

* वा० सं० १२. १२।

† का० श्रौ० सू० १६. ५. १७ ख।

प्रगृह्णात्येतद्वा एन मित्यादिना। "इतीति। अग्नेरवरूढस्य ग्रहणप्रकारं हस्तेनाभिनीय दर्शयति; स च प्रकारः सूत्रे दर्शितः— "पिण्डवत् प्रागित्यादिना *। 'इतः' अस्मात् स्थानात् 'अदः' पश्चिरूपेण 'विकृत्य' पूर्वम् 'ऊर्द्धम्' प्रगृहीतवान्। अतः कारणात् 'तं' तथागृहीतम् अग्निम् 'ततः' देशात् अवरुह्य 'इति' उक्तप्रकारेण प्रगृह्णीयात्। कोऽयं नियम इत्यत्राह-- "तद् यत् तावदेवाभविष्यदिति। 'तावदेव' ऊर्द्धप्रग्रहण मेव स्यात्, 'अत्र ह एव' ऊर्द्धलोके एव 'एषः' 'व्यरंस्यत' विरमेत्। 'अथ' उक्तवैलक्षण्येन 'यत्' यस्मात् 'एनम् इति' प्रगृह्णीयात्, 'तस्मात्' 'एषः' अग्निः 'इति' 'इत्वा' ऊर्द्धं गत्वा, 'अथ इति', एवम् अवरोहणेन 'पुनः' 'एति' स्वस्थानम् ॥ ८ ॥

तत्र मन्त्रं विधाय व्याचष्टे— "अग्रे बृहन्नित्यादिना †। अयम् अग्निः 'उषसाम्' 'अग्रे' 'बृहन्' भूत्वा 'ऊर्द्धः' सन् निर्गतः सन् 'अस्थात्' तिष्ठति। 'तमसः' नैशात् सकाशात् 'निर्जगन्वान्' निर्गतः सन् 'ज्योतिषा सह' 'आगात्' आगच्छति। अग्न्यादित्ययोरूर्द्धगमनप्रत्यागमनसाम्यात् आदित्यरूपत्वाय इद मभिधानम्। किञ्च 'अग्निः' 'उशता' प्रकाशमानेन 'भानुना' दीप्तिविशेषेण 'स्वङ्गः' शोभनाङ्गो भवति। हे अग्ने! 'जातः' जातमात्रः सन् 'विश्वा सद्मानि' सर्वान् लोकान् आहवनीयादिस्थानानि वा 'आप्राः' सर्वतः पूरितवानसि।

---

* ४१६ पृ० २१ पं० द्रष्टव्यम्।

† वा० सं० १२. १३।

पूर्वार्धस्य ब्राह्मणं मन्त्रव्याख्यानेनैव व्याख्यातम्। चित्यादिषु स्थानेष्वप्यग्नेरवस्थितिसम्भवात् त्रयो लोका अग्नेः स्थानानीत्यभिप्रेत्योक्तम्— "इमे वै लोका विश्वा स्थानानीति। अवतीर्णस्य प्रग्रहण मुक्तम्। तस्य प्रकार माह— "परोबाहु प्रगृह्णातीति। बाह्वोः परस्तादित्यर्थः। व्याख्यात मिदम् प्रत्यवरोहार्थवादे *। "जगत्येति। उपावहरतीति शेषः। सत्स्वपीतरेषु जगत्येति कोऽयं नियम इत्यत आह— "जगती हीति। "इमान् लोकान् अमुतः अर्वाचः व्यश्नुते"—इति। गायत्रीत्रिष्टुब्जगतीनां चित्यादिलोकत्रयाक्रमणस्य विष्णुक्रममन्त्रेषु उक्तत्वात् जगती द्युलोकव्यापिनी; अधिकाक्षरायां तस्यां न्यूनाक्षरयोश्छन्दसोरप्यन्तर्भावात् ॥ १० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ † ॥ ३ [ ७. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये तृतीयं ब्राह्मणम् ॥

---

* तृतीयकण्डिकातो ( ४१२ पृ० १५ पङ्क्तितः ) द्रष्टव्यम्।

† एकादशादिकण्डिकापञ्चकस्य सायणीयं भाष्य मस्माभिर्नाद्याप्यवापि। विहितानि तु तत्र "हंसः शुचिषत् ( वा० सं० १२. १४ क० )"—इतिमन्त्रेण उख्याग्नेरवतारणम्, "वृषद् ( वा० सं० २२. १४ ख )"—इति तस्यैवासन्द्यां स्थापनम्, "सीद त्वम् ( वा० सं० १२. १५ )"—इति तस्यैवोपस्थानञ्चेति। का० श्रौ० सू० १६. ५. १८, १९, २० सूत्राणि द्रष्टव्यानि।

( अथ चतुर्थं ब्राह्मणम् . )

अथ वात्सप्रेणोपतिष्ठते। एतद्वै प्रजापतिर्व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्य मकरोत्तथैवैतद्यजमानो व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो वात्सप्रेणायुष्यं करोति ॥ १ ॥

स हैष दाचायणहस्तः*। यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्व्व मायुरियादिति वात्सप्रेणैन मभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्व्व मायुरेत्यथ यं कामयेत व्वीर्यवान्स्यादिति व्विकृश्यैनं पुरस्तादभिमन्त्रयेत तथो ह स व्वीर्यवान् भवति ॥ २ ॥

दिवस्परि प्रथमं जज्ञे ऽअग्निरिति। प्राणो वै दिवः प्राणाद्ु वा ऽएष प्रथम मजायतास्माद् द्वितीयं परि जातव्वेदा इति यदेन मदो द्वितीयं पुरुषविधोऽजनयत्तृतीय मप्स्विति यदेन मदस्तृतीय मद्भ्यो ऽजनयन्नृमणा ऽअजस्र मिति प्रजापतिर्व्वै

* 'दाचायणहस्तः'—इति ग।

नृमणा अग्निरजस्र इध्यान एनं जरते स्वाधी-
रिति यो वा ऽएन मिन्द्धे स एनं जनयते
स्वाधीः ॥ ३ ॥

विद्मा ते ऽअग्ने त्रेधा त्रयाणीति । अग्नि-
र्वायुरादित्य एतानि हास्य तानि त्रेधा त्रयाणि
विद्मा ते धाम विभृता पुरुत्रेति यदिदं बहुधा
विक्रियते विद्मा ते नाम परमं गुहा यदिति
यविष्ठ इति वा ऽअस्य तन्नाम परमं गुहा विद्मा
तमुत्सं यत आजगन्थेत्यापो वा ऽउत्सोऽद्भ्यो वा
ऽएष प्रथम माजगाम ॥ ४ ॥

समुद्रे त्वा नृमणा अप्स्वन्तरिति प्रजापतिर्वै
नृमणा अप्सु त्वा प्रजापतिरित्येतन्नृचक्षा ईधे
दिवो ऽअग्न ऽऊधन्निति प्रजापतिर्वै नृचक्षा आपो
दिव ऊधस्तृतीये त्वा रजसि तस्थिवांꣳसमिति
द्यौर्वै तृतीयꣳ रजोऽपा मुपस्थे महिषा अवर्द्ध-
न्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्द्ध-
न्नित्येतत् * ॥ ५ ॥

* 'अवर्द्धन्नित्येतत्'- इति ग, घ ।

ता एता एकव्याख्यानाः । एत मेवाभि ता आग्नेय्यस्त्रिष्टुभस्ता यदाग्नेय्यस्तेनाग्निरथ यत्त्रिष्टुभो यदेकादश तेनैन्द्र ऐन्द्राग्नोऽग्निर्यावानग्निर्याव- त्यस्य मात्रा तावतैवैन मेतदुपतिष्ठत ऽइन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्यो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपतिष्ठते ॥ ६ ॥

यद्वेव व्विष्णुक्रमवात्सप्रे भवतः । व्विष्णु- क्रमैर्वै प्रजापतिरिमं लोक मसृजत वात्सप्रेणाग्निं व्विष्णुक्रमैर्वै प्रजापतिरन्तरिक्ष मसृजत वात्सप्रेण व्वायुं व्विष्णुक्रमैर्वै प्रजापतिर्दिव मसृजत वात्स- प्रेणादित्यं व्विष्णुक्रमैर्वै प्रजापतिर्दिशोऽसृजत वात्स- प्रेण चन्द्रमसं व्विष्णुक्रमैर्वै प्रजापतिर्भूत मसृजत वात्सप्रेण भविष्यद् व्विष्णुक्रमैर्वै प्रजापतिर्व्विश मसृजत वात्सप्रेणाशां व्विष्णुक्रमैर्वै प्रजापतिरहर- सृजत वात्सप्रेण रात्रिं व्विष्णुक्रमैर्वै प्रजापतिः पूर्व्वपक्षानसृजत वात्सप्रेणापरपक्षान् व्विष्णुक्रमैर्वै प्रजापतिरर्द्धमासानसृजत वात्सप्रेण मासान् व्वि- ष्णुक्रमैर्वै प्रजापतिर्ऋतूनसृजत वात्सप्रेण संव्वत्सरं

तद्यद् व्विष्णुक्रमवात्सप्रे भवत एतदेव तेन सर्व्वꣳ स्तजते ॥ ७ ॥

यद्देव व्विष्णुक्रमवात्सप्रे भवतः। व्विष्णुक्रमैर्वै प्रजापतिः स्वर्गं लोक मभिप्रायात् स एत-दवसान मपश्यद् वात्सप्रं तेनावास्यदप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो व्विष्णुक्रमैरेव स्वर्गं लोक मभिप्रयाति वात्सप्रेणा-वस्यति ॥ ८ ॥

स वै व्विष्णुक्रमान् क्रान्त्वा*। अथ तदानी मेव वात्सप्रेणोपतिष्ठते यथा प्रायायाथ तदानी मेव विमुञ्चेत्ताद्दक्तद्देवानां वै विधा मनु मनुष्या-स्तस्मादु हेद मुत मानुषो ग्रामः प्रयायाथ तदानी मेवावस्यति ॥ ९ ॥

तद्वा ऽअहोरात्रे ऽएव व्विष्णुक्रमा भवन्ति। अहोरात्रे वात्सप्र महोरात्रे ऽएव तद्यात्यहोरात्रे क्षेम्यो भवति तस्मादु हेद मुत मानुषो ग्रामो ऽहो-रात्रे यात्याहोरात्रे क्षेम्यो भवति ॥ १० ॥

---

* 'क्रान्त्वा'- इति ग, घ।

स वा ऽर्द्धं मेव संवत्सरस्य विष्णुक्रमान् क्रमते । अर्द्धं वात्सप्रेणोपतिष्ठते मध्ये ह संवत्सरस्य स्वर्गो लोकः स यत् कनीयोऽर्द्धात् क्रमेत न हैतꣳ स्वर्गं लोक मभिप्राप्नुयादथ यद् भूयोऽर्द्धात् पराङ् हैतꣳ स्वर्गं लोक मतिप्रणश्येदथ यदर्द्धं क्रमतेऽर्द्ध मुपतिष्ठते तत् सम्प्रति स्वर्गं लोक माप्त्वा विमुञ्चते ॥ ११ ॥

ताभ्यां वै विपर्यास मेति । यथा महान्त मध्वानं विमोकꣳ समश्नुवीत तादृक्तद्वै पुरस्ताच्चोपरिष्टाच्चोभे विष्णुक्रमवात्सप्रे समस्यत्यहर्वै विष्णुक्रमा रात्रिर्वात्सप्र मेतद्वा ऽइदꣳ सर्व्वं प्रजापतिः प्रजनयिष्यंश्च प्रजनयित्वा चाहोरात्राभ्या मुभयतः पर्यगृह्णात्तथैवैतद्यजमान इदꣳ सर्व्वं प्रजनयिष्यंश्च प्रजनयित्वा चाहोरात्राभ्या मुभयतः परिगृह्णाति ॥ १२ ॥

तदाहुः । यदहर्विष्णुक्रमा रात्रिर्वात्सप्र मथोभे ऽएवाहन् भवतो न रात्र्यां कथ मस्यापि रात्र्यां कृते भवत इत्येतद्वा ऽएते ऽर्द्धौ दीक्षमाणः पुर-

स्तादपराह्ण ऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैनेऽएतत् सन्निवत्स्यन्नुपरिष्टात् पूर्वाह्ण ऽउभे समस्यत्यहर्हैतद्यत् पूर्वाह्ण एव मु हास्योभे ऽएवाहन् कृते भवत उभे रात्र्याᳬ ॥ १३ ॥

स यदहः सन्निवत्स्यन्त्स्यात् * । तदहः प्रातरुदित ऽआदित्ये भस्मैव प्रथम मुद्वपति भस्मोदुप्य व्वाचं व्विसृजते व्वाचं व्विसृज्य समिध मादधाति समिध माधाय भस्मापोऽभ्यवहरति यथैव तस्याभ्यवहरणं तथापादाय भस्मनः प्रत्येत्योखाया मोप्योपतिष्ठतेऽथ प्रायश्चित्ती करोति ॥ १४ ॥

स यदि व्विष्णुक्रमीय मह: स्यात् † । व्विष्णुक्रमान् क्रान्त्वा वात्सप्रेणोपतिष्ठेताथ यदि वात्सप्रीयं वात्सप्रेणोपस्थाय व्विष्णुक्रमान् क्रान्त्वा वात्सप्र मन्ततः कुर्यान्न व्विष्णुक्रमानन्ततः कुर्याद्यथा प्रयाय न विमुञ्चेत्ताहक्तदथ यद् वात्सप्र मन्ततः करोति प्रतिष्ठा वै वात्सप्रं यथा प्रतिष्ठापयेदेव-

---

* 'संनिवास्यमस्यात्'—इति ग, घ।

† 'स्यात्'—इति ग, घ।

सादयेत् तादृक् तत् तस्माद् वात्सप्र मेवान्ततः कुर्यात् ॥ १५ ॥ ४ ॥

॥ इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् [७. ४.] ॥

"अथ वात्सप्रेणोपतिष्ठत इत्यादि *। 'ताभ्यः' पृथिव्यन्तरिक्षलोकद्वयव्यापिताभ्यः सृष्टाभ्यः प्रजाभ्यः 'वात्सप्रेण आयुष्यम् अकरोत्'; तस्मिन् सूक्तेऽग्नेर्लोकत्रयव्यापित्वलक्षणविभूत्याविष्करणस्य विद्यमानत्वात्। आयुषोऽग्न्यायत्तत्वात् तन्मन्त्रपाठेन तत्त्यानां प्रजाना मायुःस्थापन मित्यभिप्रायः ॥ १ ॥

प्रसङ्गात् कञ्चिद् यज्ञसंयुक्तं प्रयोगं दर्शयति— "स हैव दाक्षायणहस्त इति। 'दक्षः' प्राणः, तत्सम्बन्धि आयुष्यं 'दाक्षम्', तस्य 'अयनम्' प्रापकम्, तादृग्वस्तस्वरूप मिदं 'वात्सप्रम्'। तस्मात् उत्पन्नं शिशुम् आयुर्वृद्ध्यर्थं 'वात्सप्रेण अभिमृशेत' †।

वात्सप्रप्रसङ्गात् प्रागभिहितायाः सुपर्णोऽसीत्येतस्या विक्रत्या यज्ञाद् बहिः प्रयोगं दर्शयति— "अथ यं कामयेत वीर्यवान्स्यादिति विक्रत्यैनं पुरस्तादभिमन्त्रयेतेति। 'पुरस्तात्' वात्सप्रेण अभिमर्शनात् पूर्वम् ॥ २ ॥

उपस्थाने मन्त्रं विधाय व्याचष्टे— "दिवस्परीत्यादिना ‡। दिव्शब्दस्य विवक्षित मर्थ माह— "प्राणो वै दिव इति। 'दिवः' दिव्प्रतिपाद्य इत्यर्थः। अथवा दिव इति पञ्चम्यन्त-

---

* का० श्रौ० सू० १६. ५. २१।

† दिवस्परीत्याद्या एकादशर्चा वात्सप्राः।

‡ वा० सं० १२. १८।

पदेन प्रातिपदिकमात्रं विवक्षितवोक्तम्; द्विप्रातिपदिकात् प्राणो विवक्षित इति। तत् कथ मिति तत् समर्थयते— "प्राणा-द्वा एष प्रथम मजायतेति। 'प्राणात्' उत्पत्तेः प्राक्। काण्डादौ-- "प्राणा वा ऋषयः"-इत्युपक्रम्य, "सप्तपुरुषानेकं पुरुषं करवामेति त एतां सप्तपुरुषानेकं पुरुष मकुर्वन्"-इति प्रतिपादितम् *। अत्र 'वै'-शब्देन प्रसिद्धिर्द्योत्यते।

"अस्माद् द्वितीय मिति, अमुं द्वितीयं पादं व्याचष्टे— "यदेन मदो द्वितीयं पुरुषविधोऽजनयदिति। 'यद्' यस्मात् 'एनम्' अग्निम् 'अदः' विप्रकृष्टे काले 'पुरुषविधः' यथा पुरुषः तद-वयवी सम्पद्यते, तथा इष्टका मप्यजनयदित्यर्थः। अय मर्थोऽपि तत्रैव प्राक् प्रतिपादितः-- "स एव पुरुषः प्रजापति-रभवत्। स यः स पुरुषः प्रजापतिरभवत्, अय मेव स योऽय मग्निश्चीयते"-इति †। तथाविधचयनसाध्याकारोत्पादनस्य अध्वर्यु-कर्तृकत्वात् ऋषिराह— "अस्माद् द्वितीय मिति।

"तृतीय मप्सु"-इत्येतद् व्याचष्टे— "यदेन मदस्तृतीय मद्भ्योऽजनयदिति। 'एनम्' आहुत्याधाररूप मित्यर्थः। अय मर्थोऽपि तत्रैवोक्तः— "सोऽपोऽसृजत"-इत्युक्त्वा, "सोऽकामय-ताभ्योऽद्भ्योऽधि प्रजायेयेति, सोऽनया त्रय्या विद्यया सहापः प्राविशत् तत आण्डं समवर्त्तत"-इति, "अथ यो गर्भोऽन्तरासीत् सोऽग्निरसृज्यतेति च ‡।

क उत्पादितवानिति, तदाह— "नृमणा इति। नृमणाः-

---

* इहैव १ पृ० १२ पङ्क्तितः २ पृ० ७ पङ्क्तिं यावत् द्रष्टव्यम्।

† इहैव २ पृ० १६ पङ्क्तितो द्रष्टव्यम्।

‡ इहैव ४ पृ० ३ पं०, ६ पं०, १४ पङ्क्तिश्च द्रष्टव्यम्।

शब्दस्य विवक्षित मर्थं दर्शयति— "प्रजापतिर्वै नृमणा इति। नृविषयमनोयुक्तः इति तस्यार्थः। अजस्रशब्दं व्याचष्टे— "अग्नि-रजस्र इति। 'अजस्रम्' अहिंसितम् अग्नि मित्यर्थः।

चतुर्थपादस्य तात्पर्य माह— "यो वा एत मिन्धे स एतं जरत इति। पुनः पुनः समिन्धन मेवाग्नेरुत्पादनम्। अतो यः 'स्वाधीः' स्वाधानः इन्धे 'सः' 'जनयते' जनयति। अर्थात् स्तुत्यर्थं जरत इत्यस्य जनयत इत्यर्थ इति व्याख्यातं भवति॥

मन्त्रार्थस्तु व्याख्यातप्रायः॥ २॥

अथ द्वितीयमन्त्रः— "विद्मा ते अग्न इति *। अत्र "त्रेधा त्रयाणि"-इत्येतद् व्याचष्टे— "अग्निर्वायुरादित्य एतानि हास्य तानि त्रेधा त्रयाणीति। एकस्यैव त्रेधाभावेन सिद्धानि त्रयाणि रूपाणि 'विद्म' जानीमः। द्वितीयपादं व्याचष्टे— "विद्मा ते धाम विभृता पुरुत्रेति, यदिदं बहुधा विक्रियत इति। 'बहुधा' बहुप्रकार माह। 'पुरुत्रा' पुरुषु बहुषु प्रदेशेषु 'विभृता' विभृ-तानि 'धाम' धामानि। अमु मर्थं 'विद्म' जानीमः। तृतीयं पादं व्याचष्टे— "विद्मा ते नाम परमं गुहा य दिति। किं तत् गुह्यं नामेति तद् दर्शयति— "यविष्ठ इति वा तस्य परमं नाम गुह्येति। चतुर्थपादं व्याचष्टे— "विद्मा त मुत्सं यत आ जगन्थे-तीति। हे अग्ने ! त्वं 'यतः' 'आजगन्थ' आगतोऽसि, 'तम्' 'उत्सम्' उत्स्यन्दतेऽस्मादित्युत्सः तम्, 'विद्म'। कोऽसौ उत्स-शब्देन विवक्षित इति तं दर्शयति— "आपो वा उत्सोऽद्भ्यो वा एष प्रथम माजगामेति। अद्भ्य उत्पत्तिः पूर्वमन्त्रे "तृतीय मद्भ्यो-

* वा० सं० १२. १६। का० श्रौ० सू० १६. ५. २१।

अनयदित्यत्रोक्ता *। ननु तत्राङ्गो जन्म तृतीय मित्युक्तम्, कथ मत्र "प्रथम माजगाम"-इति ? उच्यते— नैष दोषः; तत्राग्नेः प्रजापत्यात्मकत्वं चित्यात्मकत्वं च रूप मपेक्ष्य तृतीयत्व मुक्तम्, इह तु प्रथमाद्यपेक्षया प्राथम्यस्य विवक्षितत्वात् ॥ ४ ॥

"समुद्रे त्वेति। तृतीयो मन्त्रः †। हे अग्ने! त्वां 'समुद्रे' तत्रापि 'अप्स्वन्तः' 'नृमणाः' मनुष्येषु अनुग्रहयुक्त-मनाः 'प्रजापतिः' 'ईधे' दीपयति। तथा 'नृचक्षाः' सर्वसाक्षि-त्वेन मनुष्याणां द्रष्टा प्रजापतिः 'दिवः' 'ऊधन्' ऊधसि अस्ती-त्यर्थः। "लोका रजांस्युच्यन्ते"-इति निरुक्तम् ‡। 'तृतीयं रजः' द्युलोकः, तत्र 'तस्थिवांसं' स्थितवन्तं त्वाम् 'अपाम्' 'उपस्थे' उत्सङ्गे, दिवि 'महिषाः' महान्तः प्राणाः, वायुप्राणयोरभेदाद् वायवः 'अवर्द्धन्'। यद्वा, अप्शब्देन तज्जं पुष्करपर्ण मुच्यते, तदेव द्योतमानत्वात् पृथिव्यसंस्पर्शात् दिवीति व्याख्यातं ब्राह्मणे § ॥

तत्र 'महिषाः प्राणाः' ऋत्विक्सम्बन्धिनः 'अवर्द्धन्'। उक्तो नृमणशब्दार्थः, द्वितीयपादेन 'नृचक्षसः'-शब्देन प्रजापतिर्विव-क्षितः, 'दिव ऊधः'-इत्यनेन आपो विवक्षिता इति, व्याचष्टे— "प्रजापतिर्वै नृचक्षा आपो दिव ऊध इति। तृतीयं रज इति द्यौर्विवक्षिता, महिषा इति च प्राणा विवक्षिता इति दर्श-यति— "द्यौर्वै तृतीयं रजः, प्राणा वै महिषाः, "दिवि त्वा प्राणा अवर्द्धन्निति ॥ ५ ॥

---

* ४१६ पृ० १५ पं० ( ३ क० ) द्रष्टव्यम्।

† वा० सं० १२. २०। का० श्रौ० सू० १६. ५. २१।

‡ निरु० ४. ३. ३।

§ "प्राणो वै दिवः"-इति ३ क० ( ४१६ पृ० १२ पं० ) द्रष्टव्यम्।

एवं प्रदर्शनार्थं सूक्तस्यादिमं ऋचं व्याख्याय, तद्व्याख्यान मुत्तरास्वृक्षु * समान मित्यतिदिशति— "ता एता एकव्याख्याना इत्यादिना। एक मेवाग्निं व्याचक्षत इति 'एकव्याख्यानाः'। 'एतत् एव' 'अभि' प्रवृत्ता इति शेषः। 'ताः' सर्वाः 'आग्नेय्यः' अग्निदेवत्याः, तथा ताः 'त्रिष्टुभः'। त्रिष्टुभ इति यत् 'तत्' एव कथ मित्यत आह— "यदेकादशेति। तत्पदे अक्षरगतैकादश-सङ्ख्यास्ति, तस्मात् त्रिष्टुभ इत्यर्थः। किं तत इत्याह— "तेनेन्द्र इति। त्रिष्टुभो हि इन्द्रदेवताकत्वम्। प्रतिपादितप्रकारेण 'अग्निः ऐन्द्राग्नः' ॥

"यावानग्निर्यावत्यस्य मात्रेति। ऐन्द्राग्नात्मनोऽस्याग्नेर्या-वती देवताद्वयस्वरूपा मात्रास्ति। "इन्द्राग्नी वै सर्वे देवा इति। इन्द्रस्य सर्वदेवताधिपतित्वात्, अग्नेश्च सर्वदेवतानुप्रवेशाच्च सर्वदेवतारूपत्वम्। "सर्वदेवत्योऽग्निरिति। 'स्वात्मना' इन्द्रा-त्मना चेत्यर्थः। अत्रापि यावत्यस्य मात्रेति सर्वदेवतारूपा मात्रेत्यर्थः ॥ ६ ॥

अथ पुनर्विष्णुक्रमवात्सप्रे समुच्चित्य † लोक तदधिष्ठातृदेव-तादिसकलजगदुत्पादकतया स्तौति— "यद्वेव विष्णुक्रमवात्सप्रे भवतः, विष्णुक्रमैर्वै प्रजापतिरिमं लोक मसृजत वात्सप्रेणाग्नि मित्यादिना। 'वित्तं' धनम्। 'आशां' दिशम्। सर्वं निगद-

---

* वा० सं० १२. २१—२८। का० श्रौ० सू० १६. ५. २१।

† "रुक्मं प्रतिमुच्य बिभर्त्ति (७. १. १.)"—इत्यारभ्य "मोद् त्वं मासुरस्याः"—इत्युपस्थानान्ताः (७. ३. १६.) विष्णुक्रमा ज्ञेयाः। तथाच सूत्रम्— "रुक्मप्रतिमोचनादि प्राग् वात्सप्राद् विष्णुक्रमाः"— इति १६. ५. ६।

सितम् । उक्त मर्थ मुपसंहरति-- "तद्यद् विष्णुक्रमवात्सप्रे भवत इति । उक्तार्थानुसन्धानेनोभय मवश्य मनुतिष्ठन् यजमानः सर्वं जगत् सृष्टवान् भवति ॥ ७ ॥

अथ पुनर्विष्णुक्रमं स्वर्गप्राप्तिसाधनात्मना, वात्सप्रं तदवसानात्मना च प्रशंसति— "यद्वेव विष्णुक्रमवात्सप्रे इति । विक्रमसाधनैः स्वर्गं लोक मभिलक्ष्य प्राप्तवान् प्रजापतिः, तस्य गमनस्य अवसानस्थानीयं वात्सप्र मपश्यत् । अवसानं विमोचनम् । "स्यतिरुपसृष्टो विमोचने"–इति * हि यास्कः । यजमानस्य तु अग्निना सह तन्मन्त्रेण आक्रमण मेव स्वर्गप्राप्तिः । वात्सप्रमन्त्रेणोपस्थानस्यानन्तर्भावित्वात् तेनोपस्थान मेव स्वर्गगत्यवसानम् । यदि केवलं विष्णुक्रमानेव कृत्वा वात्सप्रं न कुर्यात्, तदाग्नेः उपरि त्यागात् प्रदहेत् । "यद्वि युक्त मिति, लोकमर्यादाप्रदर्शनम् । रथे युक्त मश्वादिकं कदाचिदपि विमोकाभावे रथभारश्रमेण दह्यते, तथैवैतदित्यादि पूर्ववत् ॥ ८ ॥

दीक्षाप्रथमदिवसे विष्णुक्रमवात्सप्रयोः समसनं विधत्ते— "स वै विष्णुक्रमानिति । प्रजापतिना यथा कृतम्, तथैव यजमानेनापि कर्त्तव्य मिति को नियम इति, तत्राह— "देवानां वै विधा मनु मनुष्या इति । 'तस्माद् ह' तस्मादेव खलु कारणात् 'इदं' वक्ष्यमाणं 'मानुषो ग्रामः' मनुष्यसमूहोऽपि 'प्रयाय' गन्तव्यम् प्राप्य, तदानी मेव 'अवस्यति' अश्वादि गमनसाधनं विमुञ्चति । अनेन तस्य भूतार्थवादता समर्थिता भवति ॥ ९ ॥

---

* निरु० १. १६. १ ।

विहिते विष्णुक्रमवात्सप्रे, एकस्मिन् दिने विष्णुक्रमाः, अपरस्मिंस्तु वात्सप्र मित्येव क्रमेण कर्त्तव्य मिति सार्थवादं दर्शयति— "तद्वा अहोरात्रे एव विष्णुक्रमा भवन्ति, अहोरात्रे वात्सप्र मिति। 'अहोरात्रे' एकस्मिन् दिवसे इत्यर्थः। तथाच कात्यायनः— "विष्णुक्रमवात्सप्रे चाहर्व्यत्यासम्"–इति *। 'तत्' तेन गमनरूपं विष्णुक्रमम् एकस्मिन् दिवसे करोति, अपरस्मिंश्च तदवसानरूपं वात्सप्रं कृतवान् भवति। 'तस्मात्' 'मानुषो ग्रामः' अपि इदानी मपि एकस्मिन् दिवसे अध्वानं गत्वा, अन्यस्मिन् दिवसे 'क्षेम्यः' क्षेमार्हो भवति, सुख मास्त इत्यर्थः ॥ १० ॥

उक्तप्रकारेण संवत्सरपर्यन्त मनुष्ठितवतः † फलितं दर्शयति— "स वा अर्द्ध मेव संवत्सरस्येति। एवं सति संवत्सरार्द्धं विष्णुक्रमाः कृता भवन्ति, अतश्च संवत्सरमध्यदिवसात्मकः स्वर्गलोकः प्राप्तो भवति। उक्तवैपरीत्ये अर्द्धसंवत्सरादर्वाक् एकस्मिन् अपि अहनि अहर्व्यत्यासनियमभङ्गेन विष्णुक्रम मकृत्वा वात्सप्रं कुर्यात्, तदानीं संवत्सरमध्यात्मकं स्वर्गं न प्राप्नुयात्। यथार्द्धसंवत्सरादुपर्यपि अहर्व्यत्यासभङ्गेन यदि विष्णुक्रम मेव कुर्यात्, तदानीं संवत्सरमध्यलक्षणं स्वर्ग मतिक्रामेत्; अतो न्यूनाधिक मकृत्वोपक्रमेणाहर्व्यत्यासेनार्द्धसंवत्सरं विष्णुक्रमं कृत्वा,

---

* का० श्रौ० सू०' १६. ६. ५।

† "संवत्सरं सोऽग्निः, संवत्सराहिताग्निः, जातस्य च, षण्मास मन्त्यम्"—इत्येतानि (१६. ५. १०—१३.) कातीयसूत्राण्यपीह निरीक्षितव्यानि। अत्र चोपरिष्टादिह विशेषो द्रष्टव्यः (६. ५. १. ६५—६८; १०. २. ६. ६.)।

अर्द्धसंवत्सरं वात्सप्रोपस्थाने सति अप्राप्त्यतिक्रमेण लक्षणदोषद्वया-भावेनैव 'स्वर्गं लोकम् आप्त्वा विमुच्यते' ॥ ११ ॥

"ताभ्यां वै विपर्यास मेतीति । संवत्सर मनुष्ठेयत्वात् महाध्व-गमनस्थानीयं चयनकर्म, तत्राहर्विपर्यासानुष्ठानश्रमपरिहाराय एकस्मिन् दिने यात्राविच्छेदं कृत्वा महाध्वगमनप्राप्तिस्थानीयं भवति । आद्यन्तयोरह्नोरुभयोर्विष्णुक्रमवात्सप्रस्थानीयत्वम् , तयोः समुच्चित्यानुष्ठानं विधाय स्तौति—"तस्य वै पुरस्ताच्चोपरिष्टाच्चेत्या-दिना । अहश्च रात्रिश्च क्रमेण विष्णुक्रमवात्सप्रस्थानीयम् । तथा सति 'एतद्वै' । कि मेत दिति स्पष्टयति— "इदं सर्वं प्रजापतिः प्रजनयिष्यंश्चेति । एतस्य सर्वस्य सृष्ट्यादौ तदन्ते वा अहो-रात्राभ्यां सृष्टं सर्वं परिगृह्णीयात् , स्वाधीनं कृतवान् । "तथै-वैतदिति । पूर्ववत् । यजमानस्य सर्वजगत्सृष्टिर्नाम संवत्सर-पर्यन्त महर्व्यत्यासानुष्ठानम् ॥ १२ ॥

अहर्वै विष्णुक्रमो रात्रिर्वात्सप्र मित्यत्र काञ्चिच्छङ्कां समुत्था-पयति, ता मनूद्य समाधत्ते— "तदाहुर्यदहरिति । 'उभे एव' 'अहन्' अहनि निर्वर्त्ये 'भवतः', 'न रात्र्याम्' ; 'कथम्' 'अस्य' यजमानस्य 'रात्र्याम्' अपि 'कृते भवतः' ? अत्रोत्तरम् "एतद्वा इति । 'एते' उभे विष्णुक्रमवात्सप्रे 'अदः' विप्रकृष्टे दीक्षावसरे 'दीक्षमाणः' 'पुरस्तात्' संवत्सरस्य 'अपराह्णे' 'सम-स्यति' अव्यवधानेनानुतिष्ठति । अस्तु , रात्रेः कथं प्राप्तिरिति, तत्राह— "रात्रिर्वै तद् यदपराह्ण इति । इत्य मादौ समासन-कारण मुक्त्वा अन्तेऽपि दर्शयति— "अथैने एतत् सन्निवपन्निति । 'उपरिष्टात्' संवत्सरावसाने । शिष्टं पूर्ववत् । 'एवम्' आद्य-न्तयोः समस्यानुष्ठानेन 'उभे' अपि सर्वस्मिन्नहनि समस्य कृते

भवतः। तथा सर्वस्या मपि 'रात्र्याम्' 'उभे' अपि समस्य 'कृते भवतः' ॥ १३ ॥

चरमदिवसकर्त्तव्य माह— "स यदहरिति। 'यदहः' यस्मि-न्नहनि सन्निवापो नाम चितेऽग्नौ उख्याग्नेर्निवापः, तं करि-ष्यन् 'स्यात्', 'तदहः प्रातः उदिते आदित्ये'–इत्यादिना प्रयोगः प्रदर्श्यते। "भस्मैव प्रथम मिति *। नेतरत् कर्म प्रथमं कुर्यात्। "यथैव तस्याभ्यवहरण मिति। 'तस्य' भस्मनः उदके प्रक्षेपो 'यथा', तथा 'एव'। चितस्य 'भस्मनः' सकाशात् आदाय पुनस्त-द्देशात् 'प्रति' निवृत्तः सन् 'उखायाम् श्रोप्य उपतिष्ठते' ॥

भस्माभ्यवहरणादेरनुष्ठानप्रकारः समन्त्रक उपरिष्टात् "अथातो भस्मन एवेत्यादिना † प्रतिपादयिष्यते, अत्र तु अनुष्ठेयपदार्थो-द्देशमात्र मेव ॥

"अथ प्रायश्चित्तीकरोतीति। एतत् उखाप्रकरणे व्याख्या-तम् ‡ ॥ १४ ॥

दीक्षान्त्यदिवसस्य पक्षे विष्णुक्रमीयत्वम्, पक्षे वात्सप्रीयत्वञ्च भवति, तदा कथ मनुष्ठानप्रकार इति, तद् विभज्य दर्शयति— "स यदि विष्णुक्रमीय महः स्यादिति। विष्णुक्रमानन्तरं वात्स-प्रोपस्थान मिति यथाक्रम मेव। यदि वात्सप्रसम्बन्धि स्यात् चरम महः, तदा वात्सप्रोपस्थानानन्तरं 'विष्णुक्रमान् क्रान्त्वा' पुनर्वात्सप्रोपस्थानं कर्त्तव्यम्। पुनर्वात्सप्रोपस्थान मकृत्वा, केव-लेन विष्णुक्रमेणैव यदि समाप्येत, तदा गमनसाधनाश्वादि-

* "उखाया भस्मोद्वपन मस्तमिति पाठे"—इति का० १६. ६. १।

† उपरिष्टात् ८अ० २ब्रा० १ कण्डिकात इति यावत्।

‡ ३५८ पृ० ६ पं०, ३६६ पृ० ७ पं० द्रष्टव्यम्।

स्थानीयस्याग्नेर्न विमोकः स्यात्। इत्थं विष्णुक्रमेष्वेवानुष्ठाना-वसाने दोष मुक्त्वा, पुनः वात्सप्रेणाहस्समाप्तौ गुणं दर्शयति— "अथ यद् वात्सप्र मन्ततः करोति, प्रतिष्ठा वै वात्सप्र मिति। वात्सप्रस्य स्वर्गगमनावसानरूपत्व मुक्तं प्राक् *, तस्मात् प्रतिष्ठा-त्मकत्वम्। स्पष्ट मन्यत् † ॥ १५ ॥ ४ [ ७. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमेऽध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ७ ॥

ब्रह्माण्डं गोसहस्रं कनककहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां हस्तिवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यः,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

---

* ७ अ० ४ ब्रा० ११ कण्डी (४२१ पृ०) द्रष्टव्यम्।
† का० श्रौ० सू० १६. ६. ६ सवृत्ति द्रष्टव्यम्।

पाण्ड्योत्थं प्राज्यजन्मा लवणज मकुटः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मनुत मुदा पात्रसाक्षिक्षणार्थः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डे सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

---

* अस्य श्लोकटिप्पण्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

(अथाष्टमाध्यायस्य प्रथमं ब्राह्मणम्.)

व्यनीवाह्येताग्निं बिभ्रदित्याहुः। देवाश्चासुराश्चोभये प्राजापत्या पस्पर्धन्त ते देवाश्चक्रं समचरञ्छाल मसुरा आसंस्ते देवाश्चक्रेण चरन्त एतत् कर्मापश्यंश्चक्रेण हि वै देवाश्चरन्त एतत् कर्मापश्यंस्तस्मादनस एव पौरोडाशेषु यजूꣳष्यनसोऽग्नौ * ॥ १ ॥

स यो व्यनीवाह्यते। देवान् कर्मणेति दैवꣳ ह्यस्य कर्म कृतं भवत्यथ यो न व्यनीवाह्यते ऽसुरान् कर्मणैत्यसुर्यꣳ ह्यस्य कर्म कृतं भवति ॥ २ ॥

तद्धैक ऽआहुः। स्वयं वा ऽएष व्यनीवाहितो विष्णुक्रमैर्वा ऽएष प्रयाति व्यात्सप्रेणावस्यतीति न तथा विद्याद्दैवं वा ऽअस्य तत् प्रयाणं यद् विष्णुक्रमा दैव मवसानं यद् व्यात्सप्र मथास्येदं

* 'यजूꣳष्यनसोऽग्नौ' – इति ग, 'यजूꣳष्यनसोऽग्नौ' – इति घ।

मानुषं प्रयाणं यदिदं प्रयाति मानुष मवसानं यदवस्यति ॥ ३ ॥

प्रजापतिरेषोऽग्निः। उभयम्वेतत् प्रजापति-र्यञ्च देवा यञ्च मनुष्यास्तद्यद् व्विष्णुक्रमव्वात्सप्रे भवतो यद्देवास्य दैवꣳ रूपं तदस्य तेन संस्करो-त्यथ यद्वनीवाह्यते यद्देवास्य मानुषꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति य एवं व्विद्वान् व्वनीवाह्यते तस्मादु व्वनीवाह्यतैव * ॥ ४ ॥

स यदहः प्रयास्यन्त्स्यात् †। तदहरुत्तरतोऽग्नेः प्रागन उपस्थाप्यायास्मिन्त्समिध मादधात्येतद्वा ऽएनं देवा एष्यन्तं पुरस्तादन्नेनाप्रीणन्नेतया समि-धा तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्ये-तया समिधा ॥ ५ ॥

समिधाग्निं दुवस्यतेति। समिधाग्निं नम-स्यतेत्येतद् घृतैर्बोधयतातिथि मास्मिन् हव्या जुहोत-

---

* 'वनिवाह्यतैव'—इति ग, घ।

† '०स्यात्'—इति ग, घ।

मेति घृतैरह बोधयतातिथिं मो ऽअस्मिन् हव्यानि जुहुतेत्येतद् ब्रुवत्येत्यायै ह्यैन मेतद् बोधयति ॥ ६ ॥

अथैन मुद्यच्छति । उदु त्वा व्विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरिति व्विश्वे वा ऽएत मग्रे देवाश्चित्तिभिरुदभरन्नेतद्वेषां तदा चित्त मासीत्त-थैवैन मय मेतच्चितिभिरुद्भरत्येतद्वास्य तदा चित्तं भवति स नो भव शिवस्त्वꣳ सुप्रतीको व्विभाव-सुरिति यथैव यजुस्तथा बन्धुस्तं दक्षिणत उदञ्च मादधाति तस्योक्तो बन्धुः स्थाल्यां गार्हपत्यꣳ समुप्यापर मादधाति स यदि कामयेतोपाधिरोहेत् पार्श्वतो वा व्रजेत् ॥ ७ ॥

अथानड्वाहौ युनक्ति । दक्षिण मग्रे ऽथ सव्य मेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं या-स्यन्त्स्यात् प्राङेवाग्रे प्रयायात् प्राची हि दिगग्नेः स्वा मेव तद्दिश मनु प्रयाति ॥ ८ ॥

प्रेदग्ने ज्योतिष्मान्याहि । शिवेभिरर्चिभिष्ट्व मिति प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्चि-भिर्दीप्यमानैरित्येतद् बृहद्भिर्भानुभिर्भासन्मा हिꣳ-

सीस्तन्वा प्रजा इति वृहद्भिरर्चिभिर्ह्रीयमानैर्मा हिᳫसीरात्मना प्रजा इत्येतत् * ॥ ९ ॥

स यदाच उत्सर्जेत् । अथैतद्यजुर्जपेदसुर्या वा ऽएषा व्वाग्याचस्य ता मेतच्छमयति ता मेतद्देवत्रा करोति ॥ १० ॥

यद्देवैतद्यजुर्जपति । यस्मिन्वै कस्मिंश्चाहिते-ऽच उत्सर्जति तस्यैव सा व्वाग् भवति तद्यदग्न्याहितेऽच उत्सर्जत्यग्नेरेव सा व्वाग् भवत्यग्नि मेव तद्देवा उपास्तुवन्नुपामहयंस्तथैवैन मय मेतदुपस्तौत्युप महयत्यक्रन्ददग्नि स्तनयन्निव द्यौरिति तस्योक्तो बन्धुः ॥ ११ ॥

स यदि पुरा व्वसत्यै व्विमुञ्चेत † । यनसे-ऽग्निः स्यादथ यदा व्वसत्यै व्विमुञ्चेत प्रागन उपस्थाप्योत्तरत उद्धत्यावोक्षति यचैन मुपावहरति तं दक्षिणत उदञ्च मुपावहरति तस्योक्तो बन्धुः ॥ १२ ॥

---

* 'इत्येतत्'—इति ग, घ ।

† 'विमुञ्चेत'—इति क, ग । विमुञ्चेत'—इति ख, ङ ।

अथास्मिन्त्समिध मादधाति। एतद्वा ऽएनं देवा ईयिवाꣳस मुपरिष्टादन्नेनाप्रीणन्नेतया समिधा तथैवैन मय मेतदीयिवाꣳस मुपरिष्टादन्नेन प्रीणा-त्येतया समिधा ॥ १३ ॥

प्र प्राय मग्निर्भरतस्य शृण्व ऽइति। प्रजा-पतिर्व्वै भरतः स हीदꣳ सर्व्वं बिभर्त्ति वि यत् सूर्यो न रोचते बृहद्भा इति वि यत् सूर्य-इव रोचते बृहद्भा इत्येतदभि यः पूरुं पृतनासु तस्थाविति पूरुर्ह नामासुररक्षस मास त मग्निः पृतनास्वभितस्थौ दीदाय दैव्यो ऽअतिथिः शिवो न इति दीप्यमानो दैव्योऽतिथिः शिवो न इत्ये-तत् स्थितवत्या व्वसत्यै ह्येनं तत् स्थापयति ॥ १४ ॥

अथातः सम्पदेव। समिधं प्रथमेनादधात्यु-द्यच्छत्येकेन प्रयात्येकेनाक्ष मेकेनानुमन्त्रयते स-मिध मेव पञ्चमेनादधाति तत् पञ्च पञ्चचिति-कोऽग्निः पञ्चऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ १५ ॥ ५ ॥

॥ इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् [८. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

रुक्मशिक्यपाशासन्दीसशिक्योखाग्निधारणम् ।
विष्णुक्रमस्य वात्सप्रोपस्थानं सप्तमे गतम् ॥
अथाष्टमेऽत्र ह्युख्याग्नेर्गार्हपत्यचयनार्थकम् ।
देवयजनदेशस्य प्रापणादिक मुच्यते ॥

तत्रोख्याग्नेर्गार्हपत्यं प्रति अनसा प्रापणं विधास्यंस्तदुपोद्घात माह— "वनीवाह्येताग्निम् विभ्रदित्याहुरित्यादिना *। अग्नि-चयनप्रदेशप्रापणीयाग्निं 'बिभ्रद्' यजमानो 'वनीवाह्येत' अनसा त मुख्याग्निं भृशं वाहयेत् 'इत्याहुः' पूर्वमहर्षयः। वहते-र्यङन्तस्याभ्यासस्य नीगागमश्छान्दसः।

केनाभिप्रायेणेति, त मभिप्रायं पूर्ववृत्तान्तमुल्लेखेन दर्शयति— "देवाश्चेति। ते 'देवाः' 'चक्रम् अचरन्' चक्रेणाचरन्नित्यर्थः। 'असुराः' तु 'शालम्' चक्रव्यतिरिक्तं साधनम् शालम्, तत् 'आसन्' तत्साधना अत्राभवन्नित्यर्थः। "ते देवाश्चक्रेण चरन्त एतत् कर्मापश्यन्निति। 'एतत्' उख्याग्निप्रणयनलक्षण मित्यर्थः। यस्माद् 'अपश्यन्' 'तस्मात्' 'पौरोडाशेषु' पुरोडाशसम्बन्धिषु

---

* "वनीवाहन मेतद् दीक्षासु यदेर्च्छेत्"—इति का० श्रौ० सू० १६. ६. २२। "वनीवाहन मिति मञ्ज्ञास्य कर्मणः, सा च संशय-च्छारार्था। तच्च दीक्षासु कर्त्तव्यम्, यदेच्छोपजायते महावीरकरण-यूपच्छेदन-वनीवाहनानि दीक्षासु क्रियन्ते. क्रमस्त्वेषाम: पाठा-भावात्"—इति तत्र कर्कः।

कर्मसु 'अनसः एव' शकटस्यैव 'यजूंषि' मन्त्राः सन्ति, तथा 'अग्नौ' अग्निचयनेऽपि 'अनसः' एव 'यजूंषि' ॥ १ ॥

इत्थ मुपोद्घात मुक्त्वा औपोद्घातिकं दर्शयति— "स यो वनीवाह्यत इति। अथ मनसा वाहयेत् तद्। वनीवाहनलक्षणेन 'कर्मणा' 'देवान् एति' देवाना माचरण मनुकरोतीत्यर्थः। तदेव व्याचष्टे— "देवं ह्यस्येति। व्यतिरेकं दर्शयति— "अथ यो न वनीवाह्यत इति। वनीवाहन मकृत्वा शालाया मेवाग्निं निष्पादयेत्, तदा 'असुर्यम्' तत् कर्म असुरेभ्यो हितं भवतीत्यर्थः ॥ २ ॥

इत्थं वनीवाहनं कर्त्तव्य मिति विधाय, तस्य प्रकारान्तरेण प्राप्ति माशङ्कते— "तद्धैक आहुः स्वयं वा एष इति। अग्नेर्भृशं वहन मेवापेक्षितम्। तत्र विष्णुक्रमणेनैव सवात्मप्रेण कृत मित्यभिप्रायः। "देवं वा अस्य तत् प्रयाण मिति। विष्णुक्रमरूपं प्रयाणं देवविष्णुभावेनाक्रान्तत्वात् अवसानस्य तादृक्त्व मपि तस्मादेव; वनीवाहनरूपं तु मानुष मेव ॥ ३ ॥

अस्त्वेवं विषयभेदेन प्रयाणभेदः, तथापि द्विविध मपि कर्त्तव्य मित्यत्र किङ्कारण मिति तद् दर्शयति— "प्रजापतिरेषोऽग्निरुभयम्वेतदित्यादिना। स्रष्टृस्रष्टव्ययोरभेदोपचारेण 'एतत् उभयम्' अपि 'प्रजापतिः' एव। तथा सत्युभयेन वात्सप्रेण विष्णुक्रमेण वनीवाहनेन चेत्युभयेन देवमानुषभेदेनोभयविध मपि 'रूपं संस्करोति'। अत उभय मप्यवश्य मनुष्ठेय मित्यर्थः।

उक्तार्थज्ञानपूर्वक मनुतिष्ठतः फल माह— "स ह वा एत मिति। "तस्मादिति। निगमनम् ॥ ४ ॥

अग्नेर्गार्हपत्यचयनदेशं प्रति प्रणयनप्रयोग माह— "स यद-

हरिति। यस्मिन्नहनि दीक्षां समाप्य, चितिप्रदेशं प्रति 'प्रयाणम् स्यात्', तदोख्याग्नेः 'उत्तरतः' प्राक् अनः उपस्थाप्य, अस्मिन् उख्याग्नौ 'समिधम्' आदध्यात्। तथाच कात्यायनः— "प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानं समिधाग्नि मिति"-इति *। एतत् प्रशंसति— "एतद्वा एन मिति। यथा लोके प्रयास्यन्तं भोजयित्वा प्रस्थापयति, तत्स्थानीय मिदं समिदाधान मिति स्तुतिः ॥ ५ ॥

तत्र "समिधाग्नि मिति मन्त्रः †। हे ऋत्विग्यजमानाः! 'समिधा अग्नि' 'दुवस्यत' प्रचरत, 'घृतैः' अतिथिभूत मग्निं 'बोधयत' प्रबुद्धं कुरुत। अथ चितिप्रदेशे गार्हपत्यभूतेऽस्मिन् 'हव्या' हवींषि 'आजुहोतन' सर्वतो जुहुत। तत्र दुवस्यते-त्येतद् व्याचष्टे— "समिधाग्निं नमस्यतेत्येतदिति। स्पष्ट मन्यत्। "बोधयतेति। यद् बोधलिङ्ग मस्ति, तस्य तात्पर्य माह— "इत्यार्थे ह्येन मेतद् बोधयतीति। 'इत्यार्थे' गमनार्थे ॥ ६ ॥

"अथैन मुद्यच्छत्युद् त्वेतीति। अनस उपरि उख्याग्निं स्थापयितु मूर्ध्वं धारयेत्। तच्च धारण मासन्दीसहितम् "आसन्दीक मुद्यम्य"-इति सूत्रात् ‡। चित्तिभिरित्येतद् व्याचष्टे— "एतद्वेष्वा मिति। 'एषां' देवानां 'चित्तिभिः' ज्ञानैरुद्धरणं कुर्वताम् 'तदा' उद्धरणकाले 'एतत्' उद्धरण मेव 'चित्तं' चेतव्यम् 'आसीत्'। 'तथैव' देववदेव यजमानोऽपि

* का० श्रौ० सू० १६. ६. १५।

† वा० सं० १२. ३०।

‡ का० श्रौ० सू० १६. ६. १६ क।

'चित्तिभिः' उद्धृतवान् भवति। अस्यापि यजमानस्य 'एतदेव' उद्धरण मेव चित्तं भवति। उत्तरार्द्धस्य स्पष्टार्थता माह— "यथैव यजुस्तथा बन्धुरिति॥

मन्त्रस्याय मर्थः *— हे अग्ने! 'त्वा' त्वाम् 'विश्वेदेवाः' 'चित्तिभिः' ज्ञानैः 'उद्धरन्तु'। स तथाविधस्त्वं 'नः' अस्माकं 'शिवो भव'। तथा 'सुप्रतीकः' शोभनाङ्गः 'विभावसुः' प्रभैकधनश्च॥

उद्धृतस्याग्नेरनसि स्थापने विशेष माह— "तं दक्षिणतः उदञ्च मादधातीति। 'दक्षिणतः' सकाशात् 'उदञ्चम्' उदङ्मुखम्। "दक्षिणतोऽनसि करोति"-इति सूत्रम् †। पूर्वोक्त मर्थवाद मुक्तेऽर्थेऽतिदिशति — "तस्योक्तो बन्धुरिति। "दक्षिणतो वा उदग् योनौ रेतः सिच्यते"-इत्येव मुक्त इत्यर्थः ‡। अन्यस्यां 'स्थाल्याम्' 'अपरं गार्हपत्यम्' अग्निं स्थापयित्वा 'आदधाति' अग्नेः पश्चाद्देशे स्थापयेत्। "स्थाल्यां गार्हपत्यं पश्चात्"-इति § हि सूत्रम्। यजमानस्याप्यारोहणं पाक्षिक मिति दर्शयति— "स यदि कामयतेति॥ ७॥

अनस्यनडुहोर्योजनं तत्क्रमश्चाह— "अथानड्वाहाविति ‖। 'एवम्' उक्तक्रमेण चेत् 'देवत्रा' देवेषु चितं भवति, 'इतरथा' सव्यं प्रथमं युनक्ति चेत् 'मानुषे' मनुष्ये, तद्योग्य मित्यर्थः। यजनदेशस्य यत्र कुत्र चित् अवस्थितं तत् आदौ प्राङ्मुखं याया-

---

* वा० सं० १२. ३१।

† का० श्रौ० सू० १६. ६. १६ स्व।

‡ ४ अ० २ ब्रा० १० क० ( २१३ पृ० ) द्रष्टव्यम्।

§ का० श्रौ० सू० १६. ६. १७।

‖ का० श्रौ० सू० १६. ६. १८।

दिति नियमं सार्थवादं विधत्ते— "स यां काञ्चेति। देवानां दिग्व्यवस्थाकाले अग्निना प्राग्-दिक्-परिग्रहात् "प्राची हि दिगग्नेरित्युक्तम् *। "प्राची दिगग्निर्देवतेति तैत्तिरीयकप्रसिद्धिः "प्राची हि"-इतिशब्देन द्योत्यते। तदनयः प्राक् प्रवर्त्तनम् ॥ ८ ॥

मन्त्रे पूर्वार्द्धस्य तात्पर्यं दर्शयन् अर्चिभिरित्येतस्यावयवार्थ माह— "प्रेदग्न इत्यादिना †। 'शिवेभिः अर्चिभिः' दीप्यमानैरिति। "ऋच दीप्तौ"-इत्यस्मात् ‡ अर्चिः-शब्द इति प्रतिपादितं भवति। तथैवोत्तरार्द्धस्य तात्पर्यं दर्शयन् भानु-शब्दस्यार्चिरर्थं इति व्याचष्टे— "बृहद्भिर्भानुभिरिति। 'तन्वा'-इत्यस्य व्याख्यान मात्मनेति, शरीरेणेत्यर्थः।

अथ मर्थः— 'अग्ने!' त्वं 'ज्योतिषान्' प्रभूतज्योतिष्कः, त्वं 'शिवेभिः' मङ्गलैः 'अर्चिभिः' उपलक्षितः सन् 'प्रयाहि' प्रगच्छ, तथा 'बृहद्भिः' 'भानुभिः' प्रकाशैः 'भासन्' भासमानः, तव स्वकीयेन शरीरेण 'प्रजाः' अस्मदीयाः 'मा हिंसीः' हिंसां मा कुरु ॥ ९ ॥

अश्वध्वनौ प्रायश्चित्त माह— "स यदेति। 'उत्सर्जेत्' ध्वनिं कुर्यात्, तदा 'एतद्' वक्ष्यमाणम् "अक्रन्दत्"-इति 'यजुः' 'जपेत्' §। अश्वसम्बन्धिन्या वाचः असुर्यत्वं कार्यजनकत्वाद् द्रष्टव्यम्। 'तां' वाचम् 'एतत्' एतेन आक्रन्ददग्निरितिपाठेन असुर्यत्व मपहाय 'देवत्रा' देवेषु करोति ॥ १० ॥

पुनः प्रशंसति— "यद्वेवैतद्यजुरिति। 'यस्मिन् कस्मिंश्चित्'

---

* ३ अ० ३ ब्रा० २ क० ( १७६ पृ० ) द्रष्टव्यम्।

† वा० सं० १२. ३२। ‡ तु० प० २२ धा०।

§ का० श्रौ० सू० १६. ६. २०।

शकटस्योपरि 'आहिते' 'अग्नः' उत्सर्जेत्। 'तस्यैव' आहितस्यैव सम्बन्धिनी भवति 'सा' वाक्। अथ 'अग्नौ' आहिते सति 'अग्नेरेव' 'सा' स्यात्। यस्मादेवं तस्मात् 'तत्' तेन मन्त्रपाठेन अन्यदीयत्वपरिहाराय 'अग्नि मेव' 'देवाः' 'उपास्तुवन्', 'उपामह्यन्' पूजित मकुर्वन्; तथैव 'एनम्' अग्निम् 'एतत्' एतेन 'उपस्तौति', 'उपमह्यति' च। अत्र मन्त्रं विधाय तदपेक्षितं ब्राह्मणं पूर्वोक्त मेवेत्यतिदिशति— "अक्रन्ददग्निरिति *। "तस्योक्तो बन्धुरिति। उखाप्रग्रहणप्रस्तावे † "क्रन्दतीव हि पर्जन्यः" —इत्यादिनोक्त इत्यर्थः ॥ ११ ॥

"स यदि पुरा वसत्यै विमुञ्चेतेति। 'वसत्यै' वसत्याः, अग्निचयनस्थानात् अर्वाङ् मध्ये मार्गे 'विमुञ्चेत' शकटम्, तदा 'प्राक् अनः' प्राग्देशे अनः 'उपस्थाप्य', 'उत्तरतः' तदुत्तरतः भूमिम् 'उद्धत्यावोक्षति'। 'यत्र' 'एनम्' अग्निम् 'उपावहरति' अधःस्थापयति, 'तं' दक्षिणतः 'उपावहरति'। "तस्योक्तो बन्धुरिति। दक्षिणत उदगर्थवाद उखार्थे मृत्पिण्डपरिग्रहणे ‡, "दक्षिणतो वा उदग् योनौ रेतः सिच्यत इत्यर्थः ॥ १२ ॥

यथा अग्निप्रणयनकाले तस्यान्तत्वेन समिदाधान मुक्तम् §, एव मेव अनस्थाप्यवत्वेन समिदाधानं कर्त्तव्य मित्याह— "अथाग्निम् समिध मादधातीति ‖। एतत् प्रशंसति— "एतद्वा

---

* वा० सं० १२. ३३।

† ७ अ० ३ ब्रा० २ क० (४०५ पृ०) द्रष्टव्यम्।

‡ ४ अ० ३ ब्रा० १० क० (२१३ पृ०) द्रष्टव्यम्।

§ इहैव पुरस्तात् ४४२ पृ० २२ पं० द्रष्टव्यम्।

‖ का० श्रौ० सू० १६. ६. १५।

एनं देवा ईयिवाᳬंस मिति। 'ईयिवांसं' चयनस्थानं गतवन्तम्, गमनप्राक्काल मपेक्ष्य 'उपरिष्टात्' इत्युक्तम्। 'अनेन'-इत्यस्य व्याख्यानम् 'एतया समिधा' इति। "तथैवैन मित्यादिकं सुगम-प्रायम्। अस्य सर्वस्यापि सूत्रे चाभोदाहरति— "उद्यतावोक्षित उत्तरतः समिदाधानं प्रप्रेति"-इति * ॥ १३ ॥

समिदाधानमन्त्रं विदधन् विभज्य व्याचष्टे— "प्र प्राय मित्या-दिना †। अय मर्थः— 'अयम्' अग्निः 'भरतस्य' प्रजापतेः वचनं 'प्रशृण्वे' प्रकर्षेण शृणोति, 'विरोचते' च 'सूर्यो न' सूर्य इव, 'बृहत्' महद् 'भाः' भासमानः 'रोचते' दीप्यते। यद्वा, 'भाः' भासा 'बृहत्' महान् 'यः' अग्निः 'पुरं' 'पृतनासु' सङ्ग्रा-मेषु 'अभितस्थौ' 'पराबभूव', स 'दैव्यः' देवसम्बन्धी, 'अतिथिः' अतिथिरूपः, 'शिवः' 'न' इव 'दीदाय' दीप्यते॥

भरतशब्दं व्याचष्टे— "प्रजापतिर्वै भरत इति। तदुपपा-दयति— "स हीद मिति। 'सूर्यो न' इत्यत्र 'न'-शब्द उपमार्थ इति व्याचष्टे— "वि यत् सूर्य इव रोचते बृहद्भा इत्येतदिति। तृतीयपादं व्याचष्टे— "पूरुर्ह नामासुररक्षस मासेति। सुर-विरोधी रक्षोऽभूत्। "अनसन्तान्नपुंसकाच्छन्दसि"-इति ‡ समासान्तः। स्पष्ट मन्यत्। अस्मिन् मन्त्रे 'पृतनासु तस्थौ'-इत्यत्र स्थितिः श्रूयते, तन्मुखेन मन्त्रं प्रशंसति— "स्थित-वत्येति ॥ १४ ॥

अथातः सम्पदेवेति। 'अथ' 'अतः' उपरिष्टात् 'सम्पदेव'

---

* का० श्रौ० सू० १६. ६. २१।

† वा० सं० १२. ३४।

‡ पा० सू० २. ३. ४।

उक्तानां मन्त्राणां सम्पत्तिरेव, न त्वनुष्ठेयं किञ्चिदुच्यत इत्यर्थः। तां सम्पत्तिं दर्शयति— "प्रथमेनादधातीत्यादिना। प्रथमेन "समिधाग्निं दुवस्यत"-इत्येतेन *। "उद्यच्छत्येकेनेति। "उदु त्वा विश्वे देवाः"-इत्येतेन †। "प्रयात्येकेनेति। "प्रेदग्ने ज्योतिष्मान्"-इत्येतेन ‡। अत्र मेकेनेति। "अक्रन्ददग्निरित्येतेन §। "समिध मेव पञ्चमेनेति। "प्र प्राय मग्निः"-इत्येतेन ‖। "पञ्चचितिकोऽग्निः"-इत्यादि, गतम् ॥ १५ ॥ ५ [ ८. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डेऽष्टमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

अथातो भस्मन एवाभ्यवहरणस्य। देवा वा ऽएतदग्रे भस्मोद्वपंस्तेऽब्रुवन्यदि वा ऽइद मित्थ मेव सदात्मान मभिसंस्करिष्यामहे मर्त्याः कुणपा अनपहतपाप्मानो भविष्यामो यद्यु परावप्स्यामो यद्-

* वा० सं० १२. ३० ।
† वा० सं० १२. ३१ ।
‡ वा० सं० १२. ३२ ।
§ वा० सं० १२. ३३ ।
‖ वा० सं० १२. ३४ ।

आग्नेयं बहिर्द्धा तदग्नेः करिष्याम उप तज्जानीत यथेदं करवामेति तेऽब्रुवंश्चेतयध्व मिति चितिमिच्छतेति व्वाव तदब्रुवंस्तदिच्छत यथेदं करवामेति ॥ १ ॥

ते चेतयमानाः । एतदपश्यन्नप एवैनदभ्यवहरामापो वा ऽअस्य सर्व्वस्य प्रतिष्ठा तद्यत्रास्य सर्व्वस्य प्रतिष्ठा तदेनत् प्रतिष्ठाप्य यदत्राग्नेयं तदग्नोऽधि जनयिष्याम इति तदपोऽभ्यवाहरंस्तथैवैनदय मेतदपोऽभ्यवहरति ॥ २ ॥

आपो देवीः । प्रतिगृभ्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभाऽउ लोक ऽइति जग्धं वा ऽए- तद्यातयाम भवति तदेतदाह स्वभिष्ट ऽएनल्लोके कुरुध्व मिति तस्मै नमन्तां जनय इत्यापो वै जनयोऽद्भ्यो हीदꣳ सर्व्वं जायते सुपत्नीरित्य- ग्निना वा ऽआपः सुपत्न्यो मातेव पुत्रं बिभृता- प्स्वेनदिति यथा माता पुत्र मुपस्थे बिभृयादेव मेनद्बिभृतेत्येतत् ॥ ३ ॥

अप्स्वग्ने सधिष्टवेति । अप्स्वग्ने योनिष्टवी-

त्येतत् सौषधीरनुरुध्यस ऽइत्योषधीर्ह्येषोऽनुरुध्यते गर्भे सञ्जायसे * पुनरिति गर्भे ह्येष सञ्जायते † पुनर्गर्भो ऽअस्योषधीनां गर्भो व्वनस्पतीनां गर्भो व्विश्वस्य भूतस्याग्ने गर्भो ऽअपा मसीति तदेन मस्य सर्व्वस्य गर्भं करोति ॥ ४ ॥

त्रिभिरभ्यवहरति । त्रिवृदग्निर्यावानग्निर्याव-त्यस्य मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां व्वाग्रेऽथैकेन द्विस्तु कृत्वोऽभ्य-वहरति तद्वै द्विपादाः पशवस्तैरेवैनदेतदभ्य-वहरति ॥ ५ ॥

अथापादत्ते । तद्यदत्राग्नेयं तदेतदद्भ्योऽधि अनयत्यनयानया वै भेषजं क्रियतेऽनयैवैन मेतत् सम्भरति प्रसद्य भस्मना योनि मपश्च पृथिवी मग्न ऽइति प्रसन्नो ह्येष भस्मना योनि मपश्च पृथिवीं च भवति सꣳसृज्य मातृभिष्ट्वं ज्योति-ष्मान् पुनरासद ऽइत्येतत् पुनरासद्य सदनं पुन-

---

* 'सन् जायसे'—इति ग ।

† 'सन् जायते'—इति ग ।

रूर्जा सह रय्येत्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्ये-तत् ॥ ६ ॥

चतुर्भिरपादत्ते । तद्वै चतुष्पादाः पशवस्तै-रेवैन मेतत् सम्भरत्यथो ऽन्नं वै पशवोऽन्नेनै-वैन मेतत् सम्भरति त्रिभिरभ्यवहरति तत् सप्त सप्तचितिकोऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरो-ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति ॥ ७ ॥

अपादाय भस्मनः प्रत्येत्य । उखाया मोप्योप-तिष्ठत ऽएतद्वा ऽएतद्ययथायथं करोति यदग्नि मपो-ऽभ्यवहरति तस्मा ऽएवैतन्निह्नुतेऽहिꣳसाया ऽआ-ग्नेयीभ्या मग्नय ऽएवैतन्निह्नुते बृहतीभ्यां यथै-वास्यैतदग्निर्व्वचा निबोधेत ॥ ८ ॥

बोधा मे ऽअस्य व्वचसो यविष्ठेति । बोध मे-ऽस्य व्वचसो यविष्ठेत्येतन्मꣳहिष्ठस्य प्रभृतस्य स्व-धाव इति भूयिष्ठस्य प्रभृतस्य स्वभाव इत्येतत् पीयति त्वो ऽअनु त्वो गृणातीति पीयत्येको-ऽन्येको गृणाति व्वन्दारुष्टे तन्वं व्वन्दे ऽअग्न ऽइति स्वन्दिता तेऽहं तन्वं वन्देऽग्न ऽइत्येतत् स

बोधि सूरिर्मघवा व्वसुपते व्वसुदावन् युयोध्य-
स्मद्द्वेषाꣳसीति यथैवास्माद् द्वेषाꣳसि युयादेव-
मेतदाह द्वाभ्या मुपतिष्ठते गायत्र्या च त्रिष्टुभा च
तस्योक्तो बन्धुः ॥ ९ ॥

तानि नव भवन्ति । नव दिशो दिशोऽग्नि-
र्नव प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा
तावत्तद् भवति ॥ १० ॥

अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वा ऽएष
एतं कामेभ्य आधत्ते तद्यदेवास्यात्र कामानां
व्यवच्छिद्यते ऽग्नावपोऽभ्यवक्रियमाणे तद्वैवैतत् सन्त-
नोति सन्दधात्युभे प्रायश्चित्ती करोति ये ऽएवा-
ग्नावनुगते तस्योक्तो बन्धुः ॥ ११ ॥

तानि दश भवन्ति । दशाक्षरा व्विराड्विरा-
डग्निर्दश दिशो दिशो ऽग्निर्दश प्राणाः प्राणा
अग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद् भवति
॥ १२ ॥ ६ ॥

॥ इति पञ्चमप्रपाठके षष्ठं ब्राह्मणम् [८. २.] ॥

यदुक्तं प्राक् "स यदहः सम्भिवत्स्यन् स्यात्, तदहः प्रातरुदित आदित्ये भस्मैव प्रथम मुद्वपतीति *, तद्विधातु माख्यायिकां वदन् प्रतिजानीते— "अथातो भस्मन एवाभ्यवहरणस्येति। मीमांसा क्रियत इति शेषः। 'देवाः' खलु 'अग्रे' पूर्वम् 'भस्म' अग्नेः सकाशात् 'उदवपन्' ऊर्ध्व मपागमयन्, अनन्तरं ते परस्पर मब्रुवन्— 'यदि वा' 'इदम्' उद्धृतं भस्म 'इत्थ मेव' अन्यत्र प्रक्षेप मकृत्वा अनुद्धृतप्रकारेणैव स्थितम् 'आत्मानम्' अग्नेः शरीरभूतं सन्तं, शरीरं कृत्वेत्यर्थः, 'अभिसंस्करिष्यामहे', तदा 'मर्त्याः' मरणधर्माणः, 'कुणपाः' भस्मनो निर्जीवत्वात् वय मपि 'कुणपाः' शवसदृशाः, 'अनपहतपाप्मानः' भस्मनः पापरूपत्वात् तत्संस्कारेणापि अनपहतपाप्मानः 'भविष्यामः'। 'यद्यु' यद्यपि 'परावप्स्यामः' दूरे प्रक्षिपामः, तदा 'अत्र' भस्मनि 'यत् आग्नेयम्', 'तत्' 'अग्नेः' सकाशाद् 'बहिर्धा' 'करिष्यामः'। एवं पक्षद्वयेऽपि दोषसम्भवात् अन्यतरपक्ष मनाश्रयमाणाः 'यथेदं करवाम' 'तत्' प्रकारम् 'उपजानीत' 'इति ते अब्रुवन्' इति सम्बन्धः।

एव मुक्त्वा ते पुनरेव मब्रुवन्, कि मिति— "चेतयध्व मितीति। तैः केनाभिप्रायेण चेतयध्व मित्युक्त मित्याकाङ्क्षायां श्रुतिः तटस्था सती ब्रूते— "चिति मिच्छतेति वाव तदब्रुवन्निति। 'चितिः' ज्ञानम्, तत् 'इच्छत' 'इति' एवम् 'अब्रुवन्' देवाः। पूर्वोदित मुपतज्जानीध्वेतदनुसारेण वाक्येनाभिमृशति— "तदिच्छत यथेदं करवामेतीति ॥ १ ॥

---

* इहैव ५ प्र० ४ ब्रा० १४ क० ( ४२४ पृ० ) द्रष्टव्यम्।

"ते चेतयमाना इति। कर्त्तव्यविषये बुद्धिं प्रक्षिपन्तः 'एतत्' 'अपश्यन्'। एतच्छब्दार्थ माह— "अप एवैतदिति *। अप्सु प्रक्षेप मेवापश्यन्नित्यर्थः ; 'अस्य सर्वस्य' जगतः अद्भ्य उत्पन्नत्वात्, अनूपजीवनीयत्वाच्च आपः 'प्रतिष्ठा'। 'तत्' तस्मात् 'यत्र' अप्सु 'अस्य सर्वस्य' 'प्रतिष्ठा', 'तत्' तत्र 'एनत्' भस्म, 'प्रतिष्ठाप्य', 'यत्' 'अत्र' जलस्थे भस्मनि 'आग्नेयम्' अस्ति, पुनः 'तत्' 'अद्भ्यः' सकाशात् उत्पादयिष्यामः 'इति' एवम् अपश्यत्। स्पष्ट मन्यत् ॥ २ ॥

इदानीं मप्सु भस्मप्रक्षेपमन्त्रं विधाय व्याचष्टे— "आपो देवीः प्रतिगृभ्णीतेत्यादिना †। हे 'आपः' 'देवीः' द्योतमानाः 'एतत्' चितं 'भस्म' 'प्रतिगृभ्णीत' स्वीकुरुत। स्वीकृत्य च 'स्योने' सुखकरे, 'सुरभौ' शोभनपरिमलयुक्ते 'लोके' स्थाने 'कृणुध्वं' कुरुत। 'तस्मै' भस्मरूपायाग्नये 'सुपत्नीः' शोभनपतिकाः 'जनयः' सर्वस्योत्पादयित्र्यः आपः 'नमन्ताम्' प्रह्वीभवन्तु। हे अब्देवताः ! 'माता पुत्र मिव' 'अप्सु' युष्मासु 'बिभृत' धारयत ॥

उत्तरार्द्धे "सुरभौ कृणुध्वम्"-इत्यभिधानस्य तात्पर्य माह— "जग्धं वा एतदिति। उदके निमग्न मेतत् भस्म नाजग्धं भवति, 'एतद्' 'यातयामं गतरसं 'भवति'। तस्मात् एतमन्त्रवाक्य माह— 'सुरभिष्ठे' अतिशयेन सुरभौ लोके 'कृणुध्वम्'। तथा सति अयातयाम भवति। 'जनयः'-इति व्या-

---

* का० श्रौ० सू० १६. ६. २६।

† वा० सं० १२. ३५।

चष्टे — "आपो वै जनय इति । तदेव समर्थयते— "अद्भ्यो हीद मिति । सुपत्नीरित्येतद् व्याचष्टे -- "अग्निना वा आपः सुपत्न्य इति । "मातेवेति , अस्य ब्राह्मणं स्पष्टम् ॥ ३ ॥

भस्माभ्यवहरणे द्वितीयं मन्त्रं * विधाय प्रशंसति— "अप्स्वग्न इत्यादिना † । हे 'अग्ने' 'तव' 'अप्सु' 'सधिः' सहस्थानम् , तव योनिरित्यर्थः , इदानीं भवति ; पश्चात्तु 'ओषधीः' त्वया परिपच्यमानाः 'अनु' त्व मपि ताभिः 'रुध्यसे' प्रतिबध्यसे , तत्र निरुद्धो भवसीत्यर्थः ; पुनश्च अरण्योः 'गर्भे' वर्त्तमानः 'सन्' पुनः 'जायसे' । एवं सर्वत्र व्याप्त इति स्तुतिः ।

सर्वपादे 'सधि'-शब्देन योनिर्विवक्षित इति व्याचष्टे— "अप्स्वग्ने योनिष्टवेत्येतदिति । उपरितनपादद्वयस्य ब्राह्मणं स्पष्टम् ॥

तृतीयमन्त्रं विधाय ‡ स्पष्टार्थत्वात् सङ्क्षेप तात्पर्यं दर्शयति— "गर्भो असीत्यादिना , "तदेन मस्य सर्वस्य गर्भं करोतीत्यनेन । मन्त्रार्थस्तु स्पष्टः § ॥ ४ ॥

भस्माभ्यवहरणमन्त्राणां त्रित्वं प्रशंसति— "त्रिभिरभ्यवहरति त्रिवृदग्निरित्यादिना । अग्नेस्त्रिवृत्त्वं रुद्रशर्वपशुपत्याद्यष्टमूर्त्ति मनुक्रम्य श्रूयते—"तान्येतान्यष्टावग्निरूपाणि कुमारो नवमः सैवाग्नेस्त्रिवृत्तेति ‖ । "मृदं शुष्कापमूषसिकत मित्यादिना नव

---

* वा० सं० १२. ३६ ।

†, ‡ का० श्रौ० सू० १६. ६. २७ ।

§ वा० सं० १२. ३७ ।

‖ पुरस्तात् ६प्र० ३ब्रा० १८ क० (४३ पृ० ) द्रष्टव्यम् ।

इत्याद्युपक्रम्य , "ता वा एता नव सृष्टय इय मसृज्यत तस्मा-
दाहुस्त्रिवृदग्निरिति"–इति च प्रदर्शितम् * ॥

मन्त्रत्रयेणापि सकृद् भस्मप्रक्षेपप्रसक्तावाह— "एकेनाग्रेऽथ
द्वाभ्यां द्वाभ्यां वाग्रेऽथैकेनेति † । उक्तप्रकारान्तरशङ्कां निरा-
चष्टे— "द्विस्तु कृत्वोऽभ्यवहरतीति । 'तु'-शब्दः पक्षं व्यावर्त्त-
यति । सर्वथा द्विःकृत्वोऽप्स्वभ्यवहरेत् , न त्वेकैकेन मन्त्रेण
त्रिःकृत्वः । "तद् ये द्विपादा इत्याद्यर्थवादः स्पष्टः ॥ ५ ॥

भस्मनः पुनरीषद्भस्मादातव्य मिति विधाय प्रशंसति— "अथा-
पादत्ते तद्यदत्रेति ‡ । 'अथ' प्रक्षेपानन्तरम् 'अत्र' प्रक्षिप्ते
भस्मनि । 'अद्भ्योऽधि'-इति, अयं पञ्चम्यर्थानुवादी । 'आग्ने-
यम्' अंशम् 'अद्भ्यः' उत्पादितवान् भवति । 'अनया' इति
अपादानसाधना अनामिका निर्दिश्यते । "अनयैवेति । कोऽयं
नियम इत्यत आह— "अनया वै भेषजं क्रियत इति ॥

मन्त्र माह— "प्रसद्येति § । हे भस्मरूप अग्ने ! त्वं
'भस्मना' भस्मरूपेण 'आत्मना' 'योनिम्' तव योनिस्थानीयाः
'अपश्च पृथिवीञ्च' 'प्रसद्य' प्रसन्नो भूत्वा , तथा 'मातृभिः'
अद्भिः 'संसृज्य' 'ज्योतिष्मान्' प्रकृष्टज्योतिः सन् 'पुनरासदः'
पुनरागच्छ । पूर्वार्द्धे 'प्रसद्य'-पदस्य प्रसन्नतार्थतया योनि मप
इति सामानाधिकरण्यं विवक्षित मिति व्याचष्टे— "प्रसन्नो ह्येष

---

* पुरस्तात् १. १. १८, १६ ( ६ पृ० २ पं० ) द्रष्टव्यम् ।

† "पलाशपुटेनापो देवीरित्येकया , ततो द्वाभ्याम् , आद्याभ्यां वा
पूर्वम्"—इति का० श्रौ० सू० १६. ६. २६ , २७ , २८ ।

‡ का० श्रौ० सू० १६. ६. २६ ।

§ वा० सं० १२. ३८ ।

भक्षमेत्यादिना । 'संसृज्य'-इत्यस्य सङ्गतिरर्थ इति व्याचष्टे—"सङ्गत्य मातृभिरिति । उत्तरमन्त्रत्रयस्य व्याख्येयार्थत्वाभावात् प्रतीक मुपादाय सङ्क्षिप्य तात्पर्य माह— "पुनरासद्येति प्रथमः, "पुनरूर्जेति द्वितीयः, "सह रय्येति तृतीयः ॥ ६ ॥

. उत्तरमन्त्रद्वयस्य पृथग्विनियोगशङ्कापनोदनायाह— "चतुर्भिरपादत्त इति *। "तद् ये चतुष्पादाः"-इत्यादि स्पष्टम् । भस्मापादानमन्त्रगतां सङ्ख्याम् अभ्यवहरणमन्त्रगतया सङ्ख्यया समुच्चित्य प्रशंसति— "त्रिभिरभ्यवहरति, तत्सप्त, सप्तचितिकोऽग्निरित्यादिना । "षड् चितय इष्टकाः प्रचिताः, सप्तमी तु विकर्षीश्च स्वयमातृण्णाश्चोपदधाति, हिरण्यशकलैः प्रोक्षति, अग्नि मभ्यादधाति, सा सप्तमी चितिरिति † श्रुतत्वात् सप्त चितयः 'सप्तचितिकोऽग्निः' । "यावत्यस्य मात्रेति । चितिगतसप्तसङ्ख्यारूपा मात्रेत्यर्थः । अप्सु प्रासनम् पुनस्तत एवादानञ्च सूत्रकारः स्पष्ट माह— "पलाशपुटेनापो देवीरित्येकया, ततो द्वाभ्याम्, आद्याभ्यां वा पूर्वम्, अनामिकया प्रास्तादादत्ते प्रसद्येति"-इति ‡ ॥ ७ ॥

"अपादायेति । 'भस्मनः' सकाशात् 'अपादाय', पुनः 'उखायाम् ओप्य' 'उपतिष्ठते' § । उपस्थान मन्त्रैः कोपशान्तये,

---

* वा० सं० १२. ३६, ४०, ४१, ४२ ।

† उपरिष्टाच्छ्रुत मष्टमं काण्डं समग्र मेव चितिप्रकरणम्; इहापि पुरस्तादेतद् विरूपम्यस्तम् ( ३१८, ३३३ पृ० ) ।

‡ का० श्रौ० सू० १६. ६. २६—२८ ।

§ का० श्रौ० सू० १६. ६. ३० । बोधा मे इति द्वाभ्यामेति तत्र तात्पर्यं वेदितव्यम् ।

प्रायश्चित्तीकरोति सर्वेभ्यो वा एष इत्यादिना * व्याख्यात-प्रायम्। "अग्न्यावनुगते"–इति तत्र, अत्र तु "अग्न्यावपोह्यव-ह्रियमाणे"–इति विशेषः। प्रायश्चित्तमन्त्रः † तत्प्रकारश्च "स समिधाज्यस्योपहत्यासीन आहुतिं जुहोति विश्वकर्मणे स्वाहेत्यादि-नोक्तत्वात् ‡ नात्राभिधान मिति द्रष्टव्यम्। "य एवाग्न्यादनुगते तस्योक्तो बन्धुरिति। "अथ यदि गार्हपत्योऽनुगच्छेत् अरणी वाव स गच्छतीत्यादिनोक्त इत्यर्थः § ॥ ११ ॥

पूर्वोक्तमन्त्रगतनवसङ्ख्यया सह प्रायश्चित्तमन्त्रसङ्ख्यां समुच्चित्य प्रशंसति— "तानि दश भवन्ति दशाक्षरा विराडित्यादिना। मन्त्रगतदशसङ्ख्याद्वारेणाग्निरपि विराट् चीयमानस्याग्नेर्विराजात्म-कत्वाद्वा अर्ध्वाधोदिगपेक्षया दिशो दशनामभिर्दशेति श्रुतेः तद-पेक्षया 'प्राणाः' अपि 'दश'। गतं मन्यत् ॥ १२ ॥ ६ [ ८. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डेऽष्टमाध्याये द्वितीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ८ ॥

---

* पुरस्तात् ६ अ० ४ ब्रा० ११ क० ( ३५६ पृ० ) द्रष्टव्यम्।
† "विश्वकर्मणे स्वाहा"—इत्येष एव, वा० सं० १२. ४३. २।
‡ पुरस्तात्५ ६ अ० ४ ब्रा० १२ क० ( ३५६ पृ० ) द्रष्टव्यम्।
§ पुरस्तात् ६ अ० ४ ब्रा० १२ क० ( ३५६ पृ० ) द्रष्टव्यम्।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ सर्वगर्भम् ,
सप्ताब्धीन् पञ्चसीरीं स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां हस्तवाजिद्विपसहितरथौ सायणः शिक्षयार्थः ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः ,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
पाञ्योर्त्थं प्राज्यजन्मा लवणज मनघः शार्करं शार्वतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसाच्छिक्षयार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
षष्ठकाण्डेऽष्टमाध्यायः समाप्तः ॥ ८ ॥

---

॥ इति षष्ठकाण्डे पञ्चमः प्रपाठकश्च समाप्तः † ॥

---

* अयञ्चाष्टौष्यन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्यः ।

† इत उपर मिह ग-घ-पुस्तकयोः "कण्डिकासङ्ख्या १०२"—इति, क-पुस्तकन्त्वेतद्ब्राह्मणीयसप्तमकण्डान्तम् , ख-पुस्तक मध्ये-तद्ब्राह्मणीयतृतीयकण्डान्तम् , ङ-नामपुस्तकेऽपि कण्डीसङ्ख्या नोल्लि-खितेति । तत्र १ब्रा० २८ कं०, २ब्रा० १६ कं०, ३ब्रा० १६ कं०, ४ब्रा० १५ कं०, ५ब्रा० १५ कं०, ६ब्रा० १२ कं०; तदासां बहूनाम-यास्मिन् प्रपाठके १०२ कण्डिकाः सम्पद्यन्ते ।

॥ इति उखासम्भरणं नाम षष्ठं काण्डं * समाप्तम् ॥

---

* अत्र षष्ठे काण्डे ब्राह्मणसंख्या सप्तविंशतिः । तत्र प्रथमे प्रपाठके ४, द्वितीये ४, तृतीये ७, चतुर्थे ६, पञ्चमे ६ । एषु ब्राह्मणेषु कण्डिकाः ५३० । तत्र प्रथमे प्रपाठके ११०, द्वितीये १०४, तृतीये ११४, चतुर्थे १००, पञ्चमे १०२ । तदेतत्सर्वमङ्कलनयात्र काण्डे २७ ब्राह्मणानि भुक्तानि, तत्र ५३० कण्डिकाः सन्तीति सिद्धम् ॥

## ॥ अथ मूलशुद्धिपत्रम् ॥

| अशुद्धम् | | शुद्धम् | | प्र० | अ० | क० | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|---|---|---|---|
| पुरुषात् | ... | पुरुषाद् | ... | १. | १. | १०. | ... | ४ | ११ |
| गर्भ्यर्भवत् | ... | गर्भ्यभवत् | ... | १. | २. | ११. | ... | १८ | २ |
| त्वङ्माऽस्मस्थि | | त्वङ् माऽस मस्थि | | १. | २. | १७. | ... | १९ | १४ |
| देवा | ... | देवा- | ... | १. | २. | २१. | ... | २० | १५ |
| ऽग्नि | ... | ऽग्निं | ... | १. | २. | २४. | ... | २१ | ११ |
| देवाश्च | ... | देवाश्च देवाश्च | | १. | २. | २७. | ... | २२ | १० |
| माघायरति | ... | माघारयति | ... | २. | १. | ५. | ... | ८७ | ६ |
| नियुत्व० | ... | नियुत्व० | ... | २. | १. | १४. | ... | ९० | ९ |
| ०देकां न निऽग्र० | | देकान्निऽग्रा० | | २. | १. | ३७. | ... | ९७ | २ |
| रेता | ... | रेतो | ... | ३. | १. | १६. | ... | १८२ | १० |
| छन्दः स्वे० | ... | छन्दःस्वे० | ... | ३. | २. | ६. | ... | २०२ | १३ |
| मामदत् | ... | मामदत् | ... | ३. | ४. | ४. | ... | २२१ | १४ |
| तस्यात्तो | ... | तस्योक्तो | ... | ३. | ४. | ५. | ... | २२२ | ३ |
| मानधीभ्य० | ... | मानुधीभ्य० | ... | ३. | ५. | ४. | ... | २३० | १३ |
| ऐतस्यै | ... | एतस्यै | .. | ३. | ७. | १५ | ... | २६४ | ७ |
| सम्पद्यमा | ... | सम्पद्यमा | ... | ४. | ३. | १४. | ... | ३०९ | १५ |
| तद्देवैतत् | ... | तद्देवैतत | ... | ४. | ६. | ११. | ... | ३५९ | ८ |
| बन्ध० | ... | बन्धु० | ... | ५. | १. | ७. | ... | ३७५ | ३ |
| अख्वदिति | ... | अख्वदिति | ... | ५. | ३. | २. | ... | ४०६ | १ |
| प्रायायाथ | ... | प्रयायाथ | ... | ५. | ४. | ९. | ... | ४१२ | १० |

| अशुद्धम् | | शुद्धम् | | प्र० | ब्रा० | का० | | पृष्ठे | पङ्क्तौ |
|---|---|---|---|---|---|---|---|---|---|
| ह्यते | ... | वाह्यते | ... | ५. | ५. | २. | ... | ४३६ | ११ |
| ०ह्येतैव | ... | ०ह्येतैव | ... | ५. | ५. | ४. | ... | ४३७ | ९ |
| ह्येन | ... | स्त्येन | ... ... | ५. | ५. | ६. | ... | ४३८ | २ |
| मर्व्यं | ... | मर्व्यं | ... ... | ५. | ५. | १४. | ... | ४४० | ६ |

| | Rs. | As. |
|---|---|---|
| Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... | 3 | 12 |
| *Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 5 | 0 |
| *Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... | 2 | 8 |
| Nityacārapaddhati Fasc, 1-7 (Text) @ /10/ each ... ... | 4 | 6 |
| Nityacraāpradiph, Fasc. 1-8 @ /10/- ... ... ... | 5 | 0 |
| Nyāyabindutikā, Fasc 1 ... ... ... ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 2-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... | 5 | 0 |
| Padumawati, Face. 1-5 @ 2/ ... ... ... ... | 10 | 0 |
| Paricista Parvan, Fasc. 3-5 @ /10/ each ... ... ... | 1 | 14 |
| Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Ditto (English) Part II Fasc 1, @ 1/- ... ... | 1 | 0 |
| Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ ... ... ... | 1 | 0 |
| *Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8; @ /10/ each ... ... ... | 19 | 6 |
| Sānkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... | 1 | 4 |
| Shaddarsana-Samuccaya, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... | 3 | 12 |
| Sucruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 ... ... ... | 2 | 8 |
| *Taittereya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... | 11 | 14 |
| * Ditto Brāhman, Fasc. 6-25 @ /10/- ... ... | 12 | 8 |
| Ditto Prātisākhya, Fasc. 1-3 @ /10/ ... ... | 1 | 14 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 6-19 @ /10/ each ... ... | 6 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9: Vol. II, Fasc. 2-10; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... | 23 | 12 |
| Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... | 1 | 14 |
| Trikāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... | 1 | 14 |
| Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... ... | 6 | 0 |
| Vallāla Carita, Fasc. 1 ... ... ... ... | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7, @ /10/ each | 6 | 14 |
| Vidhāno Pārigāt, Fasc 1-8: Vol II Fasc 1 ... ... ... | 5 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| V hat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| *Tibetan Series.* | | |
| Pag-Sam Thi Śiā, Fasc. 1-4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... | 14 | 0 |
| Rtogs brjod dpag bkhari Śiā (*Tib. & Sans.* Ahadān Kalpalatā,) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-5 @ 1/ each ... ... ... | 11 | 0 |
| *Arabic and Persian Series.* | | |
| Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... | 8 | 2 |
| Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each ... ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... | 34 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-4 @ 1/4/ ... | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... | 11 | 14 |
| Catalogue of Arabic Books and Manuscripts 1-2 ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... | 3 | 0 |
| Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... | 5 | 10 |
| Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 ... ... | 31 | [illegible] |

The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Farhang-i-Rashidi, (Text) Fasc. 1-14 @ 1/8/ each ... Rs 21 0
Fihrist-i-Tusi, or Tusy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4 0
Futuh-ush-Sham of Waqidi, Fasc. 1-9 @ /10/ each ... ... 5 10
Ditto of Azadi, (Text) Fasc. 1-4 @ /10/ each ... ... 2 8
Haft Asman, History of the Persian Masnawi, Fasc. 1. @ /12/ ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbalnamah-i-Jahangiri, (Text) Fasc. 1-3 @ /10/ each ... ... 1 14
Isabah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51 0
Maasir-ul-Umara, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. I.I. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/ each ... ... 35 0
Maghazi of Waqidi, (Text) Fasc. 1-5 @ /10/ each ... ... 3 2
Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... ... 9 6
Muntakhabu-t-Tawarikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'asir-i-'Alamgiri, Fasc. 1-6 @ /10/ each ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... 0 10
Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 @ /12/ each ... 1 8
Riyazu-s-Salatin Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5 0
Tabaqat-i-Nasiri, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... 1 0
Tarikh-i-Firuz Shahi of Ziyau-d-din Barni Fasc. 1-7 @ /10/ each ... 4 6
Tarikh-i-Firushahi, of Shams-i-Siraj Alif, Fasc. 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Tuzuk-i-Jahangiri, (English) Fasc. 1 ... ... ... 1 0
Wis o Ramin, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3 2
Zafarnamah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches, Vols. XIX and XX @ 10/ each ... ... 20 0
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members and Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... 4 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Mahabharata, Vols. III and IV, @ 20/ each ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Koros ... ... ... 10 0
11. Ditto Grammar ,, ,, ... ... ... 8 0
12. Kacmiracabdamrta, parts I and II @ 1/8/ ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmir, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... 4 0
15. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi and edited with notes by Major D. C. Phillott. ... ... 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

BOOKS ARE SUPPLIED BY V.-P.-P.